-इति, "यास्क ऋषिरुदारधीः"-इति (२३ पृ०) च ? अत्र ब्रूमः— तत्तु महाभारतकारस्य स्वस्य यथा ऋषित्वं तथैव पूजनीयत्वापरपर्यायक मेव; तादृश ऋषित्वद्यापि वर्त्तत एवेति। वस्तुतो मन्त्रद्रष्टृत्वेनैव म्रादिवसिष्ठादीना मृषित्वं मुख्यम्; तादृशर्षित्वन्तु ताण्ड्यादीनां ब्राह्मणप्रवक्तृणा मपि नास्ति; तत् महाभारतरामायणादिकर्तॄणान्तु कथा दूरपराहतैव। तत्तुल्यत्वेन च ऋषित्व द्वितीयम्; तदेवाह महाभाष्ये भगवान् पतञ्जलिः—

"न तावदनृषिः कश्चित् स्मर्यते कल्पसूत्रकृत्।

कर्तृत्वं यद्दपौणान्तु तत् सर्व मन्त्रकृत् समम् (१.३.१०.)"-इति।

तदेवं द्वितीय मृषित्वम्, ब्राह्मणभागप्रवक्तृणाम् अनुब्राह्मणप्रवक्तृणाम्, ब्राह्मणान्तर्गताना किञ्च प्रायोलुप्ताना— कल्पादिवेदाङ्गशास्त्राणां प्रवक्तृणाम्। ईदृशर्षित्व मपि नास्ति तेषा मद्यप्रचलितेतन्महाभारतकारादीनाम्। बहुज्ञत्वात्, बहुमानत्वादितत्वादरातिशय्यप्रकाशकवचन मिदम् "अय मृषिः"-इति यत्र प्रयुज्यते, तस्य त्वृषित्वं पूजनीयत्वापरपर्यायकं तृतीयम्। तादृशर्षित्व मेव व्यासवाल्मीक्यादीनाम्। तत् तार्त्तीयीक मृषित्व मेव यास्कस्याप्य स्थित मिति मन्यते चेन्न तत्रास्माकं ममन्मतिः; परं मुख्य मृषित्वं तु तस्य नासीदेव, द्वितीयर्षित्व मपि न सम्भाव्यते।

अपि च गणपाठे शिवादिषु (४. १. ११२.) यस्कपाठदर्शनात्तद मपि ज्ञायते,— यन्नामतोऽस्य नाम यास्क इति, तस्याप्येतदादिपुरुषस्य नासीत् ऋषित्व मिति; सति हि तस्य ऋषित्वे ऋष्यण्वा (४. १. ११४.) एव यास्केति सिद्धौ तत्पाठफल माकाशकुसुमायित मेव स्यात्। अत एव "यास्को मुनिः"-इति दृश्यते मुग्धबोधादौ; न तु "यास्क ऋषिः"-इति।

यास्कस्य मुख्यर्षित्वविचारस्तु दूरे आस्ताम् ,— विकृतिवल्लीकारः खलु यास्कपूर्वजो व्याडिर्याह स्वगुरोः शौनकस्य प्रातिशाख्यकारस्यापि मुनित्व मेव। तथाहि— "नत्वादौ शौनकाचार्यं गुरुं ०—० मुनीन्द्रम्"-इति (वि० १, २)। "पुनः किं विशिष्टम् ? 'मुनीन्द्रम्' मननशीला मुनयः, तेषु श्रेष्ठम्"-इति च तत्र तट्टीकाकारः। तथा पाणिनि कात्यायन-पतञ्जलीनामपि मुनित्व मेव सर्वत्र व्यवहृतं गम्यते, न त्वार्षित्वम्। तथा हि— "मुनित्रयं नमस्कृत्य"-इत्याह दीक्षितः; किञ्च "योगेन चित्तस्य पदेन वाचा मलं शरीरस्य तु वैद्यकेन। योऽपाकरोत् तम् प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि"-इत्यत्रापि पतञ्जलेर्मुनिप्रवरत्व मेव स्मर्यते। तथा "तत्र हृदिरादैजित्याद्यध्यायाष्टकात्मकं महेश्वरप्रसादेन भगवता पाणिनि नैव प्रकाशितम्। अत्र कात्यायनेन मुनिना पाणिनीयसूत्रेषु वार्त्तिकं विरचितम्, तद्वार्त्तिकस्योपरि च भगवता पतञ्जलिना महाभाष्य मारचितम्। तदेतत् त्रिमुनि व्याकरण वेदाङ्ग माहेश्वर मित्याख्यायते"-इति चाह प्रस्थानभेदकृन्मधुसूदनोऽपि।

वेदाङ्गेषु षट्सु, यास्तु शिक्षा. तैत्तिरीयब्राह्मणादौ श्रूयन्ते, तासा मेव त्वार्षिकत्वम्; छन्दोविधानानि च यानि सामवेदीयानुब्राह्मणादौ श्रूयन्ते, तेषा मेव त्वार्षिकत्वम्; व्याकरणानि च पदपाठाद्यात्मकानि पुरा स्थितानि, यानि चेदानीं पाणिनीयार्कप्रभातोऽदृश्यानि,—अहनि सहस्ररश्मिप्रभानस्तारकामण्डलानीव किञ्च शाकटायनीयर्क्तन्त्रादीनि च यानी दानी मपि ज्योतिरिङ्गणा इव वरीवर्त्तन्ते, तेषा मार्षिकत्व मेव, निरुक्तानि च यानि ब्राह्मणेषु दृश्यन्ते, अनुब्राह्मणेषु च स्थिता मीत्यनुमीयन्ते,

निदानसूत्रेषु चोपलभ्यन्ते, शाकपूण्यादिकृतान्यासन्निति च यास्कवचनादितोऽवगम्यन्ते, तेषां ऋषिकृतत्व मेव; पैङ्ग्यादीनां मतिप्राचीनतमकल्पसूत्राणान्तु प्रायो ब्राह्मणसमकालिकत्व मेव पाणिनिशासनादिभिरवगम्यते, तत्तेषां ऋषिकृतत्वे तु नास्त्येव सन्देहावसरः। यतश्च पैङ्ग्यादीनि प्राचीनतमानि कल्पसूत्राणि चिरादेव ब्राह्मणतः पृथगेव प्रोक्तानि, प्रायस्तत्समकालिकानि चेति तेषा मार्षत्वं निर्विवाद मेव; अतो भाष्योद्धृतायां सङ्ग्रहकृतकारिकायां 'न ऋषिः कल्पकृत्'–इति कल्पकृता मेवार्षित्वयद्वा निवारिता; न हि तत्रोक्तं श्रूयते 'न ऋषिः वेदाङ्गकृत्'–इति। एवं हि निष्पन्न मेतत्,— ब्राह्मणानुब्राह्मणान्तर्गतानां निरुक्तादीनां वेदाङ्गाना मातिदेशिकार्षत्व मस्त्येव; शाकपूण्यादिकृतानाञ्च स्यात् तथैव, परं यास्कोपज्ञस्य यत्स्यार्षत्वं तु महाभारतादिग्रन्थाना मिव तात्त्विक मेवेति।

विकृतिवल्ल्युदाहृतं यत् पाणिनिपरजस्यापि व्याडेः ऋषित्वाख्यानं दृश्यते— "व्याडिनैव महर्षिणा"–इति (१. ४ श्लो०), तदपि तथाभिप्रायेणैव; तेषां तु नवे मन्त्रादिकर्तृयोग्यतैवार्षित्वे निदानम्। तादृशी योग्यता तु नूतनवेदाङ्गानां तदङ्गानाञ्चापि कर्तृणां पाणिनि व्याडि शौनक यास्कादीना मासीदेवेति तेषा मप्यृषित्वं मन्तव्य मेवेति भवेत्तदपि तात्त्विक मेव; नद् भवतु नामान्यापि न नोऽत्र विवादः। ऋक्प्रातिशाख्यकृत् शौनकोऽपि तात्त्विक मार्षत्व मेवाभिप्रेत्योक्त मेवम्— "छन्दश्च वेदाङ्गमनित्य मार्षम्" इति–(पा०सू०३.२.६.)। यदि च व्याडेर्मुख्यर्षित्वे तु क्रोड्यादिगणे व्याडिशब्दस्य पाठो वैयर्थ्य मेवापद्येत; "क्रोड्यादिभ्यश्च (पा० ४. १. ८०.)"–इतिसूत्रस्य ज्ञानार्थविषयत्व मेव

निर्णयात्; तस्य हि "अग्निक्षीरनार्षेयो:॰ (४. १. ९८.)"-इत्येतत्सूत्रीयप्रपञ्चभूतत्वात्। अत एव "गोत्रावयवात् (पा॰ ४. १. ७९.)"-इति सूत्रस्य भाष्ये — "अष्टाशीति सहस्राण्यूर्द्ध्वरेतसा मृषीणा बभूवु', तत्रागस्त्याष्टमै: ऋषिभि: प्रजननोऽभ्युपगत:, तत्र भवतां यदपत्यं तानि गोत्राणि, अतोऽन्ये गोत्रावयवा: ।॰—॰। कथं येभ्य: अगुरूपोत्तमेभ्य इष्यते? शिवन्तु रौढ्यादिपूपसङ्ख्यानात्। ॰—॰। के पुनरौढ्यादय:? ये क्रौड्यादय:"-इत्याह भगवान् पतञ्जलि:। तदेतत्सार मेवाक्रष्योक्तं दीक्षितेन सिद्धान्तकौमुद्याम्— "अगुरूपोत्तमार्थोऽनभिजयदादिष्य:"-इति; न चोक्तं तेन तत्रापार्थेयेति। यद्यर्षिरपि कश्चिद् व्याडि: स्यात्, तर्हि तदपत्यं न भवेत् 'व्याड्या' इत्यतोऽत्र क्रौड्यादिगणेऽस्य गणपाठकार भाष्यकारादिभि कथन यत्न: कर्त्तव्य एव; न च तथाकृतं दृश्यते। अतो व्याडेरपि मुख्य ऋषित्वं नास्त्येवेति किं तत्परजस्यैतस्य यास्कस्यर्षित्वविचारेणेत्यलम्। सङ्ग्रहकारो व्याडिरेव विकृतिवल्लीकार; स च पाणिनिपरजो यास्कपूर्वजश्चेत्यपि प्रतिपादयिष्यामो वय मुपरिष्टादिहैव।

आश्वलायनगृह्यसूत्रेऽपि मन्त्रकृता मेव गणना मुख्य मृषित्व मिति तेषा विशेषत उल्लेखो दृश्यते। तथाहि— "अथ ऋषय. ,— शतर्चिनो माध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिर्भरद्वाजो वसिष्ठ. प्रगाथा पावमान्य. क्षुद्रसूक्ता: महासूक्ता इति (३.४ २.)" -इति। तत्रैव चैतोऽनन्तर माचार्यनामान्यपि कानिचित् स्मृतानि — "सुमन्तु जैमिनि वैशम्पायन पैल सूत्रभाष्यभारतमहाभारतधर्माचार्या जानन्ति बाहवि गार्ग्य गौतम शाकल्य बाभ्रव्य माण्डव्या गार्गी वाचक्नवी वडवा प्राचीथेयी सुलभा मैत्रेयी कहोलं कौषी

तकं पैङ्ग्यं महापैङ्ग्यं सुयज्ञं शाङ्खायन मैतरेयं शाकलं बाष्कलं सुजातवक्त्र औदवाहिं महौदवाहिं सौजामिं शौनकं माश्वलायनं ये चान्ये चाचार्यास्ते सर्वे तृप्यन्त्विति ( ३. ४. ४. )"–इति । इह त्वाचार्यनामसु यद्यपि न दृश्यते यास्कनाम, पाणिन्यादीनाञ्च नाम ; तथापि सूत्रकारत्वेनैव पाराशर्यकणभक्षाक्षचरणपाणिनिप्रभृतीनां, निघण्टुसमाम्नायभाष्यकारत्वेन यास्कस्य च ग्रहण मिष्ट मिति स्वीकार्यम् ।

यदप्रचलितमहाभारतस्य बीज मासीत् पुरा किञ्चन भारतं नाम, तदेव क्रमादङ्कुरितं प्रस्फुटतत्त्वञ्चाभूत् प्रसिद्धं महाभारत मिति, तन्महाभारत मेव प्रवृद्धं पल्लवितं विस्तृत मिदानीन्तनीय मिदं महाभारतं नामेति चेह गुरुचरणाः । किञ्च अत्र सूतः शौनकश्च न चादिकालिको मण्डलकार ऋक्संहितायाः, तस्य ह्यत्र ऋषिनामसु गृत्समद इत्येव ग्रहणसिद्धेः ; नापि बह्वृक्प्रातिशाख्यकारः, अपि तु शाखाविशेषस्य प्रवक्तैव । शाकलादिसाहचर्य मेवात्र नियामक मिति । आश्वलायनोऽप्यत्र न तु गृह्यादिकृत्, अपि शाखाप्रवक्तैव; अत्रापि हि शाकलादिसाहचर्य मस्त्येव नियामकम् ; को नु नाम 'रामलक्ष्मणावम् आसाते'–इत्यत्र दशरथापत्यस्य रामस्य, 'रामलक्ष्मणौ'–इत्यत्र च जामदग्न्यादेर्ग्रहण मिच्छति । वस्तुतस्त्विहाश्वलायनीये यथोचितः क्रम एव विरचितः । तथाच— सुमन्त्वादयश्चत्वारो व्यासशिष्याः समकालिकाः, तत्पूर्वजा व्यासादयः सूत्रकाराः, तत्पूर्वकालिका वाहव्यादयः संहितापाठाध्ययनभेदोपदेशकाः, तत्पूर्वतनाः गार्ग्यप्रभृतयो महावादिनः, तत्पूर्वतनाः कहोलादयो ब्राह्मणादिप्रवक्तारः, तत्पूर्वतना एव शाकल्यादयः शाखाकारा इति दिक् ।

ततश्चैषां मध्ययुगीयानां तार्क्ष्यीयकपिलसम्प्रदानां सुमन्तु प्रभृतीनाम्, तत्पूर्वकालिकानां मतिदिष्टपिमावापन्नानाञ्च वाष्कव्यादीनां मतिद्दृढाश्वलायनान्तानां माचार्यत्व मेव सम्मत माश्वलायनस्यापि, न तु मुख्यपित्व मिति स्फुटम्।

अथ्येव सामान्यत ऋषिलक्षणं न दुर्लभ मध्यायनेऽस्य मयुगीयानां सुमन्त्वादीनां मपि। तथा च सूचित मिहैव त्रयोदशाध्याये,— "मनुष्या वा ऋषीपूत्क्रामत्सु देवानब्रुवन्,— को न ऋषिर्भविष्यति? इति। तेभ्य एत तर्क मृषि प्रायच्छन्,— मन्त्रार्थचिन्ताभ्यूह मभ्यूलहम्। तस्माद् यदेव किञ्चानूचानोऽभ्यूहत्यार्ष तद् भवति (१३ १ १६ )"-इति। एवञ्च 'अनूचानत्वे सति मन्त्रार्थाभ्यूहन समर्थत्वम, ऋषित्वम्'-इत्येव सामान्यत ऋषिलक्षणं फलितम्। अनूचानस्तु गुरुमुखाद्ध्यवेद एव, तल्लक्षणादिकं तु द्रष्टव्य मन्वादौ। मन्त्रार्थाभ्यूहनप्रकारस्तु इहैव विहित,— 'तपसा पार मीप्सितव्यम्"-इत्यादिना ( १३ १ १० ), "शाकपूणि सङ्कल्पयाञ्चक्रे ( २ २ ४ )"-इत्याद्युदाहृतञ्च तदत्र यास्केन। तदीदृश मृषित्व लब्धाक मपि क्षतब्रह्मचर्याणां मन्त्रार्थाभ्यूहनसमर्थानां सम्भवेदेव, तत् किंवाम भगवतोऽस्य यास्कस्येति।

इत्थ निष्पन्न मेतत्,— एतन्निरुक्तकारो यास्कः खलु वस्तुतो मुनिराचार्यश्चेत्येव चिरात् प्रसिद्ध, एव मप्यस्य भगवत सामान्यत ऋषित्व मप्याहत मेव, तथापि विशेषतो विचारिते स्यात् तार्क्ष्यीयक तदिति सिद्ध मेतन्यापि च अन्यस्यार्षत्व मिति शम्॥

———

( ६ )

अथेदानी मिद मिह विचार्यम् ,— कियान् निरुक्तग्रन्थोऽय मिति। अस्माभिस्तु यावन्ति निरुक्तपुस्तकानि दृष्टानि, तेषु सर्वेष्वेवास्य "समाम्नायः समाम्नातः स व्याख्यातव्यः"—इत्यारम्भ-वाक्यं दृष्ट मेव, च-जातिरिक्तेषु सर्वेष्वेव "ब्रह्म शुक्ल मसीय ब्रह्म शुक्ल मसीय"—इति परिसमाप्तिवचनञ्च ; च-ज-पुस्तकयोस्तु "य एवं वेद"—इत्येव समाप्तिवाक्यम् ; तदुत्तरस्थितः "नमो ब्रह्मणे नमो महते भूताय नमः पारस्कराय नमो यास्काय ब्रह्म शुक्ल मसीय ब्रह्म शुक्ल मसीय"—इत्येवं पाठस्तु तयोर्न दृश्यते ; तदिदं न विशेषपार्थक्यम्। द्वि-चतुः-खण्ड-कृतं न्यूनाधिक्यं खण्डभेदकृत माधिक्यं चाकिञ्चित्कर मेवेदृशे प्राचीनतमे ग्रन्थे। तथाप्यस्ति किञ्चिदत्र विचारणीयम्। तथाहि— केषु चित् पुस्तकेषु द्वादशा-ध्यायान्तं निरुक्तम्, तत उत्तर मध्यायद्वयात्मकं परिशिष्ट मिति लिखितं दृश्यते; केषुचित् द्वादशाध्यायान्त मेव निरुक्तम्, परं तत उत्तर मेकाध्यायात्मक मेव परिशिष्ट मिति लिखितं दृश्यते, अपि तस्मिन्नेकस्मिन्नेवाध्यायेऽपरपुस्तकदृष्टाध्यायद्वयोयाः सर्वे एव खण्डा विद्यन्त एव; केषुचित्तु तादृश-त्रयोदशाध्यायान्ते एव "निरुक्तं समाप्तम्"—इति लिखित मस्ति, परिशिष्टशब्दोऽपि न तेषु लक्ष्यते; केषुचित् अन्त्याध्यायद्वयान्ते परिशिष्टं समाप्तं लिखित मस्ति, किन्तु तयोः क्रमात् त्रयोदशचतुर्दशाध्यायत्वे च। अत एतर्हि विचार्यते द्वादशाध्यायात्मकं त्रयोदशाध्यायात्मकं चतुर्दशाध्यायात्मकं वेति कत्यध्यायं निरुक्त मिति।

निघण्टुव्याख्यानकारस्य देवराजयज्वनो मते तु "समाम्नायः

समाम्नातः (१. १. १.)"-इत्यादि, "य ऋतुः कालो जायानां य ऋतुः कालो जायानाम् (१२. ४. १२.)"-इत्यन्तं द्वादशाध्यायात्मक मेव यास्कीयं निरुक्तम्। तदुक्तं स्वग्रन्थभूमिकायाम्— "भगवता यास्केन समाम्नायं नैघण्टुक-नैगम-दैवतकाण्डरूपेण त्रिविधं गवादि देवपत्न्यन्तं निर्बुवता"-इत्यादि। मात्रातिस्तुतिप्रकरणस्योर्द्धमार्गगतिप्रकरणस्य च नामापि कीर्त्तितम्; सन्ति तु तत्रतत्रापि बहूनि निर्वचनपदानि, येषां च प्रामाण्यरूपेण ग्रहणं योग्य मेव। यपि हि तेन स्वग्रन्थभूमिकायाम्— "स्कन्दस्वामिना च निगमव्याख्यानेषु यत्रानि च पदानि शतद्वयमात्राण्युपात्तानि" -इति चोल्लिखितं परं त्रयोदशचतुर्द्दशाध्यायीयनिर्वचनाना मस्तित्व मपि न स्मृतम्। तथाच तादृशानां व्याख्याना मप्रकरणात् तेषा मस्तित्वेन निरुक्तत्वेन वा ज्ञानाभाव एव तस्य यज्वनः सूच्यत इति किं न स्वीकार्यम्?।

निरुक्तवृत्तिकृता दुर्गाचार्येण तु ग्रन्थारम्भे निरुक्तस्य द्वादशाध्यायीत्व मुक्तापि तदन्ते सपादद्वादशाध्यायीत्व मुक्त मिति। त्रयोदशाध्यायीत्व मेव स्वीकृतम्। तथाच प्रथमखण्डव्याख्यानारम्भे— "अयच तस्या द्वादशाध्यायी भाष्यविस्तरः; तस्य इद मादिवाक्यं समाम्नायः समाम्नात इति"-इति, ग्रन्तपुष्पिकायान्तु "ऋज्वर्थायां निरुक्तवृत्तौ अष्टादशाध्यायः (त्रयोदशाध्यायः) समाप्तः"-इति, "इति सपादसप्तदशाध्यायी ऋज्वर्था नाम निरुक्तवृत्तिः समाप्ता"-इति च द्रष्टव्यम्। तदेव मेतन्मते अतिस्तुतिरूपत्रयोदशाध्यायस्य च निरुक्तत्व मेव, न तु परिशिष्टत्वम्; ऊर्द्धमार्गगतिरूप-चतुर्द्दशाध्यायस्य (द्वितीयपरिशिष्टस्य) तु सर्वथाऽस्वीकरण मेव सम्पन्नम्। अपरञ्च त्रयोदशस्याध्यायस्य स्वल्पग्रन्थत्वादेक-

चरणत्व मेव मत्वा , ग्रन्थान्तेऽस्य विशेषतः सपादद्वादशाध्यायीत्व स्वीकरिष्यमाणः सपि सामान्यतः एवोल्लिखितः सुपक्रमे द्वादशाध्यायीति । तदेव मतिस्तुतिप्रकरणस्य स्वल्पत्वादध्यायरूपत्वाभावात् सामान्यतो निरुक्तग्रन्थो द्वादशाध्यायीत्येव निर्देश्यः , विशेषतस्तु सपादद्वादशाध्यायीति , किञ्च मूलसूत्ररूपनिघण्टुपञ्चाध्याय्या सह सपादसप्तदशाध्यायीति चेत्येवेह वृत्तिकृन्मत मभिव्यक्तम् ।

सायणाचार्यस्तु अतिस्तुतिप्रकरणात्मकस्य त्रयोदशस्याध्यायस्य च निरुक्तत्व मभ्युपगम्यापि वचनतो द्वादशाध्यायी एव निरुक्तग्रन्थ इति चाभिचख्यौ । तथाहि ऋक्संहिताभाष्यभूमिकायाम्— "तद्व्याख्यानञ्च समाम्नाय समाम्नात इत्यारभ्य तस्यास्तस्यास्ताद्भाव्य मनुभवत्यनुभवतीत्यन्तैर्द्वादशभिरध्यायैर्यास्को निर्ममे '-इति । 'तस्यास्तस्यास्ताद्भाव्य मनुभवत्यनुभवति'-इति तु त्रयोदशाध्यायान्ते एव विद्यते , न तु द्वादशाध्यायान्ते । तथा चैतन्मतेऽपि त्रयोदशाध्यायस्यातिस्वल्पग्रन्थत्वात् द्वादशाध्यायशेषत्वेनैव ग्रहण व्यज्यते । किञ्चैताद्दशनिरुक्तनिर्देशकयनादेतस्यापि मये ऊर्ध्वमार्गगतिप्रकरणात्मकस्य चतुर्दशस्याध्यायस्य सत्तापि न लक्ष्यते , पर माश्चर्य मेतत् "द्वा सुपर्णा ( ऋ० सं० २ ३ १७ ५ )" इति मन्त्रस्य व्याख्यानावसरे प्रमाणत्वेनोपन्यस्त मेव तच्चतुर्दशाध्यायीय मपि निर्वचन निरुक्त मिति । तथाहि — 'अथ 'द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्म कर्त्तारौ'-इत्यादि ( निरु० १४ प० ३० ख० ) निरुक्ते गत मस्य मन्त्रस्य व्याख्यान मनुसन्धेयम्' -इति । तदत्र तत्त्व सुधीय धीभङ्गिरेव पूर्वापरदर्शिभिरिति ।

अस्मन्मते तु "समाम्नाय समाम्नात "-इत्यादि , "य त्रतु कालो जायानाम्"-इत्यन्तो द्वादशाध्यायी ग्रन्थ एव यास्कीय ,

ततोऽधीयमाने भतिसुतिप्रकरणोर्द्धमार्गगतिप्रकरणे तु न यास्कीये; समाम्नातानां हि निघण्टुपदानां व्याख्यानानि, तत्प्रसङ्गतो विशेष-वक्तव्यानि च द्वादशाध्यायात्मकेनैव ग्रन्थेन वृत्तानीति सिद्धे-ऽप्युद्देश्ये कथं मन्यत यास्कस्य प्रवृत्तिरेषोदियादिति। अत एव सायण दुर्गाचार्य देवराजेत्येतेषु विद्वत्सु प्राचीनतमेन देवराजेन तयो' सत्तापि न द्योतिता, तत्तथ देवराजकाले न स्त एव त इमे प्रकरणे, स्त एवेति चेद निरुक्तत्वेन प्रसिद्धे इति सुव्यक्त मेव। ततो दुर्गाचार्यसमये ऽपि ऊर्द्धमार्गगतदशा तु तथैव, पर भतिस्तुते निरुक्तत्वे तु सशय एवासीत्तदानीन्तनानाम्। अत एव यस्या रम्भकाले अनाकाङ्क मतिस्तुतिप्रकरण मिति मत्वा तस्य निरुक्तत्व परिहार मनसि कृत्वैवोक्त द्वादशाध्यायीत्व निरुक्तस्य; पश्चाद् ग्रन्थावसानकाले तुष्यतुदुर्जन इति न्यायेन बहुपुस्तकस्थत्वादेव तस्याप्यादर कृतोऽपि चिरप्रसिद्धो निरुक्तो द्वादशाध्यायात्मक एवेति मत्वाय पुन स्तद्वाचभावेनोक्त सपादद्वादशाध्यायीति। सायणाचार्यस्तु ततोऽप्यर्वाचीन इति नि सङ्कोचेनैवाभिचख्यौ तस्या-स्तस्यास्माङ्गत्व मित्यादि, पर चिरप्रवादानुगत निरुक्तस्य द्वादशा-ध्यायीत्वञ्च नोपेक्षितम्। तथा च तत्राप्याचार्यस्य हृत्तिकृदुक्त सपादद्वादशाध्यायीत्व मेव सम्मत मपि प्रवादविरोधभिया तत्र मौनावलम्बन मेव चातुर्य प्रतीयते स्फुटम्। ऊर्द्धमार्गगतिप्रकरणं तु तदापि निरुक्ते न प्रवेश मलभत, सति हि प्रवेशे ऽवश्य मेव तत्त्रामापि सायणेन गृहीत भवेदिति। यथावलोक्यते "द्वा सुपर्णा (ऋ० म० २ १ १० ५.)"-इत्यस्य भाष्ये "अत दौ दौ ०—० निरुक्ते गतम्"-इत्यादि, न तत् सायणीयवचन मन्यामहे, अपि तु टीप्पनीटीपित माधुनिक मेव तत्त कान्तान्वेषकानवधानात्

तदन्तर्भूत मित्यत्र सन्देहाभावः । अन्यथा सायणाचार्यस्यौत्सुसता प्रसज्येतेति सुधीभिरेवाकलय्यम् ।

तदेवं निष्पन्न मेतत् ,— साम्प्रतं निरुक्तस्य चतुर्दशाध्याय इति प्रसिद्धम् ऊर्द्धमार्गगतिप्रकरण मनतिप्राचीनैरेव कैश्चित् निरुक्ताङ्गीभूतं क्षतम् ; सायणाचार्यसमयेऽपि न तस्य निरुक्तत्वं निरुक्तपरिशिष्टत्वं वा स्थित मिति ; किञ्च यदेतर्हि निरुक्तस्य त्रयोदशाध्याय इति प्रसिद्धम् , तदतिस्तुतिप्रकरणं तु सायणकालात् पूर्व मेव निरुक्तान्तर्गतीभूतम् ; तत्पूर्वजस्य दुर्गाचार्यस्य कालेऽप्येतद्विषये तादृशाना मपि धीमतां धिय सन्देहदोलायां दोदुल्यमाना एव स्थिताः ,— किमिदं निरुक्तं न वेति । तत्पूर्वकाले तु तयोर्निरुक्तत्वशङ्कापि नासीदेव । अत एव यास्कीयैतन्निरुक्तादप्युपजीवेऽपि महाभाष्ये व्याकरणाध्ययनप्रयोजनान्व्याख्यानावसरे चत्वारि शृङ्गाः ( ऋ० सं० ३. ८. १०. ३. )'–इति मन्त्रस्य निरुक्त त्रयोदशाध्यायसम्मतं व्याख्यानं न दृश्यते , दृश्यतेऽपि तु व्याख्यानान्तर मेव तत्प्रकरणानुगतम् । तथाहि— "चत्वारि शृङ्गाणि , चत्वारि पदजातानि ; नामाख्यातोपसर्गनिपाताश्च । त्रयो अस्य पादाः , त्रय' कालाः ; भूतभविष्यद्वर्त्तमानाः । द्वे शीर्षे , द्वौ शब्दात्मानौ ; नित्यः कार्यश्च । सप्त हस्तासो अस्य , सप्त विभक्तयः । त्रिधा बद्धः , त्रिषु स्थानेषु बद्धः ; उरसि कण्ठे शिरसीति । वृषभः , वर्षणात् । रोरवीति , शब्दं करोति ; कुत एतत् ? रौतिः शब्दकर्मा । महो देवो मर्त्यान् आविवेश इति , महान् देवः शब्दः , मर्त्या मरणधर्माणो मनुष्याः ; तान् आविवेश । महता देवेन साम्यं यथा स्यादित्यध्येयं व्याकरणम्"–इति । भैरक्त मिति व्याख्यानन्त्विहैवं ( १३. १. ७. ) द्रष्टव्यम् ,— "चत्वारि शृङ्गेति वेदा वा एत

उक्तास्त्रयो यस्य पादा इति सवनानि त्रीणि द्वे शीर्षे प्रायणीयोदयनीये सप्त हस्तास सप्त च्छन्दांसि त्रिधा बद्धस्त्रेधा बद्धो मन्त्रब्राह्मणकल्पैर्वृषभो रोरवीति रोरवण मस्य सवनक्रमेण ऋग्भिर्यजुर्भि सामभिर्यदेन मृग्भि शसन्ति यजुर्भिर्यजन्ति सामभि स्तुवन्ति महो देव इत्येष हि महान् देवो यद्यज्ञो मर्त्त्याँ आविवेशेत्येष हि मनुष्यानाविशति यजनाय"-इति। यदि हि नामैतस्यानिरुक्तिप्रकरणस्यापि निरुक्तत्व भगवत पतञ्जलेरभिमतं स्यात्तर्ह्येतस्य नु मन्त्रस्य नैरुक्त व्याख्यान मपहाय व्याख्यानान्तरं कथं प्रतिपिपादयिषित स्यात्?। किञ्चैव मत्र त्रयोदशेऽध्याये (१३ १. ५.) 'जर्भरी'-इत्यस्य 'भर्त्तारौ'-इति, 'तुर्फरीतू'-इत्यस्य 'हन्तारौ'-इति चेतदर्थद्वय द्रष्टापि महाभाष्यकार कथ ब्रूयात्— 'बहवो ऽपि हि शब्दा येषा मर्थो न विज्ञायन्ते 'जर्भरी'-'तुर्फरीतू' (१अ० १पा० १आ०)"-इति? अत स्पष्ट मेवाभिगम्यते— नायमध्यायो भगवत्पतञ्जलिना दृष्ट इति। सिद्ध मित्थ द्वादशाना मेवाध्याना यास्कीयनिरुक्तत्वम्, तस्यैव परिशिष्टरूपयोर्द्वयोस्तु महाभाष्यतोऽप्यर्वाचीनत्व मिति शम्॥

---

(७)

अथेदानी मिद मथेह विचार्य मस्ति, — क कालोऽस्य यास्कस्य? कस्मिंश्च समये अय मिमा भुव मलञ्चकारेति विवेचयाम इति यावत्।

अहो बत। सम्प्रति हि दोषशून्य सर्वावयवश्री विश्रामयोग्यो

नैकोऽप्यस्मदैतिहासिकग्रन्थो दृश्यते, पुराप्यासीन्नवेति च को वदेत् ?

सत्य मेवैतत् , वेदानां मन्त्रभागेष्वपि क्वचित्-क्वचिदितिहासाश्च लक्ष्यन्ते ; तथा चोक्तं भगवता यास्केन— "त्रितं कूपेऽवहित मेतत् सूक्तं प्रतिबभौ ; तत्र ब्रह्म ,— इतिहासमिश्रम् , ऋङ्मिश्रम् , गाथामिश्रं भवति ( ४. १. ६. )"–इत्यादि। परं प्रायस्तेऽपि प्रायश उपमामूलका रूपकवर्णनात्मका एव। अत एव 'अतिष्ठन्तीना' मिति मन्त्रं व्याख्यन्निन्द्रशत्रुपदनिर्वचनावसरे व्यक्त माह यास्कः— "इन्द्रशत्रुः ; इन्द्रोऽस्य शमयिता वा शातयिता वा तस्मादिन्द्रशत्रुः। तत्को वृत्रः ?— मेघ इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहासिकाः *। अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति (२. ५. २.)"–इत्यादि।

अथापि यदिदं श्रूयते— "प्रजापतिरात्मनो वपा मुदक्खिदत् ( तै० सं० २. १. १. )"–इत्यादि। अत्रापि रूपकार्था एव कृता मीमांसाभाष्यकृच्छबरस्वाम्यादिभिः। तथाहि— "कथं पुनरनुत्खिन्नायां वपायां 'प्रजापतिरात्मनो वपा मुदक्खिदत्'–इत्याह ? उच्यते ,—असद्वृत्तान्तान्वाख्यानम् ; स्तुत्यर्थेन प्रशंसाया गम्यमानत्वात्। इहान्वाख्याने वर्त्तमाने द्वयं निष्पद्यते ,— यच्च वृत्तान्तज्ञानम् , यच्च कस्मिंश्चित् प्ररोचना द्वेषो वा। तत्र वृत्तान्तान्वाख्यानं न प्रवर्त्तकं चेति प्रयोजनाभावादनर्थक मित्यविवक्षितम् ; प्ररोचनया तु प्रवर्त्तते , द्वेषान्निवर्त्तते इति तयोर्विवक्षा। वृत्तान्तान्वाख्यानेऽपि विधीयमाने आदिमत्ता दोषो वेदस्य प्रसज्येत। कथम्पुनरिदं निरालम्बन मन्वाख्यायते ? इति , उच्यते— नित्यः

* महाभारते व० प० १००. १०१ अ०, शा० मो० प० २७८—२८१ अ०।

कश्चिदर्थः प्रजापतिः स्यात्,— वायुः, आकाशः, आदित्यो वा। 'स आत्मनो वपा मुदक्खिदत् (तै॰ सं॰ २. १. १.)'-इति वृष्टिम्, वायुम्, रश्मिं वा। 'तां मग्नौ प्रागृह्णात् (तै॰ स॰ २. १. १.)' -इति वैद्युते, आर्चिषे, लौकिके वा। 'ततो अजः (तै॰ सं॰ २. १. १.)'-इति अन्नम्, बीजम्, विरत् वा। 'त मालभ्य (त मुपयुज्य) प्रजाः पशूनाप्नोति (तै॰ स॰ २. १. १.)"-इति गौणाः शब्दाः (मी॰ भा॰ १. २. १.)'-इति। तथा चैवमादिभ्यो मन्त्रभागीयेतिहासेभ्यः कथङ्कार माप्नुयामैतिहासिकं तथ्यम्।

ब्राह्मणभागेषु च बहव एवेतिहासा उपलभ्यन्त इत्यपि सत्य मेव। तथा चैतरेयके— "प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत सूर्यां सावित्रीम् (४ २. १)"-इत्यादयः। पर मेव-मादिषु प्रायोऽधिदैवतार्थास्य' वैज्ञानिकं तत्त्व मेवावगम्यते; तथैव नैरुक्तादिशासनात्। तथाच— "सूर्या, सूर्यस्य पत्नी; एषैवाभि-सृष्टकालतमा"-इत्यादि नैरुक्तं (१२. १. ७) द्रष्टव्यम्। "एषैव उषाः, अभिसृष्टकालतमा यथा यथा सूर्यस्योदयकालं प्रत्यभि-सृष्टतमा भवति, गततमा भवति, तथा तथा सैषा उषाः सूर्या सम्पद्यते"-इति तत्र दौर्गी वृत्तिः"। "सविता सूर्यां प्रायच्छत् सोमाय राज्ञे, प्रजापतये वेति च ब्राह्मणम्"-इत्यस्य नैरुक्तवच-नस्य (१२. १. ८.) व्याख्यानायचोक्तं दुर्गाचार्येण— "ज्योत्स्नां सोमाय ददाति; यदुक्तम्— 'आदित्यतोऽस्य दीप्तिर्भवति (निरु॰ २. २. ३.)' इति"-इति।

एव मपि मन्त्रब्राह्मणयोर्नास्त्यैवेति हासिकं तथ्य मिति च वक्तुं न शक्नुमः, न चास्माक तथाभिप्रायः; पर मीदृशगूढतत्त्वागाधसलिला-दभिमतैतिहासिकतथ्यरत्नोद्धारस्त्वस्माक मतिदुष्कर एवेत्येव ब्रूमः।

पुराणादिष्वपीतिहासा विद्यन्त एवेति च सत्यम्; तेषां प्राचीनेतिहासवर्णनपूर्वकधर्मोपदेशार्थैवोत्पत्तिः। परं तेष्वपि रोचनाद्यर्थान्येव बहून्युपाख्यानानि रूपकात्मकेभ्यो वेदशब्देभ्य एव सङ्कल्पोपबृंहितानि गम्यन्ते; अत एव तत्तच्छास्त्रं वेदार्थोपबृंहणमित्याख्यायते (महा० भा० १. १. २६४.)। तद्यथा — इन्द्रस्याहल्याहरणोपाख्यानं बहुष्वेव काव्येतिहासपुराणेषु समासतो व्यासतो वा वर्णितं विद्यते, "उदीरय पितरा जार आ भगम् (ऋ० म० ७. ६. १०. १.)"–इति मन्त्रे श्रुतं जारपद मेव तादृशसर्वप्रसिद्धस्य अहल्योपाख्यानस्य मूलम्; न च तस्य मूलान्तर मस्ति तस्य च जारशब्दस्य प्रकृतोऽर्थः खल्वेवं भाषितो यास्केन— "अथाप्युपमार्थे दृश्यते— 'जार आ भगम्' जार इव भगम्। आदित्योऽत्र जार उच्यते; रात्रेर्जरयिता स एव (३. ३. ४.)"–इति। एवञ्चैवं गम्यते— 'जार आ भगम्'–इत्येतावदेवालम्ब्यैव प्रथमं तावत् ब्राह्मणग्रन्थेष्व माख्यान माख्यातम्;— "अहल्यायै जार कौशिक ब्राह्मण गौतम ब्रुवाण (तै० आ० १. १२. ४.)"–इति, "अहल्यायै जारेति (श० ब्रा० ३. ३. ४. १८.)"–इति च। ततस्तदेव मूलीकृत्यातिबृंहितं वाल्मीकीयरामायणे बालकाण्डेऽष्टाचत्वारिंशोनपञ्चाशत्तमयोः सर्गयोः; तदेव चोपमङ्क्रान्तं क्रमान्महाभारतादिष्वपीतिहासपुराणेषु। अपि भट्टकुमारिलस्वामिना ह्येतस्य ब्राह्मणग्रन्थीयेतिहासस्य प्रदर्शितनैरुक्तानुगत मेव व्याख्यान स्पष्ट मभिहितं मीमांसाभाष्यवार्तिके। तथाहि— "समस्ततेजाः परमेश्वरत्वनिमित्तेन्द्रशब्दवाच्यः। सवितैवाहनि लीयमानतया रात्रेरहल्याशब्दवाच्यायाः क्षयात्मकजरणहेतुत्वात् जीर्यत्यस्मादनेन वोदितेन वेत्य

इत्याजार इत्युच्यते, न परस्त्रीव्यभिचारात् (८. १. ४१.)"-इति। मीमांसायां सूत्रभाष्यवार्त्तिकन्यायमालादिषु सर्वत्रैव, सुब्रह्मण्याह्वाननिगदे, इरिवञ्छन्दस्यानूहाधिकरणे चान्यान्यपु दाहृतान्यथगन्तव्यानि (८ १ १५ अधि०)।

एवं बहुत्रैव पुराणादिषु "उषो न जारः (ऋ० सं० १ ६८ ६, ८, ७ १० १)"-इत्येतन्मन्त्रमूलकं प्रजापतेः स्वकन्यानु गमनाख्यानमश्लीलमुदितं गम्यते, वस्तुतस्तदपि रूपकत्वेनैव व्याख्यातं ब्राह्मणे। तथाहि— "प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत्, दिवमित्यन्य आहु रुषसमित्यन्ये (ऐ० ब्रा० ३ ३ ८)"-इत्यादि। तत्रैव मीमांसावार्त्तिके अस्यार्थौपचारिकमेव व्याख्यानं कृतं दृश्यते। तथाहि— "प्रजापतिस्तावत् प्रजापालनाधिकारा दादित्य एवोच्यते। स चारुणोदयवेलायामुषसमुद्यन्नभ्येति। सा तदागमनादेवोपजायत इति तद्दुहितृत्वेन व्यपदिश्यते। तस्यां चारुणकिरणाख्यबीजनिक्षेपात् स्त्रीपुरुषसंयोगवदुपचारः"-इति। सदैवं सत्स्वदितिहासपुराणादिवचनेभ्योऽपि ऐतिहासिकं तथ्यं कथमुपलभेम? उपलब्धेष्वपि कथं न सन्देहो दुर्वार एव?

किं बहुना यदि हि नाम यौधिष्ठिराब्दः प्रचलितो न स्यात्, यौधिष्ठिरीयस्तम्भादिकं च न दृश्येत, तर्हि को नाम महाभारत वचनादेव विश्वस्यादासीत् पुरा युधिष्ठिरो नाम नृपतिरित्यपि? तत्र यौधिष्ठिरीयेतिहासेऽपि अर्जुनस्य स्वर्गीयेन्द्रसभायां गमना दीनि (व० प० ३७—५१ अ०) बहून्येव कविकल्पितानि सन्तीति धीमत्समाजेषु प्रसिद्धान्येव। भारतीयेतिहासग्रन्थेषु हि महाभारतमेव सर्वप्रधानम्, अत एवोक्तं तत्रैवादिपर्वणि— "महत्वात् भारवत्त्वाच्च महाभारतमुच्यते (१ १ २७०)"-इति।

तादृगभारतेतिहासस्य च बृंहणकल्पनातिरस्करणादिदोषदुष्टत्वात् ऐतिह्यासिकतथ्यान्वेषिणां समप्रीतिकरत्वं चेत् , पुराणोपपुराणादीनान्तु कथा दूरपराहता एव ।

एवं षड्गुरुशिष्यादयोऽपि टीकाकारा ऐतिह्यासिकांशेऽलीकवक्तार एव ; तेषां हि ग्रन्थकर्तृनामविभ्रमहेतुकं पौर्वापर्यज्ञानविरहत्वं व्यज्यते एव सर्वत्र । तथाच ऋग्वेदसर्वानुक्रमणीवृत्तौ—"शुनकाच्छौनकोऽभवत् । एतत्सूक्तयुतं पश्यत् द्वितीयं मण्डलं पुनः । ०—० । यस्मै व्याचष्टे ०—० उग्रश्रवा व्यासशिष्यः ०—० महाभारत माख्यानं हरिवंशकथान्वितम्"–इति । इह हि सूक्तद्रष्टृत्व-मण्डलद्रष्टृत्व-व्यासशिष्योक्तभारत-तत्परिशिष्टश्रोतृत्वाना मैकाधिकरण्यं प्रदर्शितम् । पुनरपि उत्तर मस्यैव शौनकस्यापरदशग्रन्थकर्तृत्व मप्युल्लिखितम् । तदेतत्सर्वं षड्गुरुशिष्यकथन मस्मान् श्रवणशूल मिव व्यथयति । कथं हि सम्भाव्यते,— प्रदर्शितास्वलायनीयगृह्ये ऋषिनामसु गार्त्समद इति गृहीतनाम्नो मण्डलद्रष्टुः अतिवृद्धस्यानिर्दिष्टकालिकस्य शौनकस्य, आचार्यनामसु शौनक इति गृहीतनाम्नः शाखाप्रवक्तुः प्राग्युगीयस्य च शौनकस्य , यद्वायुगीयव्यासशिष्योक्तभारतश्रवणम् ? अनतिप्राचीनहरिवंशकथाश्रवणं च ?–इति सुधीभिरेवैतदाकल्यताम् । वस्तुतस्त्वैतिह्यासिकांशे षड्गुरुशिष्योक्तानि खलु उन्मत्तप्रलपितानीत्यत्र नास्त्येव संशयः ; तद्विषयविचारस्योपरिष्टादिहैव । तत्कथ मेतादृशोऽपि ग्रन्थः प्रामाणपद मारोहेदैतिह्यासिकतथ्यनिर्णयायेति ।

अस्त्येवैको ग्रन्थो राजतरङ्गिणी नामेतिहासेषु प्रसिद्धः , भारतेतिह्यासिकतत्त्वजिज्ञासूनां किञ्चित् प्रीतिपदश्चेति सत्यम् ! परं तत्र खलु आदिगोनर्दप्रभृतीनां काश्मीरेन्द्राणा मेव वंशावलिः

ज्ञायते, न त्वन्यत् किमपि विशेषतः । देशावस्थादिनामैतिहासिकग्रन्थास्तु आधुनिका अपि समग्रा विशदाश्च नैकेऽप्युपलभ्यन्ते, तदलमिह तत्कथयेति। गुणाढ्यकृत भूतभाषामय बृहत्कथापुस्तकन्तु सप्तलक्षश्लोकात्मक मित्येव श्रुतम्, न च दृष्ट मद्यापि, तदल तददृष्टकथान्दोलनेनापीति।

अनन्तपत्न्या सूर्यवत्याश्चित्तविनोदनाय सोमदेवभट्टेन सम्पादित कथासरित्सागरस्तु स्त्रीजातिचित्तविनोदायैवालम्, न त्वैतिहासिकतथ्य गुत्म्फनाय तावत्, यतो ह्यहो तदुपन्यासपाठादैतिहासिकाना विमलहृत्सर स्वपि शैवालचया एव समुत्पद्यन्ते। वस्तुत तद्ग्रन्थपर्यालोचनादिद मेव प्रतीयते सोमदेवस्य तस्य यथाकथ मपि अनन्तपत्नी चित्तविनोदन मेव उद्देश्य मासीत्, न त्वैतिहासिकतथ्यप्रदर्शन मिति, सति हि तत्र पाणिनितो न्यूनाधिक सहस्राब्दीपरजस्यापि कात्यायनस्य पाणिनिसतीर्थत्व यत् नोक्त हेत, को हि नामैतिहासिको दृढत्वादिहेतुजवास्वग्रहीन प्रकृतिस्थोऽपि व्याकरणसूत्रकार पाणिनि कालान्तरबीजमूलक भाषाव्यवहारान्तरगतपदसंस्कारक कात्यायनस्य च समकालिकत्व मन्येत। अस्मन्मते त्वीदृशस्यैतिहासिकज्ञानविकाशसहायस्योपन्यासग्रन्थस्य इतिहासत्वेन ग्रहण मेव नोचितम्। एव मपि ये किल तारानाथतर्कवाचस्पतिवैदुष्यगुणसमर्थोऽपि इत्थ स्वयमकातरतया नामनथ मेतत्कथन मेव विश्वस्यैतदेव च भित्तीकृत्य स्वग्रन्थपूर्वपीठिकाया किञ्चिदलेखीत, तादृशाविवादिसाधवे तु वय बहु दूरत एव शत नमस्कुर्म ।

तदेव मस्मद्देशीयैतिहासिकतथ्याविष्करणाय बहुकालतो बहु श्रमतश्च बहूना ग्रन्थाना परिदर्शनम्, मधुनिहित ग्रयालभ्य मेति

हासिकमध्याहरणम्, ऐतिह्याद्यवलम्बनञ्चेत्येतानि प्रयोजनीयानि । तथा कृत्वा आविष्कृतिं च तथ्ये न हि सर्वावयवशो विश्वस्यात्; अपि तु कदाचित् खण्डनीयं मपीदं भवेदिति चाशङ्कैव। एतादृशे च दुष्करे प्रवृत्ता वय मवश्य मेव कृतकृत्या स्यामेत्यपि दुराशैव; पर प्रवृत्ताश्चेत् कथं निर्व्रीडाः प्रतिनिवृत्ता भवेम इत्यालोच्यैवेह यथाज्ञान किञ्चिद् वदामस्तत्र—

"यदन्यैर्वन्यैर्न क्षुण्ण तत्र सञ्चरतां हि नः ।

पदे पदे प्रस्खलता सन्त. सन्त्ववलम्बनम्"

किञ्च, हैमसङ्गतगा ये तु नोपहास्याः स्खलत्स्वपि ।

अनन्यगतिकाना हि स्खलनं नोपहस्यते ॥

अथ प्रदर्शितेषु अद्यप्रचलितमहाभारतश्लोकेषु निरुक्तकर्तृत्वेन यास्कनाम्नः स्मरणात् तन्महाभारतकारात् प्राचीनोऽयं यास्क इति त्वविचारित मपि वाच्य मेव । स च महाभारताख्य इतिहासग्रन्थ. पाणिनिभाष्यकारात् पतञ्जलिमुनेः परभव स्यात्; पतञ्जलिना हि उदाहृतेष्वपि भारतीयप्रसङ्गेषु अद्यप्रचलितेतन्महाभारतीयवचनान्युद्धृतानि नैव गम्यन्ते, प्रत्युतान्यथैव । तद्यथा—"धर्मेण स्म कुरवो युद्ध्यन्ते (३अ० २पा० २आ०)"–इति । नास्त्येतद्वचन मेतन्महाभारते; अतः सम्भाव्यते पतञ्जलिसमये नासीदेतन्महाभारत मपि त्वासीदेतन्मूलरूपो युधिष्ठिरादीतिहासाश्रयः कथनापरो महाभारतग्रन्थ इति । किञ्चेह ह्युदाहृत मेतत्—"हृद्रकुमारीवाक्यवदिदं द्रष्टव्यम् । तद्यथा। हृद्रकुमारीन्द्रेणोक्ता वरं वृणीष्वेति। सा वर मवृणीत। 'पुत्रा मे मधुघीरघृत मोदनं कांस्यपात्र्या भुञ्जीरन् ।'–इति । न च तावदस्याः पतिर्भवति; कुत. पुत्राः ? कुतो गावः ? कुतो धान्यम् ? तत्रानया

एकेन वाक्येन पतिः पुत्रा गावः धान्य मिति सर्वं सङ्गृहीतं भवति (८अ० २पा० १आ०)"–इति। एतद्व्यक्तभाष्याख्यानन्तु नैवं विद्यते ऽद्यप्रचलितेऽत्र महाभारते (शा० प० ५२ अ०)। इतोऽपि बुध्यतेऽद्यप्रचलितमहाभारतकारात् पूर्वज एवायं महाभाष्यकारः पतञ्जलिरिति।

निरुक्तकारोऽयं यास्कः खलु पाणिनिव्याकरण-महाभाष्यकारस्य भगवतः पतञ्जलेरप्यतिपूर्वजः। पश्यतु तावत्— निरुक्तेऽत्र अर्थज्ञप्रशंसाप्रकरणे योद्धृता ऋक् उत त्वः पश्यन्निति, महाभाष्येऽप्यर्थज्ञप्रशंसने सैव प्रदर्शिता; निरुक्तकारकृता अर्था एव तत्र यथावदुद्धृता च (निरु० १. ६. ३.; म० भा० १अ० १पा० १आ०)। किञ्च यत् पद्यतेऽत्र निरुक्ते "शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते; ०—० विकार मस्यार्येषु भाषन्ते शव इति। दातिर्लवनार्थेषु प्राच्येषु; दात्र मुदीच्येषु"–इत्येव (२. १. ४.)। पातञ्जले तु एतदेवोद्धृत्य किञ्चित् विस्तृतम्— "शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति; विकार एन मार्या भाषन्ते शव इति। हम्मतिः सुराष्ट्रेषु; रंहतिः प्राच्यमगधेषु; गमि मेव त्वार्याः प्रयुञ्जन्ते। दातिर्लवनार्थे प्राच्येषु; दात्र मुदीच्येषु (१अ० १पा० १आ०)"–इति। अपरञ्च— "तितउ परिपवनं भवति; ततवद्वा, तुन्नवद्वा, तिलमात्रतुन्न मिति वा (४. २. १.)"–इति नैरुक्तम्। तदेव तिलमात्रेति परिहायेह पातञ्जले मक्तु मिव तितउनेति मन्त्रव्याख्याने प्रमाणत्वेनोपन्यस्तं गम्यते (१अ० १पा० १आ०)। अपि च तत्रैव सक्तुपदनिर्वचनं सचतेरित्यादि; धीरा इत्यस्य, मनसेत्यस्य, अक्रत इत्यस्य च प्रतिवचनानि ध्यानवन्तः, प्रज्ञानेन, अक्रयत इत्यपि

निरुक्तत एव सव्याखि (निरु० ४. २. २.)। अपर मपि— "हंसा हन्तेर्घ्नन्त्यध्वानम् (४. २. ५.)"-इति नैरुक्तम्। एतन्नैरुक्तनिर्वचनबलादेवाह पतञ्जलिः— "कः पुनराह हन्तेर्हंस इति। किन्तर्हि ? हन्तेर्हंसः; हन्त्यध्वान मिति (६अ० १पा० २आ०)"-इति। व्याख्यातत्वेन प्रसिद्धग्रन्थनामप्रदर्शनाय स्वकण्ठरवेण च भाष्यकारेण निरुक्तनामग्रहणं कृतम्। तथाहि— "ग्रन्थग्रन्थेषु चैषा प्रसततरा गतिर्भवति निरुक्तं व्याख्यायते इति (४अ० १पा० १आ०)"-इति।

नन्वत्र निरुक्त मिति शाकपूण्याद्यन्यतमकृतो ग्रन्थो ग्राह्यः स्यादिति चेन्न; शाकपूण्याद्यन्यतमकृतो ग्रन्थः खलु महाभाष्यकालेऽपि स्थित इत्यत्र हि न किञ्चिन्मानं पश्यामः; प्रत्युत लुप्तेष्वेव ताहशग्रन्थेषु नूतनस्यैतस्य निरुक्तस्य प्रचारसम्भवः; प्रचरिते चैतस्मिन्, महाभारते यास्कस्यैव निरुक्तकर्तृत्वेन ग्रहणं सङ्गच्छते। न च महाभाष्य-महाभारतयोः एवं कालान्तरालसम्भवः, यत्र शाकपूण्याद्यन्यतमकृतं निरुक्तं लुप्तम् समुत्पन्नञ्च सुप्रचलित मिद मिति।

केचिदत्राहुः— यास्कीयैतन्निरुक्ते "श्याल आसन्नः संयोगेनेति नैदानाः"-इत्यस्य, "ऋचा समं मेन इति नैदानाः"-इत्यस्य च (६. २. ६; ७. ३. ६.) दर्शनात् ज्ञायते सामवेदीयस्य निदानसूत्रस्य यास्कतोऽपि प्राचीनत्वं निरुक्तसूत्रस्त्वस्येति। अपि च सामवेदीये बौधायनीयकल्पपद्धतावपि बहुत्र निदाननामग्रहणात् ततोऽपि प्राचीनत्वं तस्यावगम्यते। तथाहि— "निदानकारस्य द्वाविंशत्यक्षरप्रभृतयश्चतुरुत्तरास्त्रयः समवर्गाः ०—० परमेष्ठ्यन्तस्येति पश्यस्येति"-इति। किञ्च तत्रैव किञ्चिदुत्तरम्,—

"उक्तं हि निदाने ज्योतिष्टोम षोडशिनि चाधिकृत्य 'संस्था मध्य स्थेता विद्यमानाना मन्थे'-इति"-इति च (१५०)। एवं मन्यत्रापि तत्र बहुत्र सर्ववेदाङ्गविषयेष्वेव निदाननामोपलभ्यते। तत्तत्रातिप्राचीनेऽपि निदानसूत्रे दैवतनिर्णयविषयेऽपि शाक पूणिनामोल्लेखो विद्यते, परं न तु तत्रापि निरुक्त मित्युक्तम्। तद्यथा— "ऐन्द्र प्राजापत्या सार्पराज्ञाचान्द्रमस्य सौर्य इति शाकपूणि (४ ८)"-इति। शाकपूणेर्दैवतप्रत्यक्षकारिता चाह यास्कोऽपि। तथाहि— "शाकपूणिः सङ्कल्पयाञ्चक्रे सर्वा देवता जानामीति। तस्मै देवतोभयलिङ्गा प्रादुर्बभूव। तां न जज्ञे। तां पप्रच्छ विविदिषाणि त्वेति। सास्मा एता मृच मादिदेशैषा मद्देवतेति (२ २ ४)"-इति। तदेतत् सर्वं समालोच्येद मेव प्रतीत भवति,— शाकपूणि खलु यास्काद्यास्मात् बहुपूर्वजो ब्राह्मणकाले स्थितोऽनुब्राह्मणविशेषस्य कर्त्तासीत्, तथानुब्राह्मणे एव मन्त्रार्थपदनिर्वचनानि दैवततत्त्वादीनि चोपदिष्टानि। अत एव निदानसूत्रे क्वचिदनुब्राह्मणग्रन्थनामोल्लेखतया क्वचिच्च शाक पूणिनामोल्लेखतया च प्रमाण प्रदर्शितम्। तदीय शाकपूणि नामोल्लेखस्तु दर्शित, अनुब्राह्मणनामोल्लेखोऽप्यत्र प्रदर्श्यते। तद्यथा— "किं स्तोमा? अनुब्राह्मण स्युरित्येकविंशस्तोमा" -इत्यादि (८ ३)। तदेवं प्रदर्शित महाभाष्यवचन शाकपूणि कृत प्राचीननिरुक्तपर मेव किं न गृह्यत इति। अत्र ब्रूम,— शाकपूणेर्निर्वचनात्परपर्यायनिरुक्तकर्तृत्वेऽपि न पुनर्निरुक्तत्वेनप्रसिद्ध ग्रन्थविशेषकर्तृत्व मिति व्याख्यातमत्र प्रसिद्धग्रन्थनामप्रदर्शनाय यदुक्त महाभाष्यकृता निरुक्त व्याख्यायत इति तदून यास्कीय मिदं निरुक्त मभिलक्ष्येति।

किञ्च दृष्टं वर मदृष्टत इति न्यायात् किं मदृष्टनिरुक्तकल्पनयेत्यसोऽस्यैवेह भाष्ये ग्रहणं न्याय्यः। अपि च भाष्येऽत्र शाकपूणिकृतस्यैव निरुक्तस्य ग्रहण मिष्ट मित्यत्र नास्ति किञ्चिदपि विनिगमक मतो यास्कीयनिरुक्तस्यापि बोधेन कथं न भवितव्य मिति। वस्तुतस्तु अद्यप्रचलिता या मनुसंहिता, एतस्या अपि प्राचीन मिदं निरुक्तम्; पातञ्जलं महाभाष्यं तु एतस्मनुतः पराचीन मिति ध्रुवम्। सत्येव मस्य निरुक्तस्य पातञ्जलादस्मात् अतिप्राचीनत्वे कोऽस्ति शङ्कावसरः।

पश्यतु तावत् पातञ्जले खलु महाभाष्ये— "पूर्ववयसः अप्रत्युत्थाने दोष उक्तः, प्रत्युत्थाने च गुणः। कथम्? 'ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति। प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते'–इति। स च पूर्ववयोमात्रे प्रसक्तः, अतोऽवाध्यवयवेन शास्त्रार्थः सम्प्रतीयते (६अ० ५पा० ४आ०)"–इति। तदत्रोद्धृत मूर्द्ध प्राणा इति वचनं तु साम्प्रत मनुसंहितेति प्रसिद्धाया भृगुसंहिताया द्वितीयेऽध्याये (१२० श्लो०) दृश्यत एव। एतावतैव पातञ्जलस्यास्य महाभाष्यस्यैतन्मनुपरजत्वं सुव्यक्तम्।

निरुक्तस्यास्य त्वेतन्मनोश्च पूर्वजत्व मेवानुमीयते। तथाहि उक्तानि ह्येतन्निरुक्ते— "पुमान् दायादो अदायादा स्त्री"–इति, "स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते, न पुंसः"–इति, "अभ्रातृका इव योषास्तिष्ठन्ति सन्तानकर्मणे"–इति, "गर्त्तारोहिणीव धनलाभाय"–इति, "नाभ्रात्री मुपयच्छेत"–इति, च (३. १. ४ ५. ६.)। एष्वेकत्राप्यद्यप्रचलितमनुसंहितायां नामोल्लेखोऽपि न कृतः; मति ह्यस्याः संहिताया निरुक्तपूर्वजत्वेऽवश्य मेवैतन्नामकीर्त्तनादिक मिह श्रूयेतैव। किञ्चाद्यतनीय मनु-

संहितायान्तु पञ्चैव महापातका निर्दिष्टा दृश्यन्ते। तथाहि—"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुः संसर्गश्चापि तैः सह (११अ० ५४श्लो०)"—इति। निरुक्ते तु "सप्त मर्यादाः कवयश्चक्रुः। तासा मेका मप्यभिगच्छन्नंहुरान् भवति। स्तेयम्, तल्पारोहणम्, ब्रह्महत्याम्, भ्रूणहत्याम्, सुरापानम्, दुष्कृतस्य कर्मणः पुनः पुनः सेवाम्, पातके नृतीयम् इति (६. ५. ४.)"—इति सप्त महापातकानि परिगणितानि पठ्यन्ते। तत्र मनुमते भ्रूणहत्याया मुख्यं महापातकत्व नास्त्येव; नापि त्वातिदेशिकम् (११ अ० ५५—५८ श्लो०); परं विहितश्च तत्र ब्रह्महत्याप्रायश्चित्त मेव (११अ० ८७श्लो०); कुल्लूकमते तु तत्र 'ब्राह्मणगर्भ विषयम्'। किञ्च कुल्लूकभट्टकृत तद्व्याख्यान सङ्ग्रहकारस्य शूलपाणेरपि सम्मत मेव प्रतीयते। तथाहि—"तत्र पुंस्त्वेन ज्ञाते पुम्बधप्रायश्चित्तं स्त्रीत्वेन ज्ञाते स्त्रीवधप्रायश्चित्तम्, अविज्ञाते तु पुम्बधप्रायश्चित्त माह मनुः—'हत्वा गर्भ मविज्ञातम् (११. ८७.)"—इत्यादि. प्रायश्चित्तविवेक.। अपि चात्र मनुसंहितायां दुष्कृतकर्मण. पुनःपुन. सेवने पातककार्यप्रवर्तने च महापातक न स्मर्यते; अपि स्मर्यते च महापातकिसंसर्गकारिणोऽपि महापातकित्वम् (११. ५४.)। तद्यदि हि नाम निरुक्तप्रचारात् पूर्वस्मिन्नपि काले यास्केन महिता प्रवर्तिता स्यात्तर्हि ईदृशविरोधपरिहाराय यास्क स्योद्धारेऽवश्य मनागपि स्फुरितं दृश्येत एव।

अपरञ्चैतदस्मि निरुक्ते (३. १. ४.)—"तदेतदृक्श्लोकाभ्यामभ्युक्तम्—

"अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे।

आत्मा वै पुत्रनामासि स जीव शरद. शतम्'—इति।

'अविशेषेण पुत्राणां दायो भवति धर्मतः ।
मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत्'–इति ।

अत्र ऋक्पदेन न तु ऋग्वेदीयमन्त्रो गृह्यते ; नास्त्येव हि तत्र अङ्गादङ्गादिति ; अपि तु ऋग्लक्षण एव मन्त्रः ; ततश्च शतपथीयायाश्चास्या ऋचोऽत्र ग्रहण मिष्टम् ; अस्ति चैषा ऋक् शतपथब्राह्मणे ( १४. ८. ४. २६. ) । अपि चेह श्लोकशब्देन यस्य ग्रहण मिष्टम् 'अविशेषेण'–इत्यादेः, तस्य तु दर्शनं मद्य-प्रचलितायां मनुसंहितायां नास्त्येव ; यास्केन तूक्तं स्पष्ट मेव 'मनुः स्वायम्भुवोऽब्रवीत्'–इति । सोऽयं कोऽसौ मनुरित्यवश्यं विचार्यम् । विचारिते च तथा, इद मेव प्रतीयते,— सम्प्रति येयं मनुसंहितेति प्रचलिता, सा नून यास्कीयादेतस्माद्विरहात् पर प्रणीता ; अपि त्ववश्य मासीत् पुरातनोऽपरः कश्चन मनुप्रणीतः स्मृति-ग्रन्थः सुप्रचलितो यास्ककालेऽपीति । वस्तुतस्त्वियं न मनुप्रणीता ; अपि भृगुप्रणीता भृगुसंहितैवेति च प्रमाणयिष्याम उपरिष्टात् । अन्यच्च— "विद्या ह वै ब्राह्मण माजगाम"–इति शाखान्तर-गताश्चत्वारो ये मन्त्रा निरुक्ते उद्धृताः ( २. १. ४. ), त एव मन्त्राः किञ्चिद्विशेषपरिहाराभ्या भाषान्तरीकृता इवाद्यतनी-यायां मनुसंहितेतिप्रसिद्धाया स्मृतिसंहिताया च लक्ष्यन्त इत्यपि सुवचम् (२अ० ११३ —११६ श्लो०) । अत एव ऋग्भाष्य-भूमिकाया मेव मुक्तं सायणाचार्येण— "विद्याया ग्रहणेऽधिकारि-विशेषः शाखान्तरगतैश्चतुर्भिर्मन्त्रैरुपदर्शितः ; तांश्च मन्त्रान् यास्क उदाजहार"–इत्यादि ; न चोक्तं तत्र मनुरुदाजहारेति । किञ्चै-तस्या' स्मृतिसंहिताया द्वादशे ऽध्याये ऽत्रयोऽप्युक्तं दृश्यते 'नैरुक्त.' –इति ; 'निरुक्तज्ञः'–इति च तद्व्याख्यानं कुल्लूकभट्टकृतम् (१११श्लो०)।

तदित्थं निरुक्तमिदं पातञ्जलमहाभाष्यतः प्राचीनं न वेति विचारस्तु दूरे आस्ताम्, ततोऽपि पुरातनात् मनुसंहितेतिप्रथितादस्य प्रचलितसर्वप्रधानस्मृतिसंहिताग्रन्थादपि पूर्वं भगवता यास्केन प्रणीत मिति स्यात् सप्रमाणम्।

एवञ्चास्य यास्कीयस्य निरुक्तस्य प्रणयनकालनिर्णयाय प्रवृत्तानां प्रथम तावत पातञ्जलस्य, मनुसंहितेत्यथप्रसिद्धस्य ग्रन्थस्य चापि कालनिर्णय एव कर्त्तव्य इति तत्रतत्रैवादौ यतामहे।

( पतञ्जलि ) राजतरङ्गिण्या मवलोक्यते,— यदा काश्मीरप्रदेशस्य शासनदण्डोऽभिमन्युनामनरपतिकरचालित आसीत्, तदैव चन्द्राचार्यादय दुर्लभं पातञ्जलं महाभाष्यं समलभन्त, नीतवन्तश्च स्वदेश मिति। तथाहि ( रा० त० १, १७६, )—

"चन्द्राचार्यादिभिर्लब्ध्वा देशं तस्मात्तदागमम्।
प्रवर्त्तितं महाभाष्यं स्वञ्च व्याकरणं कृतम्॥"-इत्यादि।

विशेषतश्चावगम्यते वाक्यपदीयस्थापनीपाठात्,— विलोपदशायस्तं नैकैक महाभाष्यपुस्तकं दाक्षिणात्येषु पार्वत्यप्रदेशाल्लब्धम् चन्द्राचार्यादिभिरिति। तथाहि—

"प्रायेण सङ्क्षेपरुचीनल्पविद्यापरिग्रहान्।
सम्प्राप्य वैयाकरणान् सङ्ग्रहेऽस्त मुपागते।
कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।
सर्वेषां न्यायवीजानां महाभाष्ये निबन्धने।
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात्।
अस्मिन्नकृतबुद्धीनां नैवावास्थितनिश्चय।
य पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागम।
कालेन दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थित।

पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः"—इति ।

वाक्यपदीयग्रन्थश्चैष कारिकाबद्धो महाभाष्यतात्पर्यज्ञापकः; चन्द्राचार्यात्, आचार्यवसुराताच्च परभवेन भर्तृहरिणा प्रणीतः। एतदीयश्लोका एव 'हरिकारिका.' उच्यन्ते। एवञ्चाभिमन्युनरपतेर्जन्मतोऽपि बहुपूर्वं विरचितं महाभाष्य मिति गम्यत एव।

पाश्चात्याः किल बहव एव धीरा अभिमन्युकालसमालोचने प्रवृत्ताः; तत्र विल्फर्डमहोदयेन ४२३ खी० पू० तद्राज्यान्तो निर्णीतः, प्रिन्सिप्महोदयेन तु ७३खी० पू० तद्राज्यान्तः स्वीकृतः, लासेन् महोदयेन तु खीष्टीयचत्वारिंशाब्दगते एव तद्राज्यारम्भ इति स्थिरीकृतम्, बोथ्लिङ्गमहोदयेन हि खीष्टजन्मतः शतवर्षपूर्वं मेवाभिमन्युः काश्मीरसिंहासन मलङ्कारेत्युक्तम् *। तदेतन्मतं (बोथ्लिङ्गीयं) प्रिन्सिप्-मतेनैक्यं गच्छति च; राजतरङ्गिण्यां तद्राज्यकालः पञ्चत्रिंशदब्दमित इत्यभ्युपगमात्। तथाच ७३ खी० पू० अभिमन्युराज्यान्त इति स्वीकृते स्वीकृत मेव स्यात् १०८ खी० पू० अभिमन्युराज्यारम्भ प्रिन्सिप्महोदयस्यापि। तदेतदैक्य मतं मतद्वय मेवावलम्बनीय मिह विभ्रमगताना मस्माक मित्यतः खीष्टजन्मतो ऽप्यष्टाधिकशतवर्षपूर्व मपि स्थितं महाभाष्य मिति लब्धम्।

ततः पूर्वप्रदर्शितवाक्यपदीयवचनालोचनादिद मपि प्रतीयत एव तदानीं खल्विदं पुनरुद्धृत मिति। तथाचेदं विचार्य मस्म-सम्,— एतादृशो महान् ग्रन्थः कियत्सु कालेषु प्रचरद्रूपः सम-भवत्?— ततः क्रमात् कियत्सु च कालेषु लुप्तदशां गत?

* Otto Boethlingk's PANINI, P. XIV—XVIII

इति। एष महाभाष्यकारस्तु गोनर्द्ददेशीयः। तथाह्याह स स्वयमेव परीक्षहत्या— "गोनर्दीयस्त्वाह"–इत्येवमादि ( पा० १. १. २१. ); व्याख्यातश्च तत् तट्टीकाकृता कैयटेन— "भाष्यकारस्त्वाह"–इति ; कैयटटीकाकृन्नागेशोऽपि तथैव व्याचष्टे — "गोनर्दीयपदं व्याचष्टे भाष्यकार इति"–इति। गोनर्द्ददेशवासित्वादेव च पतञ्जलेर्गोनर्दीयत्वं स्पष्टम्। स एव गोनर्द्ददेशः सम्प्रति "गोण्डा"–इति प्रसिद्धोऽयोध्याप्रदेशीय इति निर्णीतश्चास्मद्देशीयाध्यापकविशेषेण रामकृष्णगोपालभण्डारकरेण *। एष एव "गोण्डा" गोनर्दो भवतु मा भूद् वा, गोनर्द्दस्तु प्राग्देशविशेषस्तत्र नास्त्येव संशयः; काशिकायाम्— "एङ् प्राचां देशे" ( पा० १. १. ७५. )"–इत्यस्योदाहरणेषु 'गोनर्दीय.'–इतिपदस्यापि दर्शनात्। तदानीं च नासन् खल्विदानीन्तना इव लौहवर्त्मसा अपि धूमयानशकटाः, आसंश्च प्रायः प्रतिनगरान्तेषु दुर्लङ्घ्याः कान्ताराश्च, प्रसङ्गतस्तदप्युक्तं महाभाष्ये— "कश्चित् कान्तारे समुपस्थिते सार्थं मुपादत्ते, स यदा निष्कान्तारीभूतो भवति तदा सार्थं जहाति ( १अ० १पा० ८आ० )"–इति। प्रदर्शितवाक्यपदीयवचनात्त्ववगम्यत एवैतत्,— चन्द्राचार्यादिभिर्दाक्षिणात्येष्वेक मेव लुप्तावशिष्टं महाभाष्यपुस्तक मवाप मिति। तदत्र विचार्यतां तावत् धीमद्भिः,— तदानीं खलु प्राच्यदेशतो दाक्षिणात्य यावत् भाष्यप्रचलनाय कत्यब्दाः प्रयोजनीयाः सञ्जाताः? कतिष्वब्देषु च तत् प्रचरद्रूपं स्थितम्? कियद्भिश्च कालैः पुनर्लोपदशां गत मलाभि च चन्द्राचार्यादिभिरिति।

* INDIAN ANTIQUARY, Vol II P 70

अस्मन्मते त्वभिमन्युराज्यकालतोऽन्यूनसार्द्धद्विशतवर्षपूर्वं प्रणीत मेतन्महाभाष्यम्; अन्तरेण हि सार्द्धद्विशताब्दकाल मेतादृशस्य महतो ग्रन्थस्य आर्यावर्त्तीयप्राच्यदेशाद्दाक्षिणात्यं यावत् प्रचारो सुप्रमायता च न सम्भवेदिति। एवञ्च महाप्रभावः खल्वालेग्-जण्डरो दिग्विजयाय यदेदं भारतं प्रविष्टः ( ३२७ खी॰ पू॰ ), तत्पूर्व मेव प्रणीतं महाभाष्य मिति। अत एव दिग्विजयिना तेन ग्रीक्नृपतिना कृतः साङ्कलनगरध्वंसो नावगतो महाभाष्य-कारस्यैतस्य पतञ्जलेः। सति ह्यवगते "सङ्कलादिभ्यश्च ( पा॰ ४. २. ७५.)"—इति सूत्रेऽवश्य मेवोच्येत 'सङ्कलेन निर्वृत्तः साङ्कलो जनपद इदानीं ध्वस्तः'—इति; कस्य हि नाम ग्रन्थकारस्य शताब्दवृत्तं किञ्चिदधिकशताब्दवृत्तं वा जनपदध्वंसनविवरण मपि न श्रुतं स्यात्? नापि स्मृतिपथ मारोहेत्? अथवा सङ्कलेन निर्वृत्तः साङ्कलो जनपदः आसीदित्येव मप्याशङ्केतैव।

यदुच्येत इरावत्याः पश्चिमोपतटस्थितं शाकल मेव नगर मासीत् पुरा साङ्कल मिति प्रसिद्धम्, तदेव ग्रीकनृपतिना विध्वस्त मपि पुनः कालात् प्रादुर्भूतं, चैनिकपरिव्राजकेन होयेन्थसाङ्ग-नापि ( ६२८—६४५ खी॰ पू॰ ) दृष्ट मिति होयेन्थसाङ्गतो बहु-पूर्वजस्य भाष्यकारस्य न तत्र ध्वंसनकथनावसरो नापि सन्देहा-वसर इति। तत्र ब्रूमः,— शाकलसाङ्कलयोरुभयोरेव पाणिनीये प्रस्थाने पृथक्त्वेनावस्थानात् नैवास्ति तादृशकथनावसरः। किञ्च तेन हि दिग्विजयिना इरावतीं समुत्तीर्य्यैव इरावतीपूर्वोपतटस्थं मरा-जकप्रायं साङ्कलं विध्वस्त मित्येव मैवैतिहासिकम् *; चैनिक-

* INDIAN ANTIQUARY, Vol. I, P. 21—23.

परिव्राजकस्य ह्वेन्थ्सङ्गस्य निर्दिष्टतस्तद्धगम्यते तत्तीर्थयात्राकाले शाकलं नाम नगरं विरावत्याः पश्चिमोपतटे एव स्थित मिति। तथाच नामभेदात् संस्थानभेदाच्चानयोः पार्थक्यं सुव्यक्तत एव। तदित्थमस्य मिदं स्वीकार्यम्,— पाणिनिकाले योऽसौ शाकलो नामासीत् कश्चन महाजनपदः पूर्वोपतटस्थ एवैरावत्याः, स एव कालात् भ्रंशः धीमता दिग्विजयिना तेन ध्वस्तश्च; शाकल मिति तु तस्माद् विभिन्न मेव स्थान मिरावत्याः पश्चिमोपतटे चिरात् स्थितम्, तदेव दृष्टा यथावद् वर्णितं तीर्थयात्रागतेन तेन चैनिकपरिव्राजकेनेति। अपि तेन हि चैनिकपरिव्राजकेन यस्य शाकलस्य नगरत्वं वर्णितम्, तस्यैव "शाकलं नाम वाहीकग्राम" (४ अ० २ पा० २ आ०)"–इति ग्रामत्वेन व्यपदेशो लक्ष्यते महाभाष्ये; ततश्च ज्ञायते,— इह चैनिकपरिव्राजकागमनसमये तस्य स्थितं नगरत्वम्, ततः पुरा भाष्यकारसमये तु ग्रामत्व मेवासीदस्येति; ग्राम एव हि नगरत्व माप्नु युन्यत एव क्रमोन्नत्येति। एवञ्चेह चैनिकपरिव्राजकागमनात् बहुपूर्वम्, तस्य हि ग्रीक् नरपतेर्विजयागमनाच्च पूर्वं मेव सुतरां खीष्टजन्मतः सार्द्धत्रिशतवर्षतोऽपि प्राक् प्रणीतं पातञ्जलं महाभाष्य मिति चायगम्यते।

अन्यच्च। आसन् पुरा केचन मालवाः क्षुद्रकाश्च ('माल्ली', 'अघिद्रक') पार्वत्या आयुधजीविनः; दिग्विजयायागतेन हि तेन ग्रीकनरपतिना प्रायो निर्मूलिता एव त इति च प्रवदन्त्येवैतिहासिकाः *; परं पातञ्जले तु महाभाष्ये असकृदुक्त श्रूयते— "एकाकिभिः क्षुद्रकैः जितम् (१ अ० १ पा० ५ आ०; ५ अ०

---

* INDIAN ANTIQUARY, Vol. I, P. 21—23.

३ पा० १ आ० )"–इति। तदेतद् विचारयन्तु धीमन्तः,— यदि हि नाम भाष्यकृज्जन्मतः पुरैव मालव्यचुद्रकजातयो दिग्विजयिना तेनालेग्‌जण्डरेण विजिता विनष्टाश्च स्युस्तर्हि तेषां विजयित्वोल्लेखस्तु दूरे आस्तां मस्तित्वोल्लेख एव कथङ्कारङ्कृतः स्यादिति ? तदेतदपि मान सिद्यालेग्‌जण्डरागमनादपि प्राक्तनत्वेऽस्य भाष्यकारस्येति।

कियत्कालकृतं तत् प्राक्तनत्वम् ? अत्र ब्रूमः,— अस्तीह पातञ्जले महाभाष्ये पाटलीपुत्रनामकीर्त्तनं मनेकधैव। तथाहि —"साङ्काश्यकेभ्यः पाटलीपुत्रका आढ्यतराः (१ अ० ३ पा० १आ० )"–इति, पुनस्तत्रैव "साङ्काश्यकेभ्यः पाटलीपुत्रका अभिरूपतराः (१अ० ४पा० ३आ०)"–इति च; एवमादयो द्रष्टव्या। महावंशनामकस्य बौद्धग्रन्थस्य द्वितीयपरिच्छेदपर्य्यालोचनयैतच्च स्थिरीभूतम्,—बौद्धधर्म्मस्य सुप्रचारकः शाक्यमुनिः खल्वजातशत्रोः राज्याभिषेकादतीतेऽष्टमे वर्षे ( खी० पू० ५४३ ) निर्वाणं गत इति *। तस्यैवाजातशत्रोः पुत्त्रः पौत्रो वाभूत् उदयाश्व इति प्रसिद्धः। तेनैवोदयाश्वेन पाटलीपुत्त्रं नाम नगरं निर्म्मापित मिति च वायुपुराणादिभ्योऽवगम्यते। तथाहि—

"स वै पुरवरं राजा पृथिव्यां कुसुमाह्वयम्।
गङ्गाया दक्षिणे कोणे चतुर्थेऽब्दे करिष्यति"–इति †।

त्रिकाण्डकोषहेमचन्द्रीयाभिधानादिभ्यश्चावगतम्,— पुष्पपुरं कुसुमपुरञ्च तस्यैव नगरस्य नामद्वय मिति। तदेवं शाक्यबुद्धनिर्वा-

---

* TURNOUR'S 'महावंश' APPENDIX, P. IX.

† The Pilgrimage of Fa Hian, Calcutta, 1848 pp 259, 260

ततोऽप्यूनपञ्चाशद्वर्षानन्तर मेव प्रादुर्भूतं पाटलीपुत्रं नाम महद् नगर मिति च वक्तुं शक्यते; महाभाष्यं तु तत उत्तरं प्रणीत मिति।

किञ्चास्य पतञ्जलेः शाक्यबुद्धपरभवत्वनिर्णयेऽपरश्च हेतुरयम्; अस्ति सूत्रम् "इतराभ्योऽपि दृश्यन्ते ( पा० ५. ३. १४. )"–इति, अनेन च तसिलादयो विधीयन्ते; ते खलु भाष्यकृता भवदादिभिर्योगे एवेष्टाः; भवदादिषु च 'देवानाम्प्रियः'–इत्येतदपि समस्तं पदं पठितम्। दृश्यते च बौद्धग्रन्थे बौद्धानां 'देवानाम्प्रियः' –इति प्रशंसाख्यानम्। अतो ज्ञायत एवास्य भाष्यकारस्य शाक्यबुद्धजन्मपरभवत्वम्। तथैवास्ति "षष्ठ्या आक्रोशे ( ६. ३. २१.)" –इति पाणिनिसूत्रम्। अत्र च सन्ति कात्यायनकृतानि कतिचिद् वार्त्तिकानि; तेषु चैकम् "देवानाम्प्रिय इति च मूर्खे"–इति। भाष्यकारस्तु तत्र 'मूर्खे'–इत्यंशं परित्यज्यैवाब्रवीत् 'देवानाम्प्रिय इति चोपसङ्ख्यानं कर्त्तव्यम्"–इति। तथाचेद मपि सुव्यक्तम्,— कात्यायनकाले मूर्खाभिधान मेवासीत् देवानाम्प्रिय इति; ततोऽतीते बहुदिने बौद्धमान्याभिधान मभूत्तदेव; तत्कालज एवैष पतञ्जलिः सामयिकव्यवहारानुरोधत एव विससर्ज ततो वार्त्तिकात् 'मूर्खे'–इति। वस्तुतो यथेह भारते मुहम्मदीयराज्यस्थापनात् प्रागप्यपरदेशे हिन्दुरिति व्यवहार आसीदेव अधार्मिकेषु; तत उत्तरं सैव समाख्या तदाक्रोशकृतोपचरितेवाभ्यासु च; ततो वय मपि "हीनञ्च दूषयत्यस्मात् हिन्दुः"–इति (मेरुतन्त्रे) व्युत्पादन मभिमत्यात्मनो हिन्दुनामकथनेऽपि गौरव मेव मन्यामहे; तथैव पुरा खलु पाणिनिकाले 'देवानां प्रियः'–इति पदद्वय मसमस्त मेवासीद् व्यवहार्यम्; एतेन चासमस्तपदद्वयेन यष्टीयपयोरिव बोधश्च भवति स्म; तत उत्तरं कात्यायनकाले मूर्खे

एव तत् समस्त मेकपदीभूतं पद्यनुस्यतार्थकं व्यपदिष्टम् ; ततो- ऽनन्तरं बौद्धानां मूर्खत्व मेवाभिसन्धानैरार्यैः प्रयुक्तं तत् तेषु ; काले तदेव पदं प्रशंसावचन मिति मत्वा स्वहीतं स्वस्वनामसु नैर्बौद्धैरिति तदानीं तात्कालिकव्यवहारानुरोधत एव परित्यक्तो वार्त्तिकीयो 'मूर्ख'-इत्यंशो भाष्यकृतेति। एतावता तु सामान्यतः ख्रीष्टजन्मतः सार्द्धत्रिशतवर्षपूर्वम् , शाक्यबुद्धनिर्वाणतश्चान्यूनपञ्चा- शद्वर्षोत्तरम् ( ख्री० पू० ३५०—५०० ) प्रणीत मेतत् पातञ्जलं महाभाष्य मित्युपलभ्यते।

परन्त्वत्रापि किञ्चिद् विशेषोऽस्ति विवेच्यम्। महावंशनाम- बौद्धग्रन्थे त्वेतदपि लिखित मस्ति ,— जीवत्येव शाक्यमुनौ शोण- तीरे पाटलीनामग्रामे अजातशत्रोः आज्ञया दुर्गस्यैकस्य निर्माण मारब्धम् , तद् दृष्ट्वा कथिता चैषा भविष्यद्वाणी तेनैव शाक्य- मुनिना ,— "काले एतदेव भविष्यति प्रधानं नगरम्"-इति। तथाच स एव ग्रामो नगरत्व मुपगत इति प्रथमं तावत् शोणती- रस्थं शोणसङ्गमस्थं वासीत् पाटलीपुत्रम् ; ततः पश्चात् काल- चक्रपरिभ्रमणवशात् गङ्गातटे परिशोभित मित्यनुमीयतेऽस्माभिः। यदा तु गङ्गातीरे, तदैवाभूद् वायुपुराणम् (६८ पृ० द्र०) ; तात्का- लिक मेव च वर्णनं लभ्यते चन्द्रगुप्तसमसामयिके मुद्राराक्षसे,— "स्वय मेव सुगाङ्गप्रासादशिखरगतेन देवेनावलोकित मप्रवृत्त- कौमुदीमहोत्सवं कुसुमपुरम् ( ३अ० )"-इति। गङ्गातीरस्थ मेव तत् पाटलीपुत्रं त्वद्यापि दृश्यते। हितोपदेशादिषु अनतिप्राचीन- तमग्रन्थेषु प्रायस्तथैव वर्णितं च— "अस्ति भागीरथीतीरे पाटलीपुत्रं नामधेयं नगरम्"-इत्यादि। परं यदा तु शोणतीरे, शोणगङ्गासङ्गमोपतटे वा स्थितम् पाटलीपुत्रम् , तदैव जातोऽयं

गोनर्द्दं पतञ्जलिः ; अत एव भाषित मत्र महाभाष्ये "अनुशोणं पाटलीपुत्रम् ( २ अ० १ पा० २ आ० )"-इति ; न त्वनुगङ्गम्। ततश्च वायुपुराणमुद्राराक्षसादिवर्णितपाटलीपुत्रात् प्राचीनम् महाभाष्यीयं पाटलीपुत्र मिति स्पष्टम्। तदेवं पाटलीपुत्रस्यादिमावस्थाया मेवेदं भाष्य प्रणीत मिति यस्या मेव शताब्द्यां शाक्यबुद्धो निर्वाणं गत', तच्छताब्द्या मेवैष पतञ्जलिः सञ्जात इत्यपि वक्तुं शक्नुयामेव।

वस्तुतोऽयं भाष्यकार', शाक्यमुनेर्बुद्धात् न बह्वर्वाचीनः ; जीवति हि पतञ्जलौ नाभवत् शाक्यमतप्रचारः समन्तात् ; सुप्रचरिते हि तत्र बौद्धमते निर्वाणार्थोऽपि कथं न ज्ञात आसीत् पतञ्जले. ? वाते च तत्र, "निर्वाणोऽवाते ( पा० ८. २. ५०. )" -इति सूत्रभाष्ये तद्विषयकविचारोऽपि कथं नाकारि तेन ? सति हि तदानीं शाक्यमतप्रचारप्राबल्येऽवश्य मेव तत्र तद्विषयकोऽपि विचारो लोक्येतैव। तादृशप्राबल्याभावस्य चास्यदिनप्रसरतैव निदानं मनुमीयते। तदेव कालाशोककृतात् द्वितीयमहासङ्गमात् पुरैवेदं महाभाष्य प्रकाशित मित्यप्युक्तं न दोषाय। स च बौद्धानां द्वितीय महासङ्गमो नून खीष्टजन्मतः चतुःशताब्द्या अपि प्रागभूदिति च महावंशग्रन्थीयदशपरिच्छेदालोचनात् निर्णीत मेव *। सिद्ध मित्थं खीष्टजन्मतो ऽन्यूनपादैकचतुःशताब्दीपूर्वम् ( ४५० खी० पू० ) कलेश सप्तविंशशताब्द्यां प्रणीत मिदं पातञ्जल महाभाष्य मिति ॥

अथ ये चात्र वादिनो विप्रवदन्ते, तानपीह किञ्चित् प्रतिबोधयामः स्वोपलब्ध्यनुसारत., न चेह्यस्माकं हठकारिता जिगीषा वा।

* Turner's महावंश' P 71

अत्र केचिदाहुः ।— (क) "सभाराजाऽमनुष्यपूर्वा (पा० २. ४. १३)"–इति–सूत्रीयभाष्ये "तद्विशेषणानाञ्च न भवति। पुष्यमित्रसभा ; चन्द्रगुप्तसभा"–इत्युक्तं यतो लभ्यते, ततो गम्यत एवैतत् ,— मगधराजविशेषः पुष्यमित्रः, तद्वत्पूर्वभवश्चन्द्रगुप्त- श्चेत्येतावपि राजानौ पतञ्जलेर्विज्ञातावेवेति तदेतस्य चन्द्रगुप्त परभवत्वविचारस्तु दूरे आस्ताम्, तद्वत्परजात् पुष्यमित्रा- दप्यवरजत्वं सम्पद्यत एवेति । अत्र वदाम. ;— पुष्यमित्रराज्यन्तु (खी० पू० १७८-१४२) द्विचत्वारिंशदधिकशततवर्षपूर्वं वृत्तं खीष्ट- जन्मत इति तैरेव निरूपितम् * ; अभिमन्युराजाश्रयैव लोपदशा- ग्रस्त भाष्य पुनरुज्जीवितं चन्द्राचार्यादिभिरिति च सर्ववादिसम्म- तम् ; तत्राभिमन्योः राज्यकालस्य खीष्टजन्मतो ऽष्टाधिकशततवर्ष- पूर्वं मित्यपि बोथ्लिङ्गादिसम्मत्या निरूपित मेव (६५ पृ०)। तत् कथयन्तु भवन्त एव,— न्यूनाधिकचतुस्त्रिंशदब्देष्वेव कि मेतादृशस्य महाग्रन्थस्य तदानीन्तनीये कान्तारपूर्णे भारते आर्यावर्तीयप्रदेशात् दाक्षिणात्यं यावत् सुप्रचलनं कालाल्लोपदशा- ग्रस्तत्वञ्च सम्भवेत् किम् ? चेत्रा सम्भवेत् सम्भवतु नाम । अस्मा- कन्तु नायं विश्वासविषय. । अस्मन्मते तु चन्द्रगुप्त पुष्यमित्रयेमा- वुभावेव तादृशनामराजानौ भाष्यकारेण कल्पितौ ; सन्त्येवं हि देवदत्तयज्ञदत्तविष्णुमित्रादयो बहव एव व्यक्तयो वैयाकरणादिभिः कल्पिताः । महाभाष्ये दृष्टैव च तथाविधं नामकरण स्वसुतस्य कृतं तदुत्तरं तत्तत्पितेति च सम्भवपर मेव । अन्यथा हि 'चन्द्र- गुप्तसभा'–इति प्रथमं मन्युदाहृत्यैव तत उच्येत पुष्यमित्रसभेति,

* Wilson's VISHNUPURANA, Vol IV 190

तयोस्तथैवपौर्वापर्य्यात् * ; न हि प्रसिद्धपौर्वापर्य्यक्रमोल्लङ्घन मुचितं तादृशस्याप्रियत्वेमुपौसन्यतस्य महाभाष्यकारस्येति। किञ्च चन्द्रगुप्तकाले तु पाटलीपुत्रं नगर मनुगङ्ग मेव वर्णितं मुद्राराक्षसादौ (७२ पृ०), ततोऽद्यापि तथैव ; तदत्र विचार्य्यता मिद मपि, — "यदि नाम चन्द्रगुप्तराज्यकाले पुष्यमित्रराज्यकाले वा महाभाष्यं प्रणीतं स्यात्, तर्हि कथन्नाम तत्र "अनुशोणं पाटलीपुत्रम्"–इति (७२ पृ०) भाष्यतेति ? अस्मन्मते तु चन्द्रगुप्तराज्यकालात्पूर्वन्त्वासीदेव पाटलीपुत्र मनुशोण मित्युक्त मतो युक्ततरं चैतत् चन्द्रगुप्तादपि प्राचीनत्वं भगवतः पतञ्जलेः किमु पुष्यमित्रादिति।

(ख) यदप्युक्तं "वर्त्तमाने लट् (पा० ३. २. १२३.)"–इति-सूत्रीयभाष्ये "इह पुष्यमित्रं याजयाम."–इत्युत्तमपुरुषप्रयोगात् पतञ्जलेः पुष्यमित्रार्त्विज्य मपि स्फुटम्, तदस्तं तत्कालिकत्वातत्कालिकत्वविचारेणैतीति। तदपि न विचारसहम्। यदेव उत्तमप्रयोगदर्शनादेव तस्य याजकत्व मङ्गीक्रियेत, तर्हि तत्रैव 'इह वसाम.'–इतिप्रयोगदर्शनात् तस्य पाटलीपुत्रवासित्व मप्यङ्गीकरणीयं भवेत्। न च पुष्यमित्रयागानुरोधेनैव तदानीं तस्य तत्र वासश्चासीदेवेतीष्ट मेवेति वाच्यम्; सति हि तस्य तादृश-वासाभ्याभिमते तिष्ठाम इत्येव मेव क्रिया प्रयुज्येत, न तु वसाम इति ; गौनर्द्दवासित्वात्तस्य। किञ्च तत्रैव "इहाधीमहे"–इत्यप्युक्त मस्ति ; तत् किं तदानीं मपि पतञ्जलिः तत्र पाटलीपुत्रेऽध्ययनार्थं स्थितः ? गुरुमुखादर्थग्रहण मेव ह्यध्ययन माचार्य्यसम्मतम् ;

* S. W. Joue's 'Chronology of the Hindus' in Asiatic Dissertation Vol I p. 315, and Asiatic Researches, Vol IX p 96

मत् तदानीं तत्र पतञ्जलेर्न कथ मपि सम्भाव्यते केनचिदपि ; तथाचावश्य मेव वक्तव्यम् ,— एवमादिभूतमवद्‌प्रयोगदर्शनं न तु पतञ्जलेः स्वस्य तद्‌ग्रामगम्यवत्त्वं गमयति ; अपि तु वैयाकरणाना मुदाहरणप्रत्युदाहरणप्रदर्शनार्थेयं प्रयोगास्तथैव मेव कल्पनीयाः सदैवेति । तदेवं यथैवोक्तम् "इह वसामः"–इति , यथैव च "इह अधीमहे"–इति, तथैव "इह पुष्यमित्रं याजयामः"–इति च ; न च तेभ्यः किं मप्यैतिहासिकं तथ्यं लभ्य मस्ति । वस्तुतः पाटलीपुत्रः पतञ्जलिना दृष्ट इति तु खलु वक्तुं शक्यते, परं पाटलीपुत्रस्थ एवेदं भाष्यं व्यरचयदिति तु न कदापि वक्तुं युज्यते। अथैतच्च भाषितं तेनैव— "यथा देवदत्त इह भूत्वा पाटलीपुत्रे भवति , सा नूनं क्रिया ( १ अ० ३ पा० १ आ० )"–इति , पुनस्तत्रैव क्वचिदग्रे–"स इहस्थः पाटलीपुत्रस्थं देवदत्त मुपदिशति ,—अङ्गदी कुण्डली व्यूढोरस्को वृत्तबाहुर्लोहिताक्षस्तुङ्गनासिको विचित्राभरण ईदृशो देवदत्त इति ( १अ० ३पा० १आ० )" –इति च ; एवमादिप्रयोगदर्शनाच्च कः खलु प्रज्ञावान् मनसापि शङ्कितुं समर्थः पाटलीपुत्रनगरे स्थित एव पतञ्जलिः प्रणिनाये-तद्भाष्य मिति । किञ्च प्रदर्शितयोरुदाहरणयोर्यथा किल देवदत्तो भाष्यकृत्कल्पित एव जनः , ततः प्रख्यातायाश्चापि द्वयन्त एव बहवो देवदत्ताः ; यथा च "पश्य देवदत्त कटं श्रितो विष्णुमित्रे गुरुकुलम् ( २अ० १पा० १आ० )"इत्यत्र च देवदत्त–विष्णुमित्रौ कल्पितौ , तथैव तत्र पुष्यमित्र-चन्द्रगुप्तावित्यपीत्यत्र च नास्त्येव सन्देहलेशोऽपीति ।

प्रतिपादितञ्च पुरस्तात् ,—अथ्यप्रचलितमहाभारतात् पूर्वजत्वं त्वेतन्महाभाष्यस्य ( ५८ पृ० ) ; तस्माद्धेतस्य स्फोटजननौ दियता-

ब्दीपूर्व्वाङ्गत्वन्तु पाश्चात्त्यैरपि स्वीकार्य्यम्; महाभारतस्यास्य हि खीष्टजन्मतो द्विशताब्दीपूर्वप्रणीतत्वे सर्वेषा मेव तेषां मतै-क्यात् *। पुष्पमित्रस्य राज्यारम्भकालस्तु तैः खीष्टजन्मतः शताब्दीपूर्व मित्येव निर्णीतम्; तथाच स्वकृतसिद्धान्तव्याकोपभि यापि तैषां स्वीकार्य मेवास्य पतञ्जलेः तत्पुष्यमित्रतोऽतिपूर्वजत्वम्, तथा तादृशोदाहरणे श्रुतस्य तस्य कल्पितत्वञ्च। स्वीकृते चैवं तत्तुल्यतया 'चन्द्रगुप्तसभा'-इत्यत्र चोदाहरणे चन्द्रगुप्तेत्यास्यव्यक्तेरपि भाष्यकारस्वकपोलकल्पितत्वं सुवच मेवेत्यलं मतिजल्पनेनेति।

(ग) अस्ति चैकं सूत्रम्— "अनद्यतने लङ् (पा॰ ३.२. १११.)" —इति। तद्भाष्ये च वार्त्तिकोदाहरणतया द्वे वाक्ये अवलोक्येते, — "अरुणद् यवनः साकेतम्, अरुणद् यवनो माध्यमिकान्"— इति। अत्र कश्चित् धीमान् माध्यमिकानिति नागार्ज्जुनमतानु गतबौद्धसम्प्रदायविशेषस्यैतानेव मत्वा पतञ्जलिकालनिर्णये यति-तवान्, तदपि भ्रमसङ्कुल मिवैवाभाति; राजतरङ्गिणी-पर्या-लोचनया हि स्फुट मेवावगम्यते नागार्जुनोऽसावभिमन्युसम कालिक एवेति। तथाहि (१. १७४—१७८.)—

> "अथ निष्कण्टको राजा कण्टकोत्सायशारदः।
> आवीरभूदभिमन्युः शतमन्युरिवापरः।
> स्वनामाङ्कयशाङ्काङ्कशेखरं विरचय्य सः।
> परार्द्धविभवं श्रीमानभिमन्युपुरं व्यधात्।
> चन्द्राचार्य्यादिभिः ०—० व्याकरणं कृतम्।
> तस्मिन्नवसरे बौद्धा देशे प्रबलतां ययुः।
> नागार्जुनेन सुधिया बोधिसत्त्वेन पालिताः।

* W. W. Hunter's 'Brief History of the Indian People', p 53.

ते वादिनः पराजित्य वादेन निखिलान् बुधान् ।

क्रिया नीलपुराणोक्ता मच्छिन्दन्नागमद्विपः"—इति ।

अभिमन्युसमये एव च "चन्द्राचार्यादिभिर्वद्धन्येयपतो द्योकं महाभाष्यपुस्तक दाक्षिणात्यादानीत मिति तु सर्ववादिसम्मत मवेत्युक्तम् ( ६४ पृ० ) । तत्कथ मभिमन्युतो बहुप्रजस्य पतञ्जलेः किलाभिमन्युसमकालोत्पन्नमाध्यमिकज्ञानसम्भवो यतश्च तादृशाना माध्यमिकाना मवरोधदर्शन मपि तस्य सम्भाव्येत नामेति सुधीभिरेव विभाव्यताम् ।

अस्मन्मते त्विह भाष्ये माध्यमिकशब्दात् मध्यदेशप्रभवा एव ग्रहणीयाः । मध्यदेशस्तु मन्वादौ परिभाषित एव,—

"हिमवद्विन्ध्ययोर्मध्यं यत् प्राग् विनशनादपि ।

प्रत्यगेवप्रयागाच्च मध्यदेशः प्रकीर्त्तितः (२. २१.)"—इति ।

पातञ्जलेचैतन्मनूत्तरभवत्वं पुर एव प्रतिपादितम् ( ६१ पृ० ); तथाचैतन्मनूक्तमध्यमदेशभवाना मेव माध्यमिकत्व तदभिमतं सम्भाव्यते । बृहत्संहितायाः समालोचनाच्च मध्यदेशजनामपर-तयापि भवन्ति माध्यमिका इति बुध्यते । तथाहि—

"भद्रारिमेदमाण्डव्यसाल्वनीपोज्जिहानसङ्ख्याताः ।

मरुवत्सघोषयामुनसारस्वतमाध्यमिकाः (१४. २.)"—इति ।

वस्तुतो यवनावरोधानुसारत एव भाष्यकालनिर्णयस्तु सर्वथा असम्भव एव; भारते हि चिरादेव विद्यन्ते यवनोत्पाताः । महाभारतपाठादवगम्यत एव यौधिष्ठिरीयेऽपि काले क्वचित्क्व-चित् यवनप्राबल्यसंवादः, हरिवंशपाठात् जरासिन्धुकालेऽपि यवनराजस्य कालयवनाभिधस्यातिबलत्वं विज्ञायत एव ( हरि० वि० प० १०८—११४ अ० ) । एव मन्यत्रान्यत्रापि भारते यवनो-

त्यातहस्तास्ता बह्वय एव वर्णिता दृश्यन्ते ; तत्र ग्रीक्‌भूपत्यादीना मपीह पदार्पण मसङ्गदेवाभूत्। तदेवं यवनावरोधानुसारतो भाष्यरचनाकालनिर्णये प्रवर्त्तनं नूनं दैवविडम्बन मिति न तदालोचनेऽप्यस्मन्मतिः प्रसरतीति दिक्।

(घ) यच्च कश्चित् "तथाच सूच्यते हि भगवता पिङ्गलेन पाणिन्यनुजेन"–इति षड्गुरुशिष्योक्तं दृष्ट्वैव पाणिनिसमकालिकत्वं पतञ्जलेः स्वीकर्त्तु मिष्टे, पतञ्जलेः पिङ्गल इति नामान्तरश्रवणात्। तस्य खल्वनुत्तमधियः शंसावादाः कथन्नु सम्भवेयुरेकमुखेन? यतोऽश्रुतपूर्वं मेवैतत्तेन निर्णीतं हिमवद्विन्ध्ययोर्मिलन मिवातीव चित्रम्। पाणिनि-पतञ्जल्योः प्रायोऽष्टादशशताब्द्यन्तरितत्वावगमात्। अत एव भगवता पतञ्जलिना क्वचित् क्वचित् पाणिनि-काले व्यवहृतं लौकिकं किञ्चिद् बोधयितुं 'पुराकल्पे'–इति तदुल्लेख कृतः। तथाहि— "पुराकल्पे एतदासीत् ०—० शब्दा उपदिश्यन्ते ०—० एवं विप्रतिपन्नबुद्धिभ्योऽध्येतृभ्य आचार्य इदं शास्त्र मन्वाचष्टे (१अ० १पा० १आ०)"–इति, "पुराकल्पे एतदासीत्— षोड़शमाषाः कार्षापणं षोडशपलाश्च माषसंवत्य (१अ० २पा० ३आ०)"–इति चैवमादि। यद्यपि पाणिन्यनुजस्य पिङ्गल., महाभाष्यकारस्य च नामान्तरं पिङ्गल इति भवितु मर्हतीति सत्यम्; पर मनयोर्नैक्य स्वीकुर्मो वयम्; अपि तु बहुभिन्नकालिकत्व मेव। वस्तुतोऽङ्गवर्णानुसारत एव कृष्ण पिङ्गल-गौर-श्यामेति नामानि तदानी माख्यातानि भवन्ति स्म। छान्दोग्येऽपि श्रूयते चैतच्च पिङ्गल। तथाहि— "अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति (८. ६. १.)"–इत्यादि। न चात्रापि

पिङ्गलनाम्नः पाणिन्यनुजस्यान्यस्य वा कस्यचित् मते इत्येव मर्थो गम्यते; 'शङ्कस'-इत्यादेः, 'आदित्यः पिङ्गलः'-इत्यादेश्चोत्तरत्र तत्रैव श्रवणात्, छान्दोग्यस्य तस्य पाणिनिपूर्वजत्वावधारणाच्च; दृश्यते हि छान्दोग्ये ऽनेकत्र शौनकः कापेयः (पा० ४. ३. ५, ६, ७.), प्रत्युदाहरणञ्च तदेव पद मनुभूयते "कपिबोधादाङ्गिरसे (४. १. १०७.)"-इति पाणिनिसूत्रस्येतीह दिक्।

(ङ) अपि दृश्यते चात्र महाभाष्ये (पा० ४. २. ६०.) आख्यायिकात्वेन वासवदत्ताया ग्रहणम्। "आख्यायिका— वासवदत्तिकः"-इति। सुबन्धुकृतैवाख्यायिका सैति प्रसिद्धा स च सुबन्धुकविः रामायणस्य, महाभारतस्य, तत्परिशिष्टरूपस्य हरिवंशस्य, विक्रमादित्यस्य च परभव एव। तथाहि— "रामायणेनेव सुन्दरकाण्डचारुणा"-इति, 'भारतेनेव सुपर्वणा'-इति 'हरिवंशैरिव पुष्करप्रादुर्भावरमणीयैः'-इति, 'सा रसवत्ता विहता नवका विलसन्ति चरति नो कं कः। सरसीव कीर्तिशेषं गतवति भुवि विक्रमादित्ये"-इति च। तदेव मस्य हि महाभाष्यस्य वासवदत्तापरभवत्वस्वीकारपूर्वकं रामायणादिपरभवत्व मपि मन्तव्य मित्येव मपि कश्चित् शङ्कित् सुस्पष्टैव। पर मवश्यं तस्येमानि च त्रीणि वितर्क्याणि भवेयुः,— यदि हि स्वर्गते च विक्रमादित्ये स्थितस्य सुबन्धोः समनन्तर मेव प्रणीतं स्यात् पातञ्जलं नाम महाभाष्यम्, तर्हि काश्मीरराजाभिमन्युसमये विक्रमादित्यलब्धात् बहुपूर्व मपि चन्द्राचार्यादिभि कथं तद्भाष्यपुस्तक मवाप्त मिति प्रथमम्। सर्वैरेव पुरातत्त्वानुसन्धित्सुभिर्महाभाष्यस्यास्य क्रीष्टजन्मपूर्वप्रणीतत्व मेक-

अथ पतञ्जलिविषये ऽपर मपि किञ्चिद् समालोचयितव्य मस्ति, तदिदम्— 'अय मेव पतञ्जलिः वैद्यशास्त्रप्रणेतापि, योगशास्त्रप्रणेतापि'-इत्येव मस्ति प्रवादः; वयन्त्वत्र नामैक्य मेव बीज मनुगच्छामो नान्यत् किञ्चनेति।

"योगेन चित्तस्य पदेन वाचां मलं शरीरस्य तु वैद्यकेन।
योऽपाकरोत् तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि"

-इत्येष श्लोकोऽपि नूनं प्रणीतो नामैक्यहेतुक एवेति।

यद्युच्येत, वैद्यशास्त्रेऽप्यासीदस्य महाभाष्यकारस्यावगम इति तु प्रतीयत एव; भाष्ये बहुत्र तथाविधप्रयोगदर्शनात्। तद्यथा— "वातिकम्, पैत्तिकम्, श्लैष्मिकम् ०—० सान्निपातिकम् (५अ० १पा० १आ०)"-इति, "दधित्रपुसम्प्रत्यक्षो ज्वरः ०—०। नड्वलोदकं पादरोगः ०—०। आयुर्घृतम् ०—०। (१अ० १पा० २आ०)"-इति, "घृतभोजन मारोग्यस्यादिः (६अ० ४पा० ४आ०)"-इत्यादि चेति। अत्र ब्रूमः,— न हि वैद्यकशब्दादिविन्यासेनैव वैद्यकसूत्रकर्तृत्व मुपपद्यते, अपि चेत एव यदि कश्चित् तस्य वैद्यकभाष्यविशेषकर्तृतां च स्वीकर्त्तु मुत्सहेत, स्वीकरोतु नाम, तत्र नो न क्षतिः। एवं योगशास्त्रीयमूलसूत्रकर्तृत्व मप्यस्य नैव स्वीकार्यम्; नापि तत्र क्वापि योगविषयकोदाहरणानि दृश्यन्ते, येन चास्य योगशास्त्रज्ञत्वस्यापि परिचय उपलभ्येतेति।

एवं षड्गुरुशिष्यलेखोऽपि नामविभ्रममूलक एव। इत्थं यदा तु तेनालेखि— "यत्प्रणीतानि वाक्यानि भगवांस्तु पतञ्जलिः।
व्याख्यायोदाटनीयेन महाभाष्येण हर्षितः।
योगाचार्यः स्वयं कर्त्ता योगशास्त्रनिदानयोः"-इति (प०भा०),

तदेतत्र सूतं किं मस्ति व्यासकृतं भाष्यं तस्य योगशास्त्रस्येति ? पाणिनिसूत्राणां भाष्यस्य कर्तुः पतञ्जलेः पाणिनिपरभवत्वे कास्ति वक्तव्यता !— "पाराशर्यशिलालिभ्याम् ( पा० ४. ३. ११०. )"-इति सूत्रदर्शनात् पाणिनेश्च पारशर्यव्यासपरजत्वं व्यज्यत एव। तदत्र कथयतु नाम नामैक्यश्रवणादेव व्यक्तिभिन्नवादी भवान् योगशास्त्रं खलु पाणिनिपरभवश्चेत् कथं तद्भाष्यकारत्व मुपपद्येत तत्पूर्वजस्य तस्य व्यासस्येति ?

अस्मन्मते तु ,— योगशास्त्रस्य पातञ्जलस्य भाष्यकारो व्यासः, भिक्षुसूत्रकृतो व्यासाद् विभिन्नो बहुपरभवश्चेति ; "भुवनज्ञानं सूर्ये संयमात् ( पात० ३. २४. )"-इति सूत्रीयभाष्येऽनतिप्राचीनपुराणादिसम्मतभुवनवर्णनदर्शनात् तस्य भ्यप्रचलितमहाभारतकारादेरिवानतिप्राचीनत्वावगतेः , लिपेरार्षत्वानवगमादिभ्यश्च। एवं बभूव च कश्चिदपरः पतञ्जलिर्योगसूत्रकृत् दर्शनशास्त्राविर्भावकालिकः , पाणिनितोऽपि प्राचीनः। तथाच पातञ्जलं नाम योगशास्त्रं पाणिनितो बहु प्रागेव प्रणीतम् ; प्राचीनतमे भिक्षुसूत्रेऽपि "एतेन योगः प्रत्युक्तः ( २. १. ३. )"-इत्येवमादिदर्शनात्। अत एव सम्पृचानुरुधा० ( ३. २. १४२. )"-इति पाणिनीयसूत्रेण पातञ्जलशास्त्रविहितयोगाभ्यासकारिणेवार्थे साध्यते 'योगी'-पदम् ; न हि पातञ्जलात् पुरातनं किमप्यस्ति भामीद्वा योगशास्त्रम्। अत एव व्यक्तिविशेषनामत्वादव्युत्पन्नप्रातिपदिक मिति पाणिनिना उपेक्षितस्यापि पतञ्जलिशब्दस्य कात्यायनकृतेन "शकन्ध्वादिषु पररूपम् ( पा० ६. १. ९४. )"-इति वार्त्तिकेन व्युत्पादनं सङ्गच्छते ; न हि परजस्य पतञ्जलेर्ज्ञानं तत्पूर्वजस्य कात्यायनस्य सम्भवेन्नामेति। गणपाठोऽपि पाणिनि-

रिति ध्वनितं पूर्वापरेति ( पा० २. १ ५८.) सूत्रभाष्ये। अपि वा येन केन चित् कृत स्यात् गणपाठ , पर सम्प्रदायात् प्राचीनतरेणैव केनचित कृत एवेत्यत्र तु नैवास्ति सशय , तत एवोक्तम्—"सिद्धन्तु रौढ्यादिषूपसङ्ख्यानात्। ०-०। के पुनरौढ्यादय ? ये क्रौड्यादय (पा० ४ १. ७८ सू० भा०)"-इत्येवमादि।

आदिमीमासाचार्यात् काशकृत्स्नेराप्यय परभव एव , इत्यपि नास्ति सशय । अत एवोक्त मिह—"काशकृत्स्निना प्रोक्ता मीमासा काशकृत्स्नी (४अ० १अ० १आ० पुन ३पा० २आ०)"-इति। इह प्रोक्तत्वोल्लेखदर्शनादस्य च काशकृत्स्ने पाणिनितो बहु पूर्वजत्व मपि ध्वन्यते , तत्पूर्वजस्यैव हि तेन प्रोक्तत्वेन पदृर्णोपदेशात्। अद्यप्रचलितमीमासायाःसूत्राणा कर्त्ता खलु जैमिनिस्तु स्यात् पाणिनिसमकालिक , व्यासशिष्यत्वात् , वैशम्पायनादिवत्। अतो जैमिनेश्वार्वाचीनोऽय पतञ्जलिरिति च सुवचम्।

वेदान्तसूत्राणा प्रणेतुर्व्यासायाय परभव । यदप्येतत् सूत्र पाणिनीयम्— 'पाराशर्यशिलालिभ्या भिक्षुनटसूत्रयो (४ ३ ११०)" -इति , अत पाराशर्यशब्देन वेदान्तसूत्रकृतो व्यासस्यैव बोधात् , अथ वेदान्तेतिप्रसिद्धाना मेव हि सूत्राणां पाणिनिकाले भिक्षुसूत्रेति व्यपदेश आसीत् , न त्वन्यत् किञ्चन भिक्षुसूत्र नामेति। अत एव वेदान्तसूत्रभाष्यवार्त्तिककृत् वानन्दज्ञानस्तोऽपि सर्वेष्व धिकरणेषु भिक्षुसूत्रकृत मित्याद्युक्त्या पाराशर्य व्यास मेव प्रणाम विविधप्रकारेण वर्णयन्। तथाहि , आत्माधिकरणभाष्यवार्त्तिकारम्भे ( सू० ४ । २ )—

"पाराशर्य प्रयत्तु पर भाव मव्याहत स्वम् ,

सूत्रे स्वीये सकलविदुषा मोदमूलस्वभावम्।
शिष्यैर्विप्रैरपि परिवृत पैलपूर्वैं प्रतीते ,
श्राचूड मे सजलजलदाकारदायादमूर्त्ति "–इति।

तथाध्यद्याधिकरणभाष्यवार्त्तिकारम्भे च ( सू० ४ २ ३ )–

"भिक्षुयोगकृत व्यास शङ्करश्च गुरु परम्।
स्मृत्वा व्याकुर्महेऽध्यचसूत्रभाष्यस्य वार्त्तिकम्"–इति।

एवञ्च यान्यखिलसूत्राणि भिक्षुसूत्राणीति पाणिनिकाले प्रथितानि, तान्येवेदानीं ब्रह्मसूत्राणीति वेदान्तसूत्राणीति च कथ्यन्त इति स्फुटम्। सङ्ग्रहकारस्तु व्याडि पतञ्जले रस्मात् पूर्वतन इति तु "सङ्ग्रहेऽस्त मुपागते (६४ पृ० )"–इति भाष्यपदीयवचनादिभ्यश्च सिद्ध मेव, तस्मिन् व्याडिकाले ऽप्यस्य वेदान्तदर्शनस्य ब्रह्मविद्येति प्रसिद्धिरासीत। तथाहि विकृतिवल्लयारम्भे श्लोकित मेतत् स्वय मेव व्याडिना,— ' ब्रह्म विद्यागुरु श्रेष्ठ भारद्वाज बृहस्पतिम् ( १ ३ )"–इति। तदे तस्य ग्रन्थस्य पाराशर्यात् प्राक्तनत्वस्य तु का कथा ? व्याडित , पाणिनितश्चापि प्राक्तनत्व मेवेति।

न्यायवैशेषिककाराभ्या मप्यय पतञ्जलि परभव एव। इत्यत एव हि नैयायिकाद्यनुमानप्रणाल्यादिक तत्कृते महाभाष्ये। तथाहि— "धूम दृष्ट्वा श्रग्निरत्रेति गम्यते ( २श्र० १पा० १श्रा०)" –इत्यादि। वैशेषिक न्यायकारयो कणभक्षाक्षचरणयोश्च वेदान्त सूत्रकार पाराशर्य्य समकालिकत्वचैवानुपद प्रतिपादयिष्याम ।

साङ्ख्याचार्य्यात् कपिलाच्चाय परभव । श्रत एवानेन मन्यते कापिलमतम्— "श्रथवा भवति वै कश्चित जाग्रदपि वर्त्तमान काल नोपलभते। तद्यथा। वैयाकरणाना शाकटायन

रथमार्गे आसीन शकटसार्थं यान्तं नोपलेभे। किं पुनः कारणं जाग्रदपि वर्त्तमान काले नोपलभते? मनसा ह्ययुक्तानीन्द्रियाण्युपलब्धौ कारणानि भवन्ति, मनसोऽसान्निध्यात (२अ० २पा० २आ०)"–इति। अपरत्र चैवम् "षड्भिः प्रकारैः सतां भावाना मनुपलब्धिर्भवति। अतिसन्निकर्षात्, अतिविप्रकर्षात्, मूर्त्त्यन्तरव्यवधानात्, तमसाऽऽवृतत्वात्, इन्द्रियदौर्बल्यात् अति प्रमादादिति (४ अ० १ पा० १ आ०)"–इति। तदेव मादीनां दर्शनात् कापिलशास्त्रप्रचारात्परभवत्त्वं चास्य पतञ्जले सुव्यक्तम्। अपि चास्य कपिलपरभवत्वविचारस्तु दूरे आस्ताम्, तत्सम्प्रदायीयद्वितीयपुरुषादासुरेरप्ययं पतञ्जलिर्बन्हर्वाचीन एव, यतत्पूर्वेणापि हि वार्त्तिककारेण कात्यायनेन "आसुरेरुपसङ्ख्यानम् (पा० ४.१ २८)"–इत्युक्तत्वात्। आसुरिर्हि साङ्ख्याचार्येषु द्वितीय इति दृश्यते। तथाह्युक्तं मीश्वरकृष्णेन— "पुरुषार्थं ज्ञान मिदं गुह्यं परमर्षिणा समाख्यातम्। ०—०। एतत् पवित्र मग्र्यं मुनिरासुरये ऽनुकम्पया प्रददौ (सा० त० कौ० ६८, ७०)"–इति। 'परमर्षिणा कपिलेन'–इति च तत्र वाच स्पतिमिश्रकृता टीका। प्रवचनभाष्येऽप्युक्तम्— "आदिविद्वान् निर्माणचित्त मधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच (१ २५)"–इति।

पाशुपतदर्शनकाराच्चार्षी भाष्यकार कनीयान्। अत एव तत्कृतेऽत्र महाभाष्ये दृश्यते— "शिवभागवत (५ अ० २ पा० १ आ०)"–इति पदम्। "भगवान् भक्तिरस्य भागवत, शिवस्य भागवत इति षष्ठीसमासः"–इति च तत्र व्याख्यातं कैयटेन। एवमिह "मौर्यभगवता उक्तम् (८अ० २पा० २आ०)"–इति

दर्शनाद्यावगम्यतेऽस्य पतञ्जलेः सौरसम्प्रदायारम्भाच्च परमवल्ल मेव ; सौर सौर्ययोर्न ह्येव भेदः। वस्तुतः सौरसम्प्रदायः खलु शैवसम्प्रदायादपि बहुपुरातन एवेति प्रामाणिकाः।

चार्वाकादिनास्तिकदर्शनशास्त्राणि तु बहुपुरातनान्येव न वेत्यत्र स्यात् विचार्यम्, परं नास्तिकभावः खलु पाणिनिकालेऽपि स्थित एव। अत एव स हि सूत्रयामास— "अस्तिनास्तिदिष्टं मतिः ( ४. ४. ६०. )"-इति। मनुसंहितायां अपि नास्तिकशासनवचनानि सन्त्येव, तानि चानुपदं प्रदर्शयिष्यामः। पतञ्जलिनापि स्वस्य नास्तिकमतज्ञता प्रकाशितैव। तथाहि— "किञ्च भोः श्लोका अपि प्रमाणम् ? किञ्चातः ? यदि प्रमाणम्, अय मपि प्रमाणं भवितु मर्हति—

"यदुदुम्बरवर्णानां घटीनां मण्डलं महत्।
पीतं न गमयेत् स्वर्गं किन्तु क्रतुगतं नयेत्'-इति।

प्रमत्तगीत एषः। भवती यस्त्वप्रमत्तगीतः तत् प्रमाणम् ( १ अ० १ पा० १ आ० )"-इति। "यदुदुम्बरेति। अयं श्लोकः सौत्रामणीयागे सुरापानस्य दुष्टत्व मुद्भावयति। प्रमत्तगीत इति। प्रमादेन विप्रतिपन्नत्वेन गीत इत्यर्थः"-इति च सत्र कैयटः। अस्मन्मते तु 'उदुम्बरवर्णानाम्' उदुम्बरकाष्ठनिर्मितानाम्, 'घटीनाम्' अर्हतिप्रसिद्धानां सोमपात्राणां 'यत् महत् मण्डलम्' शुक्र मन्थ्यादिसमूहः आध्वर्यवे प्रसिद्धम्, तत् 'पीतं' सत् पानकारिणं 'स्वर्गं न गमयेत्' 'किन्तु' 'क्रतुगतं नयेत्' क्रत्वनुष्ठानस्यैव पूर्णतां प्रापयेदिति तदर्थः। तदिदं श्लोकवचनं वस्तुः प्रमत्तता मेवावेदयति ; अनुष्ठान मिहित एव स्वर्गसिद्धेः। एवञ्चेदयः प्रमत्तशब्दो नास्तिकपर एव भाष्यकाराभिप्रेतः।

काश्मीरेन्द्रात् जलूकाच्चाय मर्वाचीनः। यतो ह्युक्तम् "यत्तेन ज्ञातं न च प्रोक्तम्— वाररुचं काव्यम्, जालूकाः श्लोकाः (४ अ० ३ पा० १ आ०)"-इति। एष च वररुचिः कात्यायन एव; स एव व्याकरणस्य वार्त्तिककारः; पतञ्जलेरस्य तत्परभवत्वे कोऽस्ति विचारः; परं जलूकेन राज्ञा कृताः श्लोका अप्यस्य महाभाष्यकारस्य पतञ्जलेरासीद् विदिता इतीत्थं ततोऽपि पराचीनत्वं व्यक्तम्।

वार्त्तिककार कात्यायनात् परभवत्वमस्याविचारितमपि सिद्धमेव, परं ततो बहुकालकृतावरजत्वमस्येत्यपि प्रतीयत इति तु प्रदर्शनीयम्। तथाहि पठितञ्चेद वार्त्तिकम्,—"टपठदि मातुबन्धस्योपसङ्ख्यानम्" (पा० ४. १. १५.)"-इति; "कथं त्वो नाम सभायां साध्वी स्यात्"-इत्युक्त्वा च (४ अ० १ पा० २ आ०) खण्डितं तद्वार्त्तिकम्। "यज्ञसभाया विदुषामेव पुरुषाणां साधुत्वाधिकारादिति भाव"-इति च तत्राह तट्टीकाकारः कैयटः। तथाचेद सुव्यक्तमेव,— कात्यायनकाले यज्ञसभादौ स्त्रीणां गमनं न दोषावहमासीदिति तेन पठितं तथा वार्त्तिकम्; पतञ्जलिसमये तु यज्ञसभादौ स्त्रीणां गमनं दोषावहमेवेति परिहृतं तदिति। न चाल्पेनैव कालेन सामाजिकव्यवहारान्यत्वं सम्भवतीत्थं सिद्धमेव वार्त्तिककाराद् सुदूरार्वाचीनोऽयं पतञ्जलिरिति।

(मनुसंहिता) मनुसंहिता तु या सम्प्रत्युपनिबद्धा, मेधातिथिप्राचीना, आपस्तम्बसूत्रादिभिः समानवयस्का, समानभाषा च। महाभाष्ये (१ अ० १ पा० १ आ०) यदुक्तं "नैव ईश्वर आज्ञापयति, नापि धर्मसूत्रकाराः पठन्ति"-इति, तथाहि

मन्वभिप्रायेणैव। इदानीं प्रचलितो मनुसंहितेति प्रसिद्धो ग्रन्थस्तु भृगुप्रोक्त इति भृगुसंहितेत्येव व्यवहार्यः; परं ज्योतिषशास्त्रे भृगुसंहितेति ग्रन्थविशेषस्य, इतोऽपि प्राचीनस्य दृष्टचरत्वात् न तथा व्यवहृतोऽयं लोकैः। एतस्य ह्युपक्रमे प्रत्यध्यायावसाने चास्य भृगुप्रोक्तत्वं स्पष्टमेवेति न च तत्रास्ति प्रमाणप्रदर्शनापेक्षेति। तदुक्तं साङ्ख्यीयकौमुदीप्रभायां स्वप्नेश्वरेणैतत्, "पञ्चशिखः सूत्रकारः आसुरिशिष्यः; कापिल मिति प्रसिद्धिस्तु सम्प्रदायप्रवृत्तेः; भृगुप्रोक्तसंहिताया मिव मनुसमाख्या"–इति।

तस्यैतस्य मनुसंहितेतीदानीम्प्रसिद्धस्य भृगुसंहिताग्रन्थस्य विशेषतः प्रणयनकालनिर्णयोऽपि दुष्कर एव; सामान्यतस्त्वेष संहिताकारः बौद्धधर्मप्रचारकात् शाक्यमुनेः, रामायणप्रणेतृवादिकवेर्वाल्मीकाश्च प्राचीनतमः, वार्त्तिककारकात्यायनात्तु पराचीन इत्येव वक्तुं शक्यते। यतश्चास्य संहितायां महाभारते इवाहिंसाधर्मो विशेषतो नोपदिष्टः, न च बौद्धधर्मप्रकाशितनिर्वाणमुक्तिप्रसङ्गश्च, अत एवास्याः बौद्धधर्मप्रचारात् प्राचीनत्व मवगम्यते। बौद्धधर्मसुप्रचारोत्तरप्रकाशिते हि महाभारतेऽत्राहिंसाधर्मो निर्वाणमोचयेत्येतावप्युक्तौ स्याताम्। तद्यथा—

"बहूनां यज्ञतपसा मेकार्थानां पितामह।
धर्मार्थं न सुखार्थार्थं कथं यज्ञः समाहितः ?"–इत्यादिः,
अहिंसा सकलो धर्मो हिंसाधर्मस्तथाहितः।
सत्यस्तेऽहं प्रवक्ष्यामि यो धर्मः सत्यवादिनाम्"–इत्यन्तश्च द्रष्टव्यः।
(महा॰ भा॰ शा॰ प॰ २७१ अ॰ १–२० श्लो॰)।

अस्मिन्नध्याये यज्ञगतपशस्यापि दुष्कृतत्वं वधत्वञ्च वर्णितम्। तदेतन्महाभारतकारस्य बौद्धसंसर्गजफल मेवावबुध्यते।

मनौ तु— "मांसस्यातः प्रवक्ष्यामि विधिं भक्षणवर्जने"—इत्युपक्रम्य त्रिंशच्छ्लोकेषु मांसस्य भक्षणवर्जने विहिते (५ अ० २६–५६ श्लो०)। तत्र वृथामांसभक्षणे प्रवृत्तिश्चेत् भक्षयतु, निवृत्तिश्चेत् महाफल मित्येव प्रतिपादितम् (५६)। देवपितृकृत्यादौ तु मांसभक्षणे न कोऽपि दोष उक्तः (३२); मधुपर्कादौ तु विहित मेव मांसभक्षणम् (४१), यज्ञादौ तु कृता हिंसा, अहिंसैवेत्यपि कथितम्। अत एव ब्रूमः,— अहिंसाविधिः प्रशंसनात्मकः भारतस्य शाक्यबुद्धपरजत्वम्, तथैव हिंसाविधिर्विधानाच्च मनोस्तत्पूर्वजत्व मपीति। एवं भीष्मपर्वणि (२८अ० २६श्लो०)—

"कामक्रोधवियुक्तानां यतीनां यतचेतसाम्।

अभितो ब्रह्म निर्वाणं वर्तते विदितात्मनाम्"—इत्यादि।

मनौ तु प्रथमाध्याये विषु श्लोकेषु (१०४–१०६) यानि फलान्युक्तानि, न तत्राप्हि निर्वाणं नाम; तथैव द्वादशाध्यायेऽपि "प्राप्यते ह्यमृतं ततः (८५)"—इत्येव, "स्वाराज्य मधिगच्छति (८१)"—इति। "नैःश्रेयस मिदम् (१००)"—इत्यादीन्येव च दृश्यन्ते, परं न क्वापि बौद्धप्रचारितं निर्वाणपद मिति। तदेवं शाक्यस्य ज्ञानलाभात् पूर्व मेवेदं शास्त्र मिद प्रथित मित्यत्र नैव संशयः। शाक्यज्ञानलाभस्तु खी० पू० ५८८ वर्षेऽभूदित्येव निर्णीतम्। न ह्यत्र कस्य चिदपि धर्मशास्त्रस्य गतवर्षाङ्कानकाले एव भवेदभ्युदयः, नापि तदनु-न्नतो वा भवेत् प्रभावाल्पत्वम्, न च तत्प्रभावाल्पत्व मन्तरा अन्यधर्मे मतिर्भवति कस्यचिदपीत्यस्यधर्मशास्त्रोत्थानक्रमश्च। अतः शाक्यमुनिकालादप्यूनगताब्दीद्वयपूर्वं मेवेदं मानवं धर्मशास्त्र मभूदस्येव मिति च सुतरां सम्पद्यते।

अपि नाम रामायणलिपिषु शाक्यमुनेर्जन्मतः पुरैवेति अध्यापक लासेनादीनामपि सम्मतम्। तत्र मनुवचनोद्धृतिदर्शनाच्च मनुसंहितायास्तस्याः पूर्वकालिकत्वञ्च सुव्यक्तम्। तद्यथा तत्र किष्किन्धाकाण्डे (१८, ३०–३२.)—

"श्रूयते मनुना गीतौ श्लोकौ चारित्रवत्सलौ।
गृहीतौ धर्म्मकुशलैस्तथा तच्चरितं मया।
राजभिर्धृतदण्डाश्च कृत्वा पापानि मानवाः।
निर्म्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा।
शासनाद्वापि मोक्षाद्वा स्तेनः पापात्प्रमुच्यते।
राजा त्वशासन् पापस्य तदवाप्नोति किल्बिषम्"–इति।

राजभिर्धृतदण्डाश्चेत्यादी श्लोकौ तु मनुसंहिताया अष्टमाध्याये (३१६. ३१८.) दृश्येते एव। तदेव अपि प्रतीयते मनुसंहितायाः समुत्पत्तिर्नूनं शाक्यबुद्धजन्मतो बहुपूर्वं सैवेति।

किञ्च H. H. उइलसन् महोदयस्य विचारतो ज्ञायत एवैतत्,— जलूकाख्यो नरपतिरासीत् खीष्टजन्मतः पूर्वं सप्तमशताब्द्या मिति; राजतरङ्गिणी प्रथमतरङ्गीयत्रयोदशश्लोकदर्शनाचावगम्यते आसीत् स शैव इति। तथाहि—

"विजयेश्वरनन्दीशचेत्रज्येष्ठेशपूजने।
तस्य सत्यगिरो राज्ञः प्रतिज्ञा सर्वदाभवत्"–इति।

तदेवं जलूककाले विजयेश्वरादिलिङ्गनामस्मरणात् ततः पूर्वेव शैवधर्म्मः सुप्रचलित आसीदित्यपि व्यक्तम्। एवं हि शैवधर्म्म *प्रचारोऽस्य खीष्टजन्मतो द्वादशशताब्दीतोऽपि पूर्वं समभवदित्यप्युक्ते न कश्चिद्दोषो लक्ष्यते।* मनुसंहिताकालं यावत् नैव शिवोपासनोद्भूता; सत्यां हि तस्यामवश्य मेव मनौ शिवपूजाप्रस्ता-

—इत्युक्तम्, दिग्द्वयोक्तोः साहचर्यञ्चास्ति; तदेतानि तेन नैवा-लोचितानि। अस्मन्मते तु पूर्वत्र माध्यमिकं जलस्थान मेवे-ष्टम्। मेधातिथिनाप्युक्तं तथैव "अपां स्थानम्— अन्तरिक्षे समुद्रम्"—इति (१. १३.)। इतोऽप्याश्चर्य मेतत,— प्रथमे-ऽध्याये "पाषण्डगणधर्मांश्च (११८.)"—इतिव्याख्याने सः स्वय मेवोक्तवान् कुल्लूकः— 'पाषण्डिनः— विकर्मस्थान्-इत्यादयः (४. ३०.), तेषां पृथग्धर्मानभिधानात्'—इति; चतुर्थाध्याये तु पूर्वं मुक्तं विस्मृत्येवं किं व्याचष्टे 'पाषण्डिनः— वेदवाह्यव्रत-लिङ्गधारिणः शाक्यभिक्षुक्षपणकादयः, विकर्मस्थाः— प्रतिषिद्ध-वृत्तिजीविन'—इति।

अपि नाम कुल्लूकभट्टकृत प्रथमाध्यायीय-व्याख्यानानुसारत एवास्य चतुर्थाध्यायीयवचनस्य व्याख्यानं भवेच्चेत्, तथापि विकर्म-स्थादीनां तच्छ्लोकाभिहिताना मेवात्र पाषण्डित्वेन ग्रहणं व्यज्येत ? न तु शाक्यादीनाम्। तत् तेनैवात्र कथ मुक्त मेव मिति च नूनं विचार्यम्। विचारितेचास्मिन् मेधातिथिकृतव्याख्यानानुसारित्व मे-वात्र कुल्लूकस्येदृशे स्वोक्तविस्मरणे निदान मुपलभ्यते। मधातिथि-र्नाम मनुटीकाकारस्तु नून भागवतपुराणप्रचारादुत्तरभवः; भागवत मपि तत् शाक्यबुद्धधर्मप्रचारात् पराचीन मेव। श्रीधरस्वामिना च बोधितं तत्र भागवते शाक्यादिमतानुगाना मेव पाषण्डित्वम्। तथाहि (भाग॰ पु॰ ४, १८, २३-२५.)—

'यानि रूपाणि जगृहे इन्द्रो हयजिहीर्षया।
तानि पापस्य षण्डानि लिङ्गं षण्ड मिहोच्यते।
एव मिन्द्रे हरत्यश्वं वैण्ययज्ञजिघांसया।
तद्गृहीतविसृष्टेषु पाषण्डेषु मतिर्नृणाम्।

धर्मे द्व्युपधर्मेषु नग्नरक्तपटादिषु।
प्रायेण सज्जते भ्रान्त्या पेशलेषु च वाग्मिषु''–इति।

"नग्नाः = जैनाः, रक्तपटा = बौद्धाः, आदिशब्देन कापालिकादयश्च"–इति च तत्राह श्रीधरः। तदेतत् पाषण्डलक्षणमेवानुलक्ष्य भाषित मिह तेन मेधातिथिना— "पाषण्डिनो बाह्यलिङ्गिनो रक्तपटनग्नचरकादय"–इति। कुल्लूकस्तु श्रीधरकृतां तां भागवतटीकां संस्मृत्य, मेधातिथिकृता मेतास्य मनुटीकां संलक्ष्यैव विसस्मार मनुप्रथमाध्यायीयं स्वकृत मपि व्याख्यानम्,— तत्र ह्युक्तम् 'पाषण्डिनो वेदबाह्यव्रतलिङ्गधारिणः शाक्यभिक्षुक्षपणकादय'–इति।

वस्तुतो ये खलु लोकविमोहनार्थं यथासमयं यथेच्छधर्मचिह्नानि धारयन्ति, त एव पाषण्डाः, अत एवोक्त ममरसिंहेन— "पाषण्डाः सर्वलिङ्गिनः (२. ७. ४५.)''–इति। एवञ्च पाषण्डाः खलु नास्तिका एव गम्यन्ते। ते तु चिर मेव स्थिताः, ततश्चैतन्मनुसंहिताकालेऽपि तादृशनास्तिकाना मस्तित्वे कोऽस्ति शङ्कावसरः? नास्तिकाना मन्याश्च पुरा बह्व्य आख्यानिकास्तिष्ठन्ति प्रतीयते। अत एवोक्त मेवम्— "योऽनधीत्य द्विजो वेद मन्यत्र कुरुते श्रमम् (म० सं० २, १६८.)''–इत्यादि। 'अन्यत्र = नास्तिकादिशास्त्रे'–इत्येव मेवातात्पर्यगुरूपदेशः। अतस्तत्र महाभाष्येऽपि दृष्टं प्रदर्शितञ्च पुरस्तात् "यद्दुम्बरवर्णानाम् (८७ पृ०)''–इत्यादि। स श्लोकोऽवश्यं कृतयिष्यास्तिकाग मादेव पतञ्जलिना स्यादुद्धृतः। सर्वदर्शनकारमङ्गृहीताः चार्वाकदर्शन मिति प्रदर्शिताः 'न स्वर्गो नापवर्गो वा'–इत्यादयः श्लोका अपि नास्तिकाग्रमनिदर्शनभूता एव। तादृशाना नास्तिकाना

मेव पाषण्डिन इति पदेन तत्र मनुश्लोके ग्रहण मिष्टम् ; अतिथि-भावापन्नानाञ्च तेषां वाङ्मात्रालापेनाप्यर्चनं न कार्य्य मित्येव तद्विधे-राशयः। ये तु न नास्तिकाः परं संसर्गदोषादिभिः विकर्मस्थाः, किञ्च ये केचित् आस्तिका अपि उदरपूरणार्थं वेडालव्रतिकादयः सम्भवाः ; तेष सम्बन्धः परित्याज्य एवेति च तच्छ्लोकाशयः। तदेव मत्र श्लोके शाक्यबुद्धगन्धो ऽपि न लभ्यतेऽस्माभिस्तर्हि कुर्मो वदाम एवैतर्ह्यपि शाक्यजन्मतो बहुपूर्व मेव जातोऽयं मनु-संहिताकार इति॥

एतत्संहितासमालोचनादेतदप्यवगम्यते ,— सोऽयं भृगुः, योग-सूत्रकृतः आदिपतञ्जलेः, वेदान्तमतपोषकभिक्षुसूत्रकृतः पारा-शर्य्याद् व्यासात्, मीमांसादर्शनीयादिसूत्रकृतः काशकृत्स्नेरपि जैमिनेश्च, वैशेषिकसूत्रकृतः कणादात्, न्यायसूत्रकृतो गौत-मात्, साङ्ख्यसूत्रकृतः कपिलात्तच्छिष्यादासुरेश्चावरज एवेति। समासतः प्रदर्शयामश्चैतत् क्रमेण।—

षष्ठेऽध्याये यतिधर्मप्रकरणे— 'अङ्गा रात्र्या'–इत्यादिचतुर्दश-श्लोकानाम् (६८–८२), विशेषतश्च तेष्वेव 'प्राणायामैर्दहेद् दोषान् धारणाभिश्च किल्बिषम्। प्रत्याहारेण संसर्गान् ध्याने-नानीश्वरान् गुणान् (७२)'–इत्यस्य, पुनः सप्तमेऽपि— "इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् (४४)'–इत्यस्य च दर्शनात् ज्ञायत एव,— आदिपतञ्जलिकृताद्योगशास्त्रात् परस्तात् प्रणीतेयं संहितेति।

तत्रैवाग्रे "आध्यात्मिकञ्च सततं वेदान्ताभिहितं च यत् (८३)'–इति, 'वेदान्तं विधिवच्छ्रुत्वा (८४)'–इति, पुनः सप्तमे ऽपि— 'आत्मविद्याम् (४३)'–इति, पुनर्द्वादशेऽपि 'सर्वं मात्मनि

सम्पश्येत् सच्चासच्च समाहित । सर्वं ह्यात्मनि सम्पश्यन् नाधर्मे कुरुते मन । आत्मैव देवता सर्वा सर्वं मात्मन्यवस्थितम्। आत्मा हि जनयत्येषा कर्मयोग शरीरिणाम्'–इति (११८, ११८) च। तदेवमादीना दर्शनात् ज्ञायत एव,— पाराशर्यव्यास कृताद् वेदान्तशास्त्राच्च परस्तात् प्रणीतेय सहितेति।

मीमासामूलिकाया एवास्या धर्मसहितायां मीमासापरजत्व प्रमाणाय त्वल मायासेनेति।

अपि सप्तमेऽध्याये 'आन्वीक्षिकीच (४३)'–इति, द्वादशे 'तर्की (१११)'–इति च। एवमादीना दर्शनात् ज्ञायते वैशेषिक सूत्रेभ्यो न्यायसूत्रेभ्यश्च परस्तात् प्रणीतेय सहितेति।

प्रथमेऽध्याये षष्ठ चतुर्दश पञ्चदश षोडशश्लोकाना दर्शनात्, द्वादशाध्याये पुन साङ्ख्याक्तप्रमाणत्रयाणा मेव स्मरणाच्चावगम्यते सहितेय मवश्य साङ्ख्यशास्त्रात् पर प्रणीतेति च। इह च द्वादशाध्याये दशावरापरिषद्विधौ (१११ श्लो०) यद् दृश्यते 'हैतुक'–इति पदम्, तत् साङ्ख्यविद एव बोधकम्; साङ्ख्यस्यैव हेतुशास्त्रत्वात्। दृश्यते हि— "मूले मूलाभावादमूल मूलम् (सा० प्र० १, ६७)" –इति (१, ६१) साङ्ख्यसूत्रम्, 'प्रकृतिरिह मूलकारणस्य सञ्ज्ञा मात्रम्'–इति च विज्ञानभिक्षुकृत तत्सूत्रीयम् भाष्यम्, 'मूलं प्रकृतिरविकृति'–इतीश्वरकृष्णवचनञ्च, एवमादीना दर्शनात् साङ्ख्यशास्त्रस्य मौलिकत्व प्रतीयते सम्यगेव। अतएवैक सूत्रम् "ईश्वरासिद्धे (१, ८२)"–इति, तदेवमादीना पर्यालोचनया नास्तिक्यसम्पादन मपि सुकर मिति मत्त्वैवोक्त मिह भृगु प्रोक्तायां मनुसहितायाम्— "योऽवमन्येत ते मूल हेतुशास्त्राश्रयाद् द्विज । स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दक. (२. ११.)"

–इति । अपरञ्चैकं सूत्रं साङ्ख्यस्य— 'सिद्धरूपबोद्धृत्वाद्वाक्यार्थोपदेशः ( १. ९८. )'–इति, 'तस्मादपि चासिद्धं परोक्ष माप्तागमात् सिद्धम्'–इति च तदनुगता ऐश्वरकृष्णीयकारिका ; तदेव मादिभ्यः प्रतीयत एव साङ्ख्यदर्शनस्य वेदानुगतत्वञ्च। अत एव मनुसंहितायां दशावरायां साङ्ख्यविदोऽपि नियोगो विहितो 'हैतुकः'–इति ( १२. १११ )। पाणिनिवार्त्तिककाराच्च कात्यायनात् परभवत्व मस्या अनुपद मेव प्रतिपादयिष्यामः ; तेन च कात्यायनेनोक्तं वार्त्तिकम्— 'आसुरेरुपसङ्ख्यानम्'–इति (पा० ४. १. १८. वा० )"–इति ; ततश्चास्यासुरिपरभवत्व मविचारित मपि सम्पद्यते। तदेवं प्रदर्शितनामभ्यः षड्भ्योऽपि दर्शनशास्त्रेभ्योऽर्वाचीनैवा मनुसंहितेति स्फुट मवगम्यत एवेति ॥

एषाञ्च एषां दर्शनानां पौर्वापर्यविषये बहव एव वादा उपलभ्यन्ते। अस्मन्मते तु साङ्ख्यदर्शनस्यैवास्तिकदर्शनेषु प्राथम्यम् ; साङ्ख्यप्रथमाचार्यस्य कपिलस्यैव "आदिविद्वान्"–इति प्रसिद्धेः। तादृशप्रसिद्धौ चाय मेव हि हेतुरुपलभ्यते,— यद्यपि सर्वविद्यानिधानेषु वेदेषु दार्शनिकभावा अपि चिरादेव स्थिताः, परं पृथक्त्वेन दर्शनशास्त्रस्य प्रचारस्तु तेनैव विदुषा प्रथमं प्रारब्ध इति। भागवतादौ भगवदवतारेषु वर्णितक्रमदर्शनाच्चावगम्यते— "आन्वीक्षिकी"–नाम-पदार्थविद्यायाः प्रथमोपदेशकात् आत्रेयाच्चाग्रजोऽयं हि कपिल इति। तथाहि भाग० पु० १. ३. १०, ११—

"पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम्।
प्रोवाचासुरये साङ्ख्यं तत्त्वग्रामविनिर्णयम् ।
षष्ठ मत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया।
आन्वीक्षिकी मलर्काय प्रह्लादादिभ्य ऊचिवान्"–इति।

सैषान्वीक्षिकी विद्यैव इदानीं प्रचलितानां न्यायवैशेषिक-वेदान्तसूत्राणां बीज मिवेत्यनुमीयते ; स्मर्यते हि जैमिनीयमीमांसायां बादरायणनामकीर्त्तनात् पुर एवास्येयनाम । तथाहि—

"मुख्यानन्तर्यं मात्रेय: ०—० ।

अन्ते तु बादरायण: ०—०"-इति मी० द० ५. २. १८, १९ ।

बादरायणस्तु वेदान्तसूत्रकृदित्येव प्रसिद्ध: । वेदान्त-न्याय-वैशेषिक जैमिनीय मीमांसासूत्राणाञ्च समकालिकत्वमभ्युपगम्यते । अतो निरवद्य मेवैतदुक्तं साङ्ख्यदर्शन मेव सर्वप्रथम मिति ।

अत एव श्लोक्यते च श्वेताश्वतरोपनिषदि (५. २ ; ६. १३.)—

'ऋषिं प्रसूतं कपिलं यस्त मग्रे, ज्ञानैर्बिभर्त्ति०"-इत्यादि,

"नित्योऽनित्यानां चेतनश्चेतनानां मेको बहूनां यो विदधाति कामान् । तत् कारणं साङ्ख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशै:"-इति ।

"न वयं षट्पदार्थवादिनो वैशेषिकादिवत् (१अ० २५ सू०)" -इति साङ्ख्यसूत्रन्तु द्वितीयकपिलस्य वा पञ्चशिखाचार्यस्य वा भवितु मर्हति । तथा चैतत्सूत्रदर्शनात् साङ्ख्यशास्त्रीयषड्ध्याया एव वैशेषिकादि परजत्वं सिध्यति , न तु साङ्ख्य दर्शन तत्पूर्वजस्य । उक्तं हि कौमुदीप्रभायाम्— "पञ्चशिख: सूत्रकार आसुरिशिष्य. । कापिल मिति प्रसिद्धिस्तु सम्प्रदायप्रवृत्ते: भृगुप्रोक्तसंहिताया मिव मनुममाख्या"-इति । किञ्च "य माहु: कपिलं साङ्ख्या: परमर्षिं प्रजापतिम् । स मन्ये तेन रूपेण विस्मापयति हि स्वयम् (शा० मो० प० २१८ अ० ९श्लो०)" -इतिमहाभारतीयश्लोकव्याख्याने नीलकण्ठोऽप्याह— "स आ-पिल: , तेन पञ्चशिखशब्देन तत्पशिष्यत्वात् तत्तुल्यत्वम्"-इति । तत्वसमासव्याख्यायां सर्वोपकारिण्यां तु सुस्पष्ट मेवोक्तं कपिल-

द्दिकादिकम् । तथाहि— "अथाज्ञानादिक्लेशकर्मवासनासमुद्र-निपतितानाथदीनानुद्दिधीर्षुः परमकृपालुः स्वतःसिद्धतत्त्वज्ञानो महर्षिर्भगवान् कपिलो द्वाविंशति सूत्राणि उपादिक्षत् । ०—० । सूत्रषड्ध्यायी तु वैश्वानरावतारभगवत्कपिलप्रणीता ; इयन्तु द्वाविंशतिसूत्री तस्या अपि बीजभूता नारायणावतारमहर्षिभगवत्कपिलप्रणीतेति वृद्धाः"–इति । विज्ञानभिक्षुकृतसाङ्ख्यप्रवचनभाष्याच्चैव मैवावगम्यते । तथाहि – "तत्त्वसमासाख्यं हि यत् सङ्क्षिप्तं साङ्ख्यदर्शनम् , तस्यैव प्रकर्षेणास्यां निर्वचनम्"–इत्यादि ।

भादिपतञ्जलिनापि कृतं योगशास्त्र मादिमाङ्गपरक मेव । अत एवोक्तं दृश्यते साङ्ख्यप्रवचनभाष्ये— "तत्त्वसमासाख्यं हि यत् सङ्क्षिप्तं साङ्ख्यदर्शनम् , ०—०, षड्ध्याय्यां तत्त्वसमासाख्योक्तार्थविस्तरमात्रम् ; योगदर्शने त्वाभ्या मभ्युपगमवादप्रतिषिद्धस्येश्वरस्य निरूपणेन न्यूनतापरिहारोऽपीति"–इति । वेदान्तदर्शने तु "एतेन योग' प्रत्युक्तः ( २. १. ३. )"— "योगिनः प्रति च स्मर्यते ( ४. २. २१. )"–इत्यादिदर्शनात् , तस्य योगशास्त्रादप्यवरजत्वं सुव्यक्त मेव ।

कणादगौतमकृतयोः सूत्रात्मकयोर्वैशेषिकन्यायशास्त्रयोः समानतन्त्रत्वन्तु सर्वसम्मत मेव । तत्त्वतो न्यायशास्त्रे २. ६८ ; ४. २५ ; ८७ सूत्रेषु वेदान्तमतपरिदर्शनात् वेदान्ते च २. २. ११, १३ , १४ सूत्रेषु न्यायवैशेषिकमतदर्शनात् ,— तथा वेदान्ते "साक्षादप्यविरोधं जैमिनिः ( १. २. २८. )"–इत्यादिषु जैमिनेर्नामकीर्त्तनात् , मीमांसाशास्त्रेऽप्यचलितार्था "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः०—० बादरायणस्यानपेक्षत्वात् ( १. १. ५. )" –इत्यादिषु बादरायणस्योल्लेखात् न्यायवैशेषिक-वेदान्त मीमांसा-

सूत्रकाराणां समकालिकत्व मेव गम्यते। तथापि आत्रेयकृता आन्वीक्षिकी, काशकृत्स्नकृता मीमांसा च एभ्यो बहुप्राचीनैव; तयोर्विरलप्रचारकाले एवाप्रचलिताना वेदान्तादीनां जैमिनीय-मीमांसायाश्च प्रयोजनीयत्वात्।

सिद्ध मित्थम् साङ्ख्यदर्शनाविष्कर्त्तुः कपिलस्यैव दर्शनकारेषु प्राचीनतमत्वम्; आदिपतञ्जलेस्तत्परत्वम्; आत्रेयस्य, काशकृत्स्नेय ततोऽवरत्वम्; कणभक्षाक्षचरणपाराशर्य्यजैमिनीनां ततोऽप्यर्वाचीनत्व मिति॥

(कात्यायन) सैषा शैवमतप्रभवात् पाशुपतदर्शनादग्रजा, प्रदर्शितसाङ्ख्यादिदर्शनेभ्यश्चानुजा, मनुसंहितेति प्रथिता, भृगुसंहिता, कात्यायनकृताद् वार्त्तिकसूत्राच्चावरजैवेत्यसकृदुक्तं पुरस्तात्, क्रमप्राप्तं तदेवेहोपपादयाम॰।

तथाहि—"शूद्राणा मनिरवसितानाम्"–इति (२. ४. १०.) सूत्रस्य भाष्ये, "पृषोदरादीनि यथोपदिष्टं तथैव साधूनि" –इति (६. ३. १०८.) सूत्रीयभाष्ये च दृश्यते तावदेतदार्यावर्त्तलक्षणम्— 'प्राक् आदर्शात्, प्रत्यक् कालकवनात्, दक्षिणेन हिमवन्तम्, उत्तरेण पारियात्रम्"–इति। एतच्च लक्षणम्, महाभाष्यकारेण भगवता व्याडिनोपदिष्टम्, वार्त्तिककारकात्यायनमप्यतश्च पतञ्जलिनोद्धृत मिति इहोपदेशः। एतल्लक्षणे विन्ध्यगिरे पश्चिमस्य पारियात्र एवार्यावर्त्तदक्षिणसीमेति गम्यते, अपि च सिन्धुसङ्गमात् पश्चिमसमुद्राद् बहुपश्चिमस्य आदर्श एव पश्चिमसीमेति गम्यते, मगधराज्यस्य प्रत्यक् स्थित वकासुरनिलयमद्य 'बक्सर'–इति प्रसिद्धं कालकवनाख्यं कान्यकावन मेव पूर्वसीमेत्यपि गम्यते। मनूक्तार्यावर्त्तलक्षणे तु सिन्धुसङ्गमपश्चिमे न आर्या-

वर्त्तः; अपि गङ्गासागर सङ्गमान्तआर्यावर्तः; सत्येवं मनुकाले मगधापर पर्यायः कीकटोऽप्यार्यावर्तान्तर्गत एव। तथाहि— "आ समुद्रात् तु वै पूर्वादासमुद्राच्च पश्चिमात्। तयोरेवान्तरं गिर्योः (विन्ध्यहिमागमयोः) आर्यावर्त्तं विदुर्बुधाः (२. २२.)"–इति मनुः। तथाचेद मेवावधार्यते यावन्नामार्यावर्त्तोऽयं न हि पूर्वस्यां विस्तृतो नापि पश्चिमतः सङ्कुचितः, तावदेव जातः कात्यायनः, तद्गुरुस्तथ्य मनुसंहिताकारः स्वानुभूतानुरूप मेवार्यावर्त्तलक्षणद्वयकार पूर्वोक्त मिति।

शिष्टलक्षणद्वयदर्शनाच्चानयोस्तथैव पौर्वापर्य मवगम्यते। तथाहि— "धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः। ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः (१२. १०८.)"–इति मनुः। महाभाष्यकारनिखितं कात्यायनसम्मतन्त्वेवं दृश्यते शिष्टलक्षणम्— "एतस्मिन्नार्यावर्त्ते निवासे ये ब्राह्मणाः, कुम्भीधान्याः, अलोलुपाः, अगृह्यमाणकारणाः किञ्चिदन्तरेण, कस्याश्चिद् विद्यायाः पारङ्गताः, तत्र भवन्तः शिष्टाः (६अ० ३पा० ३आ०)"–इति। एवञ्च कात्यायनकाले आर्यावर्त्तवासादेव शिष्टत्व मपि तदानीन्तनानां ब्राह्मणानां कुम्भीधान्यादिलक्षणसाधारणो धर्म इति गम्यते; मनुकाले तु विशेषतोऽध्ययनेनैव शिष्टत्व माप्यं स्थित मिति। तदेतल्लक्षणद्वयपर्यालोचनया चावगम्यते कात्यायनस्यैतन्मनुसंहिताकारात् पूर्वजत्वम्,— तत्रापि बहुपूर्वजत्वम्; न ह्यल्पपौर्वापर्येण एव एतादृशो साधारणाचारभिन्नता सम्भवेदिति।

नास्तिकलक्षणद्वयालोचनेनाप्येव मेवाववुध्यते पौर्वापर्यम्। तथाहि— अस्त्येकं पाणिनिसूत्रम्— "अस्ति नास्ति दिष्टं मतिः" –इति (४. ४. ६०.)। "अस्तीत्यस्य मतिः— आस्तिकः,

नास्तीत्यस्य मतिः - नास्तिकः, दिष्ट मित्यस्य मतिः-- दैष्टिकः" -इति च तद्वाक्यम् ( ४प० ४पा० ४पा० )। दिष्टम्= भाग्यम्। एतदेव साधारणं लक्षणं कात्यायनकालेऽपि स्थितं सर्वसम्मतम्। ततः परं क्रमात् शिथिलिते वेदविश्वासे पुनस्तदाद्यर्थेवेदं समुद्भूतं मतान्तरम्— "योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः। स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ( म० सं० २. ११. )"-इति। यदि हि नाम कात्यायनोऽयं मनुसंहिता-प्रणयनादवरज स्यात्, तर्हि एतदनुगतं पाणिकस्य नास्तिकादिविधायकसूत्रे छप्येतैव, तच नयोक्तम्; तदेव सम्यगवधारयति यारकात्यायनस्यैतन्मनुसंहिताकाराात् प्राचीनत्व मिति।

भवत् कात्यायनीयो वार्त्तिकपाठ इति सुवचम् ; न हि ततो न्यूनेन कालेन देशसीमपरिवर्त्तन माचारपरिवर्त्तनं नास्तिकलक्षणपरिवर्त्तनादिकञ्च सम्भाव्य मिति। सिद्ध मित्थम्—कलेर्विंशशताब्द्याम्, खीष्टजन्मतः पूर्वं मन्यूनद्वादशशताब्द्यां वाभवत् व्याकरणवार्त्तिककारो भगवान् कात्यायन इति ॥

अपर मप्यस्तीह तावत् किञ्चिद् विचारयितव्यम् ।— कैश्चित् पुरातत्त्वानुसन्धित्सुभिः दाक्षिणात्येषु पाण्ड्यराज्यस्थापनं खीष्टजन्मतः पुरा षष्ठ्या मेव शताब्द्यां बभूवेति निर्णीतम् ; अस्ति च कात्यायनवचनम्— "पाण्ड्योर्ड्यन्"—इति ( पा० ४. १. १६८. वा० ); तथाचेतथ कात्यायनस्य खीष्टजन्मतोऽत्यधिकपञ्चशताब्दीपूर्वजत्व मेव सम्पद्यते। नैतच्चतुरस्रम् ; खीष्टपूर्वाष्टमशताब्द्यां ग्रैथमतं प्रचरित मित्यत्र तेषा मपि सम्मतिदर्शनात्। तादृशग्रैथमतप्रचारतोऽपि प्राचीनात् किल मनुसंहिताकारात् प्राचीनोऽयं वार्त्तिककारः कात्यायनः, कथङ्कारं स्यात् खीष्टपूर्वषष्ठशताब्दीतोऽपि परज इति ? अतः पाण्ड्यराज्यस्थापन मवश्यं बभूव खीष्टजन्मतो द्वादशाब्दीतोऽपि प्रागेव ; अथ वा "पाण्ड्योर्ड्यन्"—इत्यादिवचनानि नैव कात्यायनीयानि, अपि भाष्यकाराद्युक्तान्यनतिप्राचीनान्येवेति सर्वैर्मन्तव्यम् ; अन्यथा हि सर्वमेतं पव सर्वं भवेत् पिण्डीभूत मिति धीमद्भिरेव विचार्यं पूर्वापरदर्शिभिः समन्तादिति ॥

( यास्कः ) तस्मादेतस्माच्च कात्यायनात् प्राचीनोऽयं यास्कः ; तदत्र चत्वारो हेतवः।— "वरुणानी वरुणस्य पत्नी"—इत्युक्त मिह निरुक्ते ( ८. ३. ८. ); यदि हि नाम वार्त्तिकवस्मात् पुरातनं न स्यादेतन्निरुक्तम् , तर्ह्यत्र मेवैवं निरुच्येत

"अरण्यानी महदरण्यम्"–इति ; "हिमारण्ययोर्महत्त्वे"–इति (४. १. ४९. पा० वा०) वार्त्तिकानुरोधात् । एवञ्च ज्ञायत एव निरुक्तप्रणयनकालं यावत् नाभवद् वार्त्तिकग्रन्थ इति । यदा चाभूत् वार्त्तिकग्रन्थः, तदा तु अरण्यपत्नीत्यर्थे अरण्यानीति व्यवहारो दूरङ्गतः, समुत्पन्नश्च महदरण्य मित्यर्थे अरण्यानीति ; तत एव प्रणीतं तत्कालानुगतं लक्षण मिदं 'हिमारण्ययोर्महत्त्वे'–इतीति प्रथमः ।

वेदे "सुकिंशुकम् (ऋ० मं० ८. ३. १३. ५)"–इत्येवमादौ श्रुतस्य 'सूर्या'–इति पदस्य प्रयोगानुगता सूर्यस्य पत्नीति व्याख्या नासीत् पाणिनिकाले प्रचलिता, ततो बहुकालेऽतीते तादृग्व्याख्याने प्रचलिते जातोऽयं यास्को वेदे सर्वविधिर्भोरुत्वं पाणिनेरपि सम्मत मेवेत्यालोच्य निरवोचत् "सूर्या = सूर्यस्य पत्नी"–इति (१२. १. ७.), तद्‌दृष्ट्वेदं वार्त्तिक मारचितम् "सूर्याद् देवतायाम् चाप् (पा० ४. १. ४८ वा०)"–इति । एतयोभयं गम्यते— अस्य पाणिनितो बह्वर्वाचीनत्वम्, कात्यायनात् प्राचीनत्वञ्चेतीति द्वितीयः ।

अस्यैव मत्र निरुक्ते जरयितेत्यर्थकं जारशब्दव्युत्पादनम्— "आदित्योऽत्र जार उच्यते, रात्रेर्जरयिता"–इति (३. ३. ४.) । नून मेतद् दृष्ट्वेदं वार्त्तिक मारब्धम्—"दारजारौ कर्त्तरि णिलुक् च"–इति (पा० ३. ३. २०. वा०) । एवमादिभ्योऽपि प्रतीयते यास्कस्य कात्यायनपूर्वजत्व मिति तृतीयः ।

चतुर्थस्त्वयं मतिप्रवन्ध — पाणिनिसूत्रेषु ऋणशब्दे परे वृद्धि विधानं न विद्यते, ततश्च पाणिनिकाले 'प्रर्णम्', 'वसर्णम्' — इत्यादय प्रयोगा एवेष्टा इति गम्यते । ततो बहुकालान्तरे

जातोऽयं यास्कः, तदानीं क्वचित् क्वचिद् वृद्धियुक्तः प्रयोगो-ऽपि ऋणशब्देऽवश्यं प्रचलित इत्येवास्मिन् निरुक्ते लभ्यते "अपार्णम्" -इति( ८. १. ८. ) प्रयोगः। ततोऽतीते बहुकाले जातः कात्यायनः, तदानीं तेन हि षट्स्वेव स्थानेषु ऋणशब्दे वृद्धिः प्रचलिता दृष्टा, तथैवेमे वार्त्तिके पठिते— "प्रवत्सतरकम्बलवसनानां चर्णे"-इति, "ऋणदशभ्यां च"-इति च (पा० ६. १. ८९. वा०)। एताभ्या मेव वार्त्तिकाभ्यां सिद्धान्येव प्रार्ण मित्यादीनि; पर मपार्ण मितिपदस्य साधनाय न कश्चिद्यत्नस्तेन कृतो दृश्यते, ततोऽवगम्यते तदानीं तथा व्यवहारो लुप्त एवेति। अतएवावश्य मेवं मन्तव्यम्— यास्कोऽयं पाणिनितो बह्वर्वाचीनः, कात्यायनतस्तु बहुप्राचीन इति; नान्यथा ह्यपार्ण मिति नैरुक्त मुपपद्यते। यदि ह्ययं यास्कः कात्यायनतोऽप्यर्वाचीनः स्यात्, तर्ह्यवश्यं वदेदपर्ण मिति, सूत्रवार्त्तिककारयोस्तथैवानुशासनात्; यदि ह्ययं पाणिनितोऽपि प्राचीनः स्यात्, तर्ह्यवश्य मेव पाणिनिस्तथैव सूत्रं विदध्यात्, यथा च सिद्धं भवेदपार्ण मिति। तदेतदेक मेव पदम् यास्कसमयनिर्णये बहु मन्यतेऽस्माभिः "अपार्णम्— अपार्णम्— अपार्णम्"-इति ॥

(पाणिनिः) यास्कस्य पाणिनिपरजत्वे त्वन्येऽपि हेतवः समुपन्यस्यन्ते। तथाहि— (१) निरुक्तस्यास्य प्रथमेऽध्याये एव (१. ६. १.) "परः सन्निकर्षः संहिता (पा० १. ४. १०९.)" -इति पाणिनीयं संहितालक्षण मुद्धृतं दृश्यत-इति प्रथमः। (२) पाणिनिपरजन्मनो बह्वृक्प्रातिशाख्यकृतः शौनकाचार्यं यास्कः पराचीनः सुतरां पाणिनितो बह्वर्वाचीन इति द्वितीयः। यथाच स शौनको यास्कात् पूर्वभवः, पाणिनिः खलु ततोऽपि

पूर्वभवः, तदनुपद मेव स्फुटीभविष्यति। (२) तत्राच निरुक्ते — "नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च ; न सर्वाणीति गार्ग्यो वैयाकरणानाञ्च"–इति (१. ४. १.)। इह, वैयाकरणशब्देन पाणिनीयविदा मेव ग्रहणं भवितु मर्हति; पाणिन्यष्टके एव हि तादृशमतनिदानसूत्रद्वयदर्शनात्। तथाहि — "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्, कृत्तद्धितसमासाश्च" –इति (१. २. ४५, ४६.)। एते एव सूत्रे अवलम्ब्य 'प्रातिपदिका व्युत्पन्ना अव्युत्पन्नाश्च'–इति पाणिनिमतं वर्णितं महाभाष्यादौ; न त्वन्यत्र (प्रातिशाख्यादौ) नाम्नां तादृशोभयविधत्व मुपदिष्टं क्वचिदपीति। एवञ्चेह पाणिनीयविदा मेव मत मुपन्यस्तं यास्केन "वैयाकरणानाम्"–इतीदं सुवच मिति तृतीयः। नन्वेवं पाणिनीयः प्रातिपदिकशब्दः कुतो न व्यवहृतो यास्केनेति चेदत्र वक्तव्य स्यादेतत् पाणिनिपूर्वजानां शाकटायनादीनां व्यवहारानुरोधप्राधान्यादेव नामशब्दव्यवहारतस्तस्य बाध इति। (४) निरुक्तेऽत्र (४. ४. ४.) यद् दृश्यते 'अय्याः', 'अस्य' –इत्यनयोर्निर्वचनादिकम्, तत्तु "इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ (२. ४. ३२.)"–इत्यस्यैव पाणिनीयसूत्रस्य व्याख्यानपर मिति चतुर्थः। (५) अथच हेतु पञ्चमः,— उक्त मिह "आपनीफणदिति फणतेश्चर्करीतवृत्तम्"–इति (२. ७. ६.); "चर्करीतम् = यङ्लुगन्तम्"–इति महाभाष्यम् (७ अ० १पा० १ आ०); न हि चर्करीतवृत्तस्य ज्ञानं भवितु मर्हति शाकटायनीयादिभ्य स्तन्त्रान्तरादिभ्य इति। (६) तत्रैवाध्याये (२. १. ४.) "तद्धितसमासेषु"–इति च दृश्यते; महाभाष्यकारेण तूक्तं पस्पशायाम्— "न चान्तरेण व्याकरणं कृतस्तद्धिता वा

शक्या विज्ञातुम्"-इति ; इह महाभाष्यवाक्ये व्याकरणपदेन पाणिनीयस्यैव ग्रहण मन्यथा तत्प्रयोजनान्वाख्यान मेव व्यर्थमेवेति सोऽयं पक्ष । (७) तथैवाग्रे — "निर्भूयासावैयाकरणाय (२१ १. ६.)"-इति, इतश्च ज्ञायते निरुक्तादप्यात् पूर्व मेव व्याकरणम्, व्याकरणज्ञानपूर्वक मेव निरुक्तज्ञानं यास्काचार्यस्याभिमत मिति । न हि तद् व्याकरण सर्वलोमुख पाणिनीय मन्तरेणान्यत् किं मप्यासीदादिम मित्यवश्य मेवैवमादिषु सर्वत्रैव निरुक्ते पाणिनीय मेवेष्टं यास्कस्येति सारमः । (८) अपि चाय मष्टमः — निरुक्तप्रयोजनकथनावसरे यास्क स्वय माह — "व्याकरणस्य कार्त्स्न्यं स्वार्थसाधनञ्च"-इति (१. १५. १.)। तत सिद्ध मस्य निरुक्तस्य व्याकरणपरिशिष्टरूपत्वम्, यतश्चायं ग्रन्थो व्याकरण परिशिष्टरूपः, अतो व्याकरणपरभव एव, तच्च व्याकरण मिह पाणिनीय मेवेत्यस्माकम् ; दृश्यते ह्यत्र "पृषोदरादीनि यथोपदिष्टम्"-इति (६. ३. १०९.) पाणिनिसूत्र मेव प्रपञ्चित लोपागमवर्णविकारादिप्रदर्शनपरेण नैरुक्तभागेन (२. १. १-६.)। अत एव तत्र महाभाष्ये उक्तम्— "पृषोदरादीनीत्युच्यते, कानि पृषोदरादीनि ? पृषोदरप्रकाराणि। कानि पुन. पृषोदरप्रकाराणि ? येषु लोपागमवर्णविकारा. श्रूयन्ते, न चोच्यन्ते"-इति (६ अ० ३ पा० ३ आ०)। अत एवैव चैषा हरिकारिका—

"वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविध निरुक्तम्"-इति॥

अपि नाम व्याकरणं तु सर्वतोमुखं पाणिनिनैव प्रथम प्रणीत मिति वैयाकरणाना सिद्धान्तः। अत्र च बहूनि प्रमाणानि देदीप्यन्ते, किञ्चिदिदं प्रदर्शयाम.।—

प्रथमं तावत्, नन्दिकेश्वरकारिकायाम्— "नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्। उद्धर्त्तुकामः सनकादिसिद्धानेतद् विमर्शे शिवसूत्रजालम् ॥ अत्र सर्वत्र सूत्रेषु अन्त्यवर्णचतुर्दशम्। धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये"-इति। "धात्वर्थं धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थम्"-इत्यादि च तत्र नागेशभट्टः। तदेवमादीनां समालोचनयोपलभ्यत एव पाणिनेरादिव्याकरणकर्तृत्वम्।

द्वितीयन्त्विमानि पाणिनीयशिक्षावचनानि— "शङ्करः शाङ्करीं प्रादात्-दाक्षीपुत्राय धीमते। वाङ्मयेभ्यः समाहृत्य देवीं वाच मिति स्थितिः ॥ येनाक्षरसमाम्नाय मधिगम्य महेश्वरात्। कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया। चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः ॥"-इति। पाणिनेरादिव्याकरणकर्तृत्वे इतोऽपि स्फुटतरं मानं किं भवितु मर्हतीति।

तथैव फणिभाषितभाष्याब्धेः पस्पशाह्निकं प्रायः सर्व मेवात्र मतेऽनुकूलम्। तथाहि— "अथ शब्दानुशासनम्"-इति प्रतिज्ञालक्षणाधिकारवचनपर्यालोचनेनैव प्रतीयते,— इतः पूर्वं नासीदेवं लौकिकवैदिकोभयविधसर्वशब्दानां लघुनोपायेनानुशासन मपरं किञ्चिच्छास्त्रं व्याकरणं नामेति। अन्यच्च— "अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः। एवं हि श्रूयते— 'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, न चान्तं जगाम'। बृहस्पतिश्च वक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्र मध्ययनकालः, न चान्तं जगाम; किम्पुनरद्यत्वे ? यः सर्वथा चिरञ्जीवति, स वर्षशतं जीवति। चतु-

भिश्र प्रकारैर्विद्योपयुक्ता भवन्ति— आगमकालेन , स्वाध्यायकालेन , प्रवचनकालेन , व्यवहारकालेनेति । तत्र चागमकालेनैव कृत्स्न मायुः पर्युपभुक्तं स्यात् । तस्मादनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः । कथं तर्हीमे प्रतिपत्तव्याः ? किञ्चित् सामान्यविशेषवल्लक्षणं प्रवर्त्यम् ; येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन्"–इत्यादेः भगवत्पतञ्जलिविरचितायाः पाणिनीयव्याकरणावतरणिकायाः पाठादेवावगम्यते नैतत्पूर्वं नेवं सर्वतोमुखं सर्वावयवसम्पन्नं कि मपि व्याकरणं स्थित मिति तृतीयम् ।

सूयन्ते च सर्वेष्वेव वेदेषु पदसंहिताः । "अग्निम् । ईळे । पुरः ऽहितम्"–इत्येवं मन्त्रश्रुतपदविभागादिकं कुर्वन्त एव ता अध्यापयन्त्याचार्याः । तादृशपदपाठग्रन्था एव महाभाष्योक्तप्रतिपदपाठशब्देनोगताः स्युरिति च सम्भाव्यते । तादृशप्रतिपदपाठाश्च तदैव शोभन्ते स्म , यदा नासीत् सामान्यविशेषवल्लक्षणात्मकं किञ्चिदपि सर्वतोमुखं व्याकरणम् । ईदृशपदपाठानां चाविष्कर्त्तारः शाकल्यादय एव । "वायः •—• वेति च य इति च चकार शाकल्यः"–इति ( ६. ५. ५. ) यास्कोक्तिः । एका मेवेमा मृक्पदसंहिता मभिलक्ष्याह महाभाष्यकारः— "शाकल्यस्य संहिता मनु प्रावर्षत्"–इति ( १ अ० ४ पा० ४ आ० ) । स एष हि शाकल्यो नाम ऋषिः , पाणिनितः पुरातन एव ; तदीयाष्टाध्याय्याम् "सम्बुद्धौ शाकल्यस्येतावनार्षे ( पा० १. १. १६. )"– इत्यादौ शाकल्यनामस्मरणात् । तदेवं ज्ञायते नासीदेव पाणिनेः पूर्वं शाकल्यसमयेऽपि पाणिनीयसदृशं सर्वतोमुखं व्याकरणं कि मपीति चतुर्थम् ।

एव मस्ति च सर्वेषां वेदानां क्रमपाठो नाम ग्रन्थ एकैक:; स एव क्रमसंहिता उच्यते। एतत्क्रमपाठनियमस्तु यद्यपि शाकल्यस्य पदपाठप्रवृत्तेः परकालभव एव, सति कुड्ये चित्र मिति न्यायात्; परं पाणिन्यष्टकात् पुरैवाविरासीदित्यपि सत्यम्; तत्र हि क्रमाध्येतर्य्ये क्रमक इति पदसाधनार्थैव "क्रमादिभ्यो वुन्"-इति (पा० ४.२.६१.) सूत्रस्य दर्शनात्। क्रमस्यै-तस्यादिप्रवक्ता, एतादृशाध्ययनविधेः प्रवर्त्तकः खलु बाभ्रव्य ऋषिः। तथोक्तं ऋक्प्रातिशाख्ये— "इति प्र बाभ्रव्य उवाच च क्रमम्, क्रमप्रवक्ता प्रथमं शशंस च"-इति (११.६१.)। "इत्येवं बभ्रुपुत्रः भगवान् पाञ्चालः, क्रमस्य वक्ता शिष्येभ्यः, क्रमं प्रथमं प्रोवाच प्रशशंस च द्वितीय"-इत्यादि च तत्र महदाख्यान मुव्वट-क्षतम्। महाभारतेऽपि शान्तिपर्वान्तर्गतमोक्षधर्म्मेणि तथैवोक्तम्— "पाञ्चालेन क्रमप्राप्तस्तस्माद् भूतात् सनातनात्। बाभ्रव्यगोत्रः स बभौ प्रथमं क्रमपारगः"-इति (३४२ अ० १०० श्लो०)। एष बाभ्रव्योऽपि, पाणिनेः पूर्वभवः; अष्टके "मधुबभ्वोर्ब्राह्मण-कौशिकयोः"-इति (पा० ४.१.१०६.) सूत्रस्य दर्शनात्। एतस्य च क्रमाध्ययनस्य प्रयोजनकथनावसरे चोक्त मिदं बह्वृक्-प्रातिशाख्यभाष्ये "भवति चात्र श्लोकः— 'शरदुज्ज्वलो वितिमिरो विभाति भगवान् यथांशुमान्। सत्यवचनवित्तमः क्रमकः क्रमते हि संशयं तमस्तथात्मवान्"-इति (११.२०.)। एवञ्च वेदसंहितासु श्रुतानां मन्त्राणा मर्थबोधोपयोगिपदच्छेदादिविषयकसंशयनाशायैव क्रमग्रन्थाः प्रादुर्भूताः पुरा इत्येव क्रमहेतु-सारम्। तादृशसंशयस्तु सर्वेषामेव सर्वतोमुखव्याकरणाविर्भावात् प्रागेव; आविष्कृते ह्येतादृशे व्याकरणे नैव तादृशसंशयस्य प्रसर-

रोति। इतश्च ज्ञायते पाणिनेः पूर्वं बाभ्रव्यकालेऽपि नासीदेवं सर्वतोमुखं सर्वाङ्गसम्पन्नं व्याकरणं नाम कि मपीति पञ्चमम्।

बाभ्रव्यः खलु ऋग्वेदस्य क्रमकारः; अतो बह्वृक्प्रातिशाख्ये तस्यैव नामग्रहणम्; तथा हयग्रीवो यजुर्वेदस्य। स एव चैतस्याः पद्धतेः प्रथमोद्भावकः। अत एवोक्तं महाभारते तत्पूर्व मेव— "यत्तद्धयशिरः पार्थ समुदेति वरप्रदम्। सोऽह मेवोत्तरे भागे क्रमाक्षरविभागकृत्। वामादेशितमार्गेण मत्प्रसादान्महात्मना"-इति; एवदुत्तर मुक्तं तु प्रदर्शितं पुरस्तादिहैव "पाञ्चालेन०—० क्रमपारगः"-इति (११०पृ०)। एवं कण्डरीको गालवर्षिः सामसंहितायाः छन्दोविभागस्य क्रमकृत्, ब्रह्मदत्तश्चाथर्वसंहितायाः। ताविमौ बाभ्रव्यस्यावरजाविति चास्ति तत्रैव महाभारते तदुत्तरम्— "नारायणाद् वरं लब्ध्वा प्राप्य योग मनुत्तमम्। क्रमं प्रणीय शिक्षाञ्च प्रणयित्वा स गालवः। कण्डरीकोऽथ राजा च ब्रह्मदत्तः प्रतापवान् (महाभा० शा०मो० प० ३४२ ५० १०१, १०२ श्लो०)"-इति। अपि च गालवश्चायं बाभ्रव्यपरजोऽपि पाणिनितः पूर्वज एव; तदीयाष्टके हि "इको ह्रस्वो ऽङ्यो गालवस्य (पा० ६. ३. ६१.)"-इत्यादौ गालवनामस्मरणात्। तथाच गालवकालेऽपि नाविष्कृत मेवं सर्वतोमुखं व्याकरण मन्यथा कृतं नाम सामयोनिक्रमपाठेनेति षष्ठम्।

अस्ति चैको ग्रन्थो वैदिकानां "चातुर्ग्रन्थिकम्"-इति। ततश्च ऋक्संहिताग्रन्थे विसर्गसन्धीनां, स्वरव्यञ्जनसन्धीनाम्, नान्तपदानाम्, समस्तासमस्तानां च बोधो भवति। तथाहि — ऋग्वेदसंहितायाः प्रथमेऽष्टके अग्निमीळे-इति वर्गे— "सुता विश्वा दधाना अजोषा इद्रता: सोमपा इमा जुष्टा मत्सरा द्रप्सा घृत-

पृष्ठा यजत्रा द्रविणोदा धाता, शुक्रा, पञ्चदश। तुविजातौ दधानाइन्द्रे योगे वचसे महाधने ये ब्रहते ह्नमहे यज्ञे हविष्मो क्षियत एकादश, य एकपर्वणोना कचीवन्त य इति वर्जयित्वा। प्रवीहधन् बृहन् आदित्यान् विश्वान् पर्वतान् ,पञ्च। यावकासने तदिमं द्वैपदम्, बृहन् रोहयन्नेव आयुत्कर्णकपदम्, सहस्रसातमं द्वितीयं नैष्टरिति दीर्घम्नी इति दीर्घम्नी त्रीणि द्वैपदम्"-इति (१, १. १.)। पदमाढ़ादयो वैदिकग्रन्था अपवेव मिव। एताहृशाय ग्रन्था. सुप्ताविदेव क्षतायां यावत्रैवावि भूत पाणिनीयसदृश किमपि सर्वतोमुखं व्याकरणम्; प्रचलिते एताहृशे व्याकरणे विसर्गसन्ध्यादिसंशयाना प्रसरतैव कथ मिति सुधीभिरेवाकल्पतां समन्तादिति समम्।

एव मस्ति चापरो ग्रन्थो वैदिकाना यत्र वेदसंहिताया' प्रतिवर्गस्य पदानाम्, इतिकरणानाम्, द्वि खण्डानाम्, विस गीयाम्, मकारान्तानाम्, नकारान्तानाम्, तकारान्तानामेति सप्तविधसङ्ख्या अङ्काचरैर्निर्दिष्टा। तथाहि— "पथ देवाय" -इति प्रथमाष्टकीयद्वितीयाध्यायीयाद्यवर्गे "४३। २। ८। १४। ८। २। ०।"-इति (२. १. १.)। एतेन तु नि सशय विज्ञायत एतत्;— तत्र वर्गे त्रिचत्वारिंशदेव पदानि; द्वे एव इतिकरणे ('हरी इति', 'पुनरिति'); अष्टौ एव द्वि खण्डानि ('रत्नऽधातम.', 'वच ऽयुजा', 'परिऽज्मानम्', 'सुऽरूम्', 'सव'ऽदुघाम्', 'सत्यऽमन्त्रा', 'ऋजुऽयव', 'राजऽभि.')। द्वि खण्ड मिलन्ते समस्तस्यासमस्तस्य चावग्रहस्यान्त.पदस्य पदस्य वोधो भवति। तथाहि— "यन्त पद येषा स्याद् विकारोऽलन्यकारित:। एतानि परिग्रह्णीयाद् बहुमध्यगतानि च (ऋ० प्रा० १०. ८८)"

-इत्याह शौनकः। 'अवग्रह्याणि द्विःखण्डानि पूर्वोत्तरपद-भूतानि'-इत्यादि च गतोव्टः। प्रदर्शितेष्विह तु 'रत्नऽधा-तमः'-इत्यत्र 'रत्नानां धातमः'-इत्येवं समास इष्टः पदकारस्य शाकल्यस्य, तथैवान्येषा मपि पाणिनिपूर्वजानाम्; किञ्च राज-भिरित्यत्र अन्तःपद कार्यस्य न-लोपस्य कर्त्तव्यत्वात् तस्यापि द्विःखण्डत्व मन्तःपदत्व मिति। एवं तत्र वर्गे सन्ति चतुर्दशैव विसर्गाः; नवैव मकारान्तानि पदानि; द्वे एव स्तो नकारान्ते पदे; तकारान्तं पदन्तु नास्त्येक मपीति। तदेवमादीनां ग्रन्था-नाञ्च प्रादुर्भावदर्शनात् गम्यत एवास्मात् पाणिनीयाष्टकात् पूर्वं नासीदेव कि मपि व्याकरणं सर्वतोमुखं सर्वाङ्गसम्पन्न मीदृ-शम्, यथा चैवमादीना ग्रन्थानां प्रादुर्भाव एव न स्यादिति; को हि नामाधीतपाणिनीयः पदच्छेदप्रभृतिज्ञानाय, विशेषतो द्विःखण्ड-ज्ञानाय चैतादृशस्यापि ग्रन्थस्याध्ययने यतते साम्प्रत मित्यष्टमम्।

एवं सन्ति च विविध-'लक्षण'-ग्रन्थाः प्राचीनतमाः। तत्त-दनुगतान्येव सङ्केताचराणि दृश्यन्ते वर्गादिना मन्त्रेषु। तादृगाचर-सन्निवेशैश्च तत्तद्वर्गादिषु प्रगृह्यसङ्ग्रादीनां निश्चयतावगम्यते। तथाहि— अध्येतारश्चाद्यापि "अग्निमीळे (ऋ० सं० १. १. १.)" -इत्यस्य वर्गस्यान्तेऽधीयत एव "डै"-इति सङ्केताचरम्। एतेन हि ज्ञायते— तत्र वर्गे नान्त-विसर्गान्त पदाना विषमत्वम्, द्विः-खण्डानां तु समत्वम्, प्रगृह्याभावः, स्वन्तवैयग्रयश्चेति। वस्तुतः सन्ति तत्र वर्गे विसर्गान्तानि सप्तदश, द्विःखण्डान्यष्टौ; सन्ति च एक मेव नान्तम्, स्वन्तश्चैकम्, प्रगृह्याभावश्चेति। एवं "घृतवती (ऋ० सं० ५. १. १४.)"-इत्यस्य वर्गस्यान्तेऽधीयत एव खलु 'घ'-इति सङ्केताक्षरम्। एतेन च तत्र वर्गे नान्त-

स्यन्त दिःखण्डानां वैषम्यम्, विसर्गान्तानां साम्यम्, प्रगृह्याश्चैकत्रिंशत्,— इत्येवं बोधितं भवति; किञ्च नास्ति तत्र नान्तं स्यन्तं वा पद मेक मपि; सन्ति च द्विःखण्डानि सप्तविंशतिः, विसर्गान्तानि च पदानि चतुर्दश, प्रगृह्याख्यपदानि चैकत्रिंशदेवेति। तदेवमादीनां ग्रन्थानां तदैवोपयोगो विशेषत आसीत्, यदा नासीत् पाणिनीयसमानं सर्वतोमुखं व्याकरणं कि मपि; सति हि पाणिनीये व्याकरणे, पाणिनीयसमानापरव्याकरणे वा तत्र व्युत्पन्नानां कि मेतादृग्ग्रन्थैस्तावत्प्रयासेन; ननु ते हि सन्धान् प्रपठ्येव किमु नावगच्छेयुः प्रगृह्यादीनि? अवगच्छेयुरिति चेदवश्यं मन्तव्यं नासीत् पाणिनीयात् पूर्वं पाणिनीयसमानं कि मपि सर्वतोमुखं व्याकरण मित्यत एवैवंविधसङ्केतोपदेशाः समुद्राविता, समादृताश्च ते तदानीन्तनैरिति नवमम्।

यत्तैव वोपदेवकृतस्य कविकल्पद्रुमस्य भूमिकाया मिन्द्रादीना शाब्दिकाना मुल्लेखो विद्यते— "इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः। पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥ मतानि तेषां मालोच्य सर्वसाधारणः स्फुटः।०—०। कविकल्पद्रुमो नाम पद्यैर्निष्पाद्यतेऽद्य च॥"—इति, तेनापि व्याकरणेषु पाणिनीयस्यादिमत्ता न विहन्यते; शाब्दिकत्वव्याकरणकर्तृत्वयोः सामानाधिकरण्यनियमाभावात्;— न ह्येव कश्चिन्नियम उपलभ्यते, ये ये शाब्दिकाः, स्युरेव ते ते व्याकरणकर्त्तार इति; व्याकरणकर्तृत्वाभावे हि शाब्दिकत्व न भवतीत्येवं नियमो नैव विचारसह। तदेव मन्यामहे,— प्रत्येकेषु शाब्दिकेषु इन्द्रस्य प्रतिपदपाठाध्येतृत्वेन शाब्दिकत्वं महाभाष्ये वर्णितम्, प्रदर्शितञ्च तत् पुरस्तादिहैव (१०८ पृ०)। चन्द्रस्तु व्याकरणकर्तेति सत्यम्,

परं न स पाणिनितः प्राचीनः ; पाणिनिभाष्यानुसारत एव तेन व्याकरणान्तरं प्रणीतं यतः । तथाहि राजतरङ्गिण्याम्— "चन्द्राचार्यादिभिर्लब्ध्वा देशं तस्मात्तदागमम् । प्रवर्त्तितं महाभाष्यं स्वञ्च व्याकरणं कृतम् (१. १. ७६.)"-इत्युक्तं पुरस्तात् प्रदर्शित मेव । काशकृत्स्नस्तु शाब्दिक इति सत्यम्, परं न वैयाकरणः ; अपि तु मीमांसकः । तथाहि महाभाष्ये— "काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी"-इति (४ अ० १पा० १आ०)। शाब्दिकाना मन्यतमः खल्वापिशलिर्यतो "वा सुप्यापिशलेः (६. १. ९२.)"-इत्युक्त्या पाणिनिना सम्मानितो दृश्यते, अत पाणिनिसमकालिकः तत्पूर्वकालिको वेति प्रतीयते च, परं नैतावता तस्य व्याकरणकर्तृत्व मभ्यङ्गीकर्तव्यम् ; न ह्युपलभ्यते इदानीम् नापि प्रतीयते कदाप्यासीत् तद्व्याकरणस्य सत्तेति ; सामतन्त्रस्य प्रणेता आपिशलिरिति प्रवादोऽपि क्वाचित्कः । शाकटायनस्य तु तत्कृततन्त्रं व्याकरण मद्यापि विद्यते, परं न ततः समासतद्धितादीनां सर्वथा बोधः समुत्पद्यते ; नापि ततः सुदुरपास्य इत्यादिपदानां साधनिका ज्ञायन्ते ; न च तस्यात्र निरुक्ते व्याकरणत्वेन ग्रहण मिष्ट गम्यते ; यास्केन हि प्रायः सर्वत्रैव वैयाकरणेभ्यः पृथक् कृत्वैव तन्नामग्रहणं कृत मिति । तथाहि— "नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च ; न सर्वाणीति गार्ग्यो वैयाकरणाना च"-इति (१. ४. १.)। अमरोऽपि न व्याकरणकृत्, नापि पाणिनेः पूर्वभव इति तु सुप्रसिद्ध मेव । जैनेन्द्रस्तु सत्य मभवत् सर्वलोकगुरु स्त्वैकस्य व्याकरणस्य प्रणेतेति ; दृश्यत एव हि तद्व्याकरण मद्यापि, परं तस्य पाणिनिपरजत्वं तु सर्वसम्मत मेवेति दिक् ॥

यदेष प्रवादः,— आसीत् पुरा माहेशं नाम व्याकरणं पाणिनीयतोऽपि बृहत्तरं पुरातनञ्चेति । तथाचाय मुद्रष्टश्लोकः,—

"यान्युज्जहार माहेशाद् व्यासो व्याकरणार्णवात् ।
किं तानि पदरत्नानि सन्ति पाणिनिगोष्पदे"—इति ।

तदेतस्य मातृपितृनिर्णयहीनत्वादप्रामाण्यमेवेति विदुषामपरामर्शः । मधुसूदन-सरस्वती-नामा भिक्षुः प्रस्थानभेदे पाणिनीय मेव माहेश्वर मित्याह । तथाहि— "तच्च वृद्धिरादैजित्याद्यष्टाध्यायात्मकं महेश्वरप्रसादेन भगवता पाणिनिनैव प्रकाशितम्; अत्र कात्यायनेन मुनिना पाणिनीयसूत्रेषु वार्त्तिकं विरचितम्; तद्वार्त्तिकस्योपरि च भगवता मुनिना पतञ्जलिना महाभाष्य मारचितम् । तदेतत् त्रिमुनि व्याकरणं वेदाङ्गं माहेश्वर मित्याचक्षते"—इति । "अइउण्"-इत्यादिषु चतुर्दशसु सूत्रेषु पुरासीत् बृहद् व्याख्यानं नन्दिकेश्वरकृतम्, तदेव माहेश मिति व्यपदिष्ट मिति च वृद्धाः । असम्मते तु केनचिदविचुद्व्याकरणाध्यायिना पाणिनीयद्वेषिणैवैष श्लोकः प्रणीतः, आसीन्माहेशं नाम अतिबृहद् व्याकरण मिति प्रवादोऽप्येतदनुगत एव; माहेशन्तु वस्तुतः खपुष्प मिव त्रैकालिकाभावसम्पन्न मेवेति ॥

किञ्चेह पाणिनीये अपि-शाकल्य-काश्यप-भृगु-क्रुत्स-वशिष्ठ गोतम-कौण्डिन्य-जाबाल-वङ्गा-यस्क-शाकटायन-कौरव्य-मण्डूक-मद्र-बभ्रु-पैल-कलापि-वैशम्पायन-तित्तिरि-वरतन्तु-कौशिक-शौनक-गालव-भारद्वाज-चाक्रवर्म-स्फोटायन-आपिशलि-आङ्गिरस-छागलि कठ चरक-पाराशर्य-शिलालि-प्रभृति बह्वाचार्यनामस्मरणात् तेभ्यो ह्यवरजत्व मस्य पाणिनेः स्फुट मित्यवश्य स्वीकार्यम्; परं न तथा स्वीकारे स्वीकृतं भवेत्,— एतस्मात्

'पूर्वं मपि कश्चिदासीद् व्याकरणग्रन्थः सर्वतोमुख इति । एवञ्च ये केचिदाचार्याः पाणिनिसमकालाः, तेषां भाषाव्यवहारतो ज्ञातानि तेन भगवता तेषां शाब्दमतानि ; ये केचन तत्पूर्वभवा , तेषा मपरशास्त्रीयग्रन्थादिदर्शनादपि सम्भवेन्नाम तदीयशाब्दमतज्ञानम् ; ये तु व्याकरणकर्त्तारोऽपि , तेषां तान्यपि व्याकरणानि न ह्येतादृशानि सर्वतोमुखानि सर्ववेद-लोक विषयाणीति चावश्य मुररीकर्त्तव्य मस्मत्प्रदर्शितहेतुभिरिति ।

गरुडपुराणोक्तस्य कुमारव्याकरणस्य तु वोपदेवकृतात् मुग्धबोधादप्याधुनिकत्वम् "तिप्तसन्ति प्रथमो मध्यमः सिप्थसथोत्तमपूरुषः । मिब्वस्मसः परस्मै तु पदानामात्मनेपदम्"–इत्यादिपाठादेव सुव्यक्तम् । अग्निपुराणाद्युक्तानि व्याकरणानि तु बालक्रीडनानीव । कार्त्तिकेयोक्त-व्याकरणादीन्यपि पाणिनीयप्रवेशाय कृतान्येवेत्यल मिहानल्पजल्पनेनेति ।

तदेवं पाणिनीयस्यैवादिव्याकरणत्वात् यास्कीयेऽत्र निरुक्ते यत्र क्वचित् व्याकरणनामोल्लेखो विद्यते , तत्सर्वं मेव यास्कस्य पाणिनीयपरभवत्वे विनिगमकम् ; न हि यास्कीयनिरुक्तात् पूर्वं किञ्चन सर्वतोमुखं व्याकरणं पाणिनीय मन्तरेण स्थित मिति पाणिनेर्यास्कपूर्वजत्वं सुवचम् ॥

यत्तूक्तं केन चित् पाटलाविजय जम्बूवतीविजय-काव्ययोः प्रणेताऽप्यय मेव पाणिनिरिति , तदप्यश्रद्धेय मेव सर्वेषाम् ; न हि व्याकरणाचार्यस्य पाणिनेः रचनायां व्याकरणाशुद्धिः सम्भवेन्नाम, नापि हि महाभाष्यकृत्पतञ्जलिकालपर्यन्ताविर्भूतेन केनचिद् वैयाकरणेन प्रयुक्तं किमपि पद मशुद्ध मिति गणयितुं शक्यते तत्परजातैः कालिदासादिभिरिव प्रयोगपटुभि. । अस्ति च व्याक-

रणाशुद्धिदीप पाटलाविजये, उदाहृतश्च स रुद्रटकृतकाव्यालङ्कार-टीकाकृता नेमिसाधुना च्युतसंस्कृतिदोषोदाहरणप्रसङ्गे "सन्ध्यां वधूं गृह्य करेण"-इति। तत्र गृहीत्वेति वक्तव्ये गृह्येति प्रयोग एवाशुद्ध। अत्रेदं विचार्यम्,— अशेषशेमुषीसम्पन्नस्य, महेश्वरवरप्रसादाल्लब्धव्याकरणविद्यस्य, सिद्धवाग्विभवस्य, व्याकरणस्रष्टुस्तस्य पाणिनेर्व्याकरणाशुद्धिः कदापि सम्भवेत् किमु? इति। यदि नाम गृह्येति पदं तेनैव पाणिनिना प्रयुक्तं स्यात्, तर्हि तत्प्रयोगबलादेव साध्विति कथं न मन्येतेति च, प्रयोगा अपि हि पाणिनि कात्यायन पतञ्जलिना साधुत्वनियामका भवन्त्येवेत्युररीक्रियत एव सर्वैः। तदेव, यत इदं गृह्येति पदं न कोऽपि साधु मन्यते, अतोऽपि ज्ञायते नेदं व्याकरणाचार्येण तेन पाणिनिना प्रयुक्तम्, न च पतञ्जलिपूर्वकालीनेनापि केनचिदिति। केचिदाहुः,— व्याकरणकृदेव पाणिनि महाकवेर्वाल्मीकेश्च बहुपूर्वभव, वाल्मीकीयाद्रामायणात् पूर्वमेव सूत्रकालो गत इति। तेषां नये तदोपजात्यादिवृत्तानां कथा तु स्याद् दूरपराहता, आनुष्टुभेनापि छन्दसा कश्चिल्लौकिको ग्रन्थो ग्रथितो न वेति महान् संशय एवेति।

सोऽपि भगवान् पाणिनि खलु युधिष्ठिरवासुदेवार्जुनेभ्य परभव एव, तदीयेऽष्टके "गवियुधिभ्यां स्थिर (८ ३ ९५)"-इत्यस्य, "वासुदेवार्जुनाभ्यां वुन् (४ ३ ९८)"-इत्यस्य च सूत्रस्य विद्यमानत्वात्। पारिक्षिताद् जनमेजयाच्च य किञ्चिदुत्तरभव, एतदीये ह्यष्टके जनमेजयपदसाधनायैव 'एजे खश् (३ २ २८)"-विधानदर्शनात्। जनमेजयस्तु युधिष्ठिरतृतीयभ्रातुरर्जुनस्यैव पौत्र। स च अर्जुन "शतेषु षट्सु सार्द्धेषु

त्राधिकेषु च भूतले। कलेर्गतेषु वर्षाणां अभवन् कुरुपाण्डवाः (१. ५०.)"–इति राजतरङ्गिणीलेखदर्शनात् कलेः सप्तमशताब्द्यां स्थितः। ततो जनमेजयः कलेरष्टमशताब्दीज इत्येव सम्भाव्यते। व्यासोऽपि कश्चित् तदानीं मासीदिति च महाभारताख्यानादिभिर्ज्ञायत एव; तस्य व्यासस्य पुत्रः शुकोऽपि तच्छताब्दीज एव भवितुं मर्हति, परं यतश्च व्यासपुत्रशुकवाचकवैयासकि पदसाधनाय न कश्चिद् योगोऽस्ति पाणिनीयः, अस्ति तु "व्यासवरुण० (पा० ४. ३. ८७ वा०)"–इति वार्त्तिकम्, अतोऽवगम्यते वैयासकिपरिचयो नैव विदित आसीत् पाणिनेरिति। तदियं व्यासपुत्रस्य शुकस्य लोके ख्यातिप्रतिपत्तिलाभात् पूर्वं मेव प्रणीत मिद मष्टकम्पाणिनीय मिति कलेरष्टम्या मेव शताब्द्यां खीष्टजन्मतश्च प्राक् चतुर्विंशशताब्द्या मिम मार्यावर्त्तं भूषयामास स पाणिनिरिति ध्रुवम्॥

[ व्याडिः ] उक्तं पुरस्तात् (१०५ पृ०) बह्वृक्प्रातिशाख्यकृतः शौनकस्य पाणिनिपरजत्वम्, यास्कस्य तु ततोऽपि परजत्व मिति; तदेवावसरप्राप्त मिदानीं निर्णेतु मिह व्याडिविषयेऽपि किञ्चिद् ब्रूमः। तथाहि— अस्ति पाणिनेरष्टके स्वरप्रकरणे "आचार्योपसर्जनश्चान्तेवासी (६. २. ३६.)"–इति सूत्रम्; अत्र च कृतः सन्देहो वार्त्तिककारेण— "आचार्योपसर्जने ऽनेकस्यापि पूर्वपदत्वात् सन्देहः"–इति; "आपिशल पाणिनीय व्याडीय गौतमीया., एकं पदं वर्जयित्वा सर्वाणि पूर्वपदानि, तत्र न ज्ञायते कस्य पूर्वपदस्य स्वरेण भवितव्य मिति"–इत्येवं च तद्भाष्ये तत्सन्देहोपपादनम्। अत्र हि सन्देहोदाहरणे आपिशलादीनां नूनम् "अभ्यर्हितञ्च"–इति (पा० २. २. ३४ वा०) शासनात्

अभ्यर्हितक्रमेणैवास्ति सन्निवेशः; अभ्यर्हितत्वञ्च स्यात् तेषां स्वसाचार्यपौर्वापर्यमूलक मेवेति। तथा च आपिशलितः पराचीनः पाणिनिः, पाणिनितश्च पराचीनोऽयं व्याडिरिति तु व्यक्त एव; अपीह कात्यायनीयोदाहरणे व्याडीयशब्ददर्शनात् कात्यायनात् खलु प्राचीनोऽयं व्याडिरित्यत्र च कास्ति वक्तव्यता? तदेतस्मादेकस्मादेवोदाहरणविन्यासाद् इ एव विज्ञातं,— व्याडेः पाणिनितोऽवरजत्व कात्यायनत पूर्वजत्वञ्चेति।

स एव व्याडिः, 'सङ्ग्रह'-नामकस्य पाणिनीयव्याख्यानविशेषस्य प्रणेता। तत्र पूर्वोक्तं महाभाष्ये पस्पशायाम्— "सङ्ग्रहे एतत् प्राधान्येन परीक्षितम्,— नित्यो वा स्यात् कार्यो वेति। तत्रोक्ता दोषाः, प्रयोजनान्यप्युक्तानि। तत्र त्वेष निर्णयः— यद्येव नित्यः अथापि कार्य उभयथापि लक्षणं प्रवर्त्य मिति" –इति। "सङ्ग्रहे= ग्रन्थविशेषे"–इति च तद्व्याख्याया कैयट। "सङ्ग्रहो व्याडिकृतो लक्षश्लोकसङ्ख्यो ग्रन्थ इति प्रसिद्धः"–इति च तद्विवरणे नागेशभट्ट। तदेतस्मादेकस्माच्चैव विदितं— व्याडिरेव सङ्ग्रहस्य कर्त्तेति, स हि पाणिनितोऽवरजश्चेति।

स एव दाचायण इत्यप्युक्त। अस्ति पाणिनिसूत्रम्— "उभयप्राप्तौ कर्मणि"–इति (२. ३ ६६.)। "शेषे विभाषा" –इति च तत्र कात्यायनस्य वार्त्तिकम्। "शोभना खलु पाणिनेः सूत्रस्य कृतिः, शोभना खलु पाणिनिना सूत्रस्य कृति; शोभना खलु दाचायणस्य सङ्ग्रहस्य कृति, शोभना खलु दाचायणेन सङ्ग्रहस्य कृतिः"–इति च तदुदाहरणानि। तदेतदामूलसमालोचनया च त्रोणि विज्ञातानि भवन्ति,— दाचायण इति सङ्ग्रहकर्त्तुर्व्याडेरेव नामान्तरम्, स च पाणिनितोऽवरज, कात्यायनतोऽग्रजश्चेति।

ये केचिदाहुः,— दाचायण इति युवप्रत्ययदर्शनात् तस्य हि व्याडेः दाचीपुत्र (पाणिनि) समकालिकत्वम्, तदसङ्गत मेव; न हि समकालिकग्रन्थे कस्यापीदृशी श्रद्धा समुत्पद्येत, यत् तत्र लक्षश्लोकात्मकं व्याख्यान मारचयेदिति। नापि हि पाणिनि-काले एव पाणिनीयसूत्राणा मेवं व्याख्यानं प्रयोजनीयं भवितु मर्हति; तदानीन्तनाना सर्वेषा मेवातिबुद्धित्वात्; किञ्च सूत्र-काले एवैवं व्याख्यानं प्रयोजनीयं चेत्, तादृशसूत्रप्रणयनं सूत्र-काराणा मसङ्गत मेव स्यात्; न हि लोकहितचिकीर्षुभिः पाणिन्यादिभिः लोकविडम्बनायैव दुर्बोधसूत्ररचनं सम्भाव्यते। अतोऽसम्भवे तु पाणिनिजन्मतोऽन्यूनद्विशताब्द्यन्तरे जातोऽयं व्याडिः, तदानीन्तनानां पाणिनीयावगमे कष्ट मेवानुभूय बृहद्-भूत्वैवान्वाचचचे तद्व्याख्यानं महद्धं नाम; न हि द्विशताब्दी मन्तरा तथा मन्दबुद्धित्वं सम्भाव्यते, यथा च सूत्रबोधाय तादृश मतिबृहद् व्याख्यान मपि प्रयोजनीयं भवेदिति।

यदिदमुक्तमेवापत्यं युवा स्याद् दाचायणो मान्यः, एव मपि न नियमः; दशगोत्रीयस्य यततमस्यापि यस्य कस्याप्यपत्यं युवा भवितु मर्हत्येव दाचायण इति; तत्र बाधादर्शनात्, जीवद्वंश्यत्वमातस्यैव युवसञ्ज्ञानिदानत्वात्। जीवद्वंश्यत्वन्तु यत-तमस्याप्युपलभ्येत चेत्, तथापि युवसञ्ज्ञया भवितव्य मेवेति।

किञ्च युवप्रत्ययस्तु जीवद्वंश्यादावेव भवति नान्यत्रेति न नियमः, अपि जीवद्वंश्यादौ भवत्येवेति च नियमः; वार्त्तिक-कार-कात्यायनेन हि 'वृद्धस्य च पूजायाम्' युवसञ्ज्ञा विहिता, "यूनश्च कुत्सायां गोत्रसञ्ज्ञा" इत्येवेति युवसञ्ज्ञा मधिकृत्य महाभाष्ये सिद्धान्तितम्, लघुशब्देन्दुशेखरे चैतत् सुव्यक्तम्।

तदेवं दक्षगोत्रजो मान्य‌ कश्चिदर्वाचीनोऽपि दाक्षायण इत्युच्येतैव, किं सङ्ग्रहकारस्य व्याडेः दक्षगोत्रविभूषणस्य ? इति।

अन्यच्च; यदि हि नाम स व्याडिः पाणिनेः समकालिको मातुलपौत्रश्च स्यात्, तर्ह्यवश्यं दृश्येत सूत्रं तदष्टके 'व्याड्यादयः शालायाम्'-इत्येव ;— न च "छात्र्यादयः शालायाम्"-इति (६. २. ८६.); व्याडिशालाया एव पाणिनेर्मनसि पूर्वोदय-सम्भवात्। तत्र छात्र्यादिगणे व्याडिशब्दस्य पाठ एव व्याडेः पाणिनिसमकालिकत्वं बोधयतीत्यपि वक्तुं न युज्यते; गणपाठे हि काले काले शब्दाः सन्निवेश्यन्ते,-इति तु सर्वैरङ्गीकार्यमेवेति। सिद्ध मित्थं सङ्ग्रहकर्त्तुर्व्याडेराचार्यस्य व्याकरणाचार्यात् पाणिनितो बहुकालपरजत्वं वार्त्तिककाराच्च कात्यायनात् बहु-पूर्वजत्व मपीति॥

[शौनक.] प्रातिशाख्यकृत् सङ्ग्रहकर्त्तुः शौनकं व्याड्योश्च सम-कालिकत्व मवगम्यते। अस्ति हि शौनकीये ऋक्प्रातिशाख्येऽसकृद् व्याडेरुल्लेखः, अस्ति च व्याडिकृतायां विकृतिवल्ल्यां मसकृच्छौन-कस्यावगमश्च। तद्यथा, प्रातिशाख्ये व्याडेरुल्लेख‌ (३. ८.)—

"परिपष्टे त्वनार्यान्स्तेन वैकाक्षरीकृतात्।
परेषा न्यास माचारं व्याडिस्तौ चेत् स्वरौ परौ"-इति।

"अनार्षादितिकरणात् परेषा मक्षराणां न्यास मनुदात्तत्व माचारं मन्यते व्याडिराचार्य."-इत्येवमादिकञ्च तत्रोव्वटकृतं भाष्यम्।

तथा "उभे व्याडिः समस्वरे"-इति (३. १२.)। "व्याडिस्त्वाचार्यः"— इत्यादि च तद्भाष्यम्।

"व्याडे. मर्वत्राभिनिधानलोप."-इति (६. २१.)।

"व्याडेराचार्यस्य"-इत्यादि च भाष्यम्। अपरञ्च (१३. ३८.)—

"समापाद्य नाम वदन्ति पत्व तथा णत्व सामवशाच्च सन्धीन् ।
उपाचार लक्षणतश्च सिद्ध माचार्या व्याडिशाकल्यगार्ग्या "-इति ।

"तथा वदन्ति के ? आचार्या ,— व्याडिशाकल्य गार्ग्या "-इत्यादि च तद्भाष्यम् । अपर मपि ( १३ प० ४४ )—

"व्याडिर्नासिक्य मनुनासिक वा"-इति ।

"व्याडिराचार्य "-इत्यादि च तत्र भाष्यम् । तान्येवमादीनि व्याडिमतानि तु पाणिनीयव्याख्यानरूपात् सङ्ग्रहग्रन्थादेव शौनकेन सङ्गृहीतानीत्यपीह ध्येयानीति ।

एवं व्याडिकृताया विकृतवल्ल्याश्च शौनकस्यावगम — "अनुलोमे यथाक्रमम् ( वि० व० १, ८ )"-इत्यत्र "यथाक्रम शब्देन प्रातिशाख्योक्ता पञ्चचरचैप्रादयो दृष्टव्या "-इत्याह विकृतिकौमुदीकृत् । तथा 'व्युत्क्रमे क्रमवत् सन्धि' (१, ११ )" -इत्यत्र च "विपर्ययक्रमसन्धौ शौनकोक्ता चैप्रादिसन्धयो भवन्ती त्यन्वय "-इत्यादि चाह स एव कौमुदीकृद्धाचार्य । तत्रैव "इकारादिविधानम्"-इत्यस्य व्याख्यायमुक्तम्—"इकारस्य लहका रादेश शौनकोक्त एव"-इत्यादि । तथाग्रेऽपि "एकारौकार परस्तु भकारोऽभिनिहन्यते ( १. १३. )"-इत्यस्य कौमुद्याम् "उद्ग्राहसन्धौ शौनकाचार्ये प्रकृतिभावनिमित्त प्रापित 'प्लुत त्यान्त ( पा० ६ १. ११५. )'-इत्यनेन सूत्रेण"-इत्यादि । स्पष्ट चास्ति तत्र शौनकनामोल्लेख "उदात्तादिविधान तच्छौनकोक्त भवेदिह"-इति ( वि० व० १ प० १५ श्लो० ) ।

अतो मन्यते सुद्बुमित शौनकव्याड्यो. समकालिकत्व मिति । तत्र च प्रथम तावत् व्याडिराचार्य पाणिनेरष्टक मवलम्ब्य सङ्ग्रह मारचितवान् , तत शौनकाचार्य. शाकलसंहिताया विशे

पाख्यापनाय प्रातिशाख्यं प्रणीतवान्; ततश्च तत्परिशिष्टस्थानीया अष्टप्रकरणा विकृतिवल्ली कृता पुनस्तेनैव व्याडिनेत्यपि प्रतीयते तत्तद्ग्रन्थसमालोचनादिभिरिति॥

अथैतौ शौनक-व्याडी गुरुशिष्यौ,— इत्येतदपि विज्ञायते, तत एव विकृतिवल्लीग्रन्थात्। तथाहि तन्मङ्गलाचरणे—

"नत्वादौ शौनकाचार्यं गुरुं वेदमहानिधिम्।
मुनीन्द्रं सर्ववेदज्ञं वक्ष्ये लोकविश्रुतम्"—इति (२)।

एवमपि सिद्धमेतयोः शौनकव्याड्योः समकालिकत्वम्। सिद्धश्च स्माभूत असौ प्रातिशाख्यकृच्छौनकः पाणिनेः परभव इति॥

ननु शौनकस्य पाणिनिपरभवत्वं सत्यमेवेति चेत्, कथं न तत्कृते बह्वृक्प्रातिशाख्ये पाणिनेर्नामोल्लेखः? अत्रेदं मन्यामहे,— यथा च सम्प्रति भट्टोजिदीक्षितकृता वैयाकरणसिद्धान्तकौमुदी नाम वृत्तिः प्रचलिता, अत एवाविशेषेण 'पाणिनीयव्याकरणमधीते'—इत्युक्ते तद्वृत्तिसमन्वितस्यैवाध्ययनस्य बोधो भवति, 'कौमुदीमधीते'—इत्युक्ते च पाणिन्यष्टकान्विताया एव तस्या वृत्तेरध्ययनं प्रतीयते, अपि च व्याकरणकारोल्लेखप्रसङ्गे तद्वृत्तिकर्तुः दीक्षितस्यापि नामोल्लेखः क्रियत एव; तथैव शौनककाले अपि ससूत्रसङ्ग्रहस्यैव व्याकरणत्वेन प्रसिद्धिरासीत्, सङ्ग्रहकारस्य च तस्य व्याडेर्व्याकरणकर्तृत्वेनेति। तदुक्तमस्ति हैमचन्द्रीये चाभिधानचिन्तामणौ— 'ससूत्रवृत्त्यर्थपदमहार्थम्"—इत्यादि (१२, २८) सङ्ग्रहविवरणम्। एवञ्च व्याडेरुल्लेखादेव पाणिनेरुल्लेखः सिद्धः। अत्रैवं शौनकीयप्रातिशाख्यादौ यत्र क्व च व्याकृतिविषये व्याडेराचार्यस्य नामोल्लेखो दृश्यते, तत्सर्वं नैव पाणिनिमरःस्व रकम्; व्याडिः खलु

पाणिनीयव्याख्यातृत्वेनैव वैयाकरणत्वसिद्धेः ; न हि व्याडिर्व्याकरणसूत्रकारः। तथाच— यद् दृश्यते ऽत्र "व्याडिर्नासिक्य मनुनासिकं वा"-इति ( ऋ० प्रा० १३ प० ४४. ), तदिदं "मुखनासिकावचनोऽनुनासिकः ( १. १. ८. )"-इत्यस्य पाणिनीयस्य सूत्रस्यैव व्याडिकृतं व्याख्यानं शौनकेन संस्मृत्योल्लिखित मित्येव गम्यते। एव मन्यत्रापि। भाष्यकृताप्युक्तं पस्पशायाम्— "अथ व्याकरण मित्यस्य शब्दस्य कः पदार्थः ? सूत्रम्। •—•। न हि सूत्रत एव शब्दान् प्रतिपद्यन्ते। किन्तर्हि ? व्याख्यानतश्च। ननु च तदेव सूत्रं विगृहीतं व्याख्यानं भवति, न केवलानि चर्चापदानि व्याख्यानम्— 'वृद्धिः, आत्, ऐच्'-इति। किन्तर्हि ? उदाहरणम्, प्रत्युदाहरणम्, वाक्याध्याहारः, इत्येतत्समुदितं व्याख्यानं भवति"-इति। अत एव चोक्तं दृश्यते हस्ती— "ससङ्ग्रहं व्याकरण मधीते"-इति ( पा० ६. २. ७९. )। अपि च शौनकीये हि तत्र प्रातिशाख्ये आचार्यपदेनापि पाणिनिः स्मरणं बहुत्र लक्ष्यते। तथाहि ( १. ४. १. )—

"अष्टावाद्यानवसानेऽप्रगृह्यानाचार्या आहुरनुनासिकान् स्वरान्।

तथिमाते शाकला दर्शयन्त्याचार्यशास्त्रापरिलोपहेतवः"-इति।

अत्रावश्यं पाणिनिकृतम् "अणोऽप्रगृह्यस्यानुनासिकः ( ८. ४. ५७. )"-इत्येव सूत्रं लक्ष्यीभूतं तस्येति स्वीकार्य मिति॥

किञ्च पाणिनीयप्रणयनात् पूर्वं कस्यापि प्रातिशाख्यग्रन्थस्य प्रचारः समभवदित्यपि न प्रतीयते ; क्वचिदपि पाणिनीयसूत्रे प्रातिशाख्यशब्दादर्शनात्, प्रातिशाख्यशब्दव्युत्पत्तये वार्त्तिककृत-यत्नस्योपलम्भाच। तथाहि— "गम्भीराञ्ञ्यः"-इति (४. ३. ५८.) सूत्रे उक्तं कात्यायनेन "पञ्चमकरणे परिमुखादिभ्य उपसङ्ख्यानम्"

-इति, तत्र परिसुखादिगणे च दृश्यते "प्रतिशाख"-इति। परिपच्छब्दस्तु हि दृश्यते पाणिनीयेऽपि, परं न तत्रैकत्रापि प्रातिशाख्यार्थोऽवगम्यते, अपि तु गायकाद्यर्थ एव। तथा "पार्षकृतिरेषा तत्र भवता नैव लोके नान्यस्मिन् वेदे अर्द्ध एकारोऽर्द्ध ओकारो वास्ति"-इति (१ अ० १ पा० ७ आ०) महाभाष्यवचनस्य नागेशादिकृत व्याख्यान चेहालोच्यम्।

वस्तुतस्तु शाखाविशेषेषु व्याकृत्यादिविशेषबोधनपरा एव प्रातिशाख्यग्रन्था, सामान्यतः सर्वशब्दानुशासनाय प्रवृत्तात् पाणिनीयादव्याकरणादवरजा एव भवितु मर्हन्ति। अतस्त्वैवोक्तं वह्नृक्प्रातिशाख्यशास्त्रप्रयोजनश्लोकव्याख्यानावसरे सप्तृतीयवृत्तिकृतोव्वटेन, कृतश्च तत्र पाणिनिसूत्रोद्धरणम्। तथाहि— "तथा व्याकरणे यत् सामान्येन, यथा— 'ऋचि तु नु घ मक्षु तङ् कु त्रोरुष्याणाम्'-इति (पा० ६, ३, १३३.), तद् व्यवस्थापयितु मिद मारभ्यते, न सर्वत्रैतानि पदानि अस्या शाखाया दीर्घा भवन्ति। यथा—"-इत्यादि। एव माथर्वणप्रातिशाख्येऽप्युक्त स्वयं सूत्रकृतैव— "एव मिहेति च विभाषाप्राप्त सामान्येन"-इति। सामान्येन लक्षणेन पाणिनीयेन यद् विकल्पेन प्राप्तम्, तदेव अस्या शाखाया व्यवस्थित भवतीति च तदर्थ। अत एवोक्त महाभाष्यकारेण च— "अवश्य खल्वप्यस्माभिरिद मवश्यम्, बहुल मन्यतरस्या मुभयथा वा एकेषा मिति। सर्ववेदपारिषदं हीद शास्त्रम्, तत्र नैक पन्था शक्य आस्थातुम्"-इति (२ अ० १ पा० ३ आ०)।

अथ केषाञ्चिद्वये प्रातिशाख्यकृच्छौनक एवैक सूक्तद्रष्टा, मण्डलद्रष्टा, कल्पकृत्, शाखाप्रवक्ता चेति। पूर्वप्रदर्शितानि षड

गुरुशिष्यवचनान्येवात्रैकं प्रमाण मुपलभ्यते ; तत्रापि नात्रैक्य मेव बीजम्, नान्यत् किञ्चिदस्माकम्। समासतः खण्डितञ्चैतत् पुरस्तादेव ( ५५ पृ० )। वस्तुतस्तु शुनकवंशीया: भृगुवंशीया अपि शौनका एव; तस्मान्नामैक्यबीजकं तादृश महत्तमतं त्वति-भ्रमविजृम्भित मिवैव प्रतिभाति ; न हि तत्र किमपि मानं लक्ष्यते,, प्रत्युत लभ्यन्त एव बाधा बहवः। तेषां कतिचित् पुरस्तादेव ध्वनिताः प्रदर्शयिष्यामश्चोपरिष्टादपि ( वेदसमालोचने ) कतिचिद्। इह च किञ्चित् प्रकटयामः ।—

प्रातिशाख्यकारस्य शौनकस्य तु मुनित्वेन व्यवहारदर्शनात् ऋषिकालात् परभवत्व मध्ययुगीयत्वञ्च। तथाहि— "नत्वादौ शौनकाचार्यं गुरुं वन्दे महानिधिम्। मुनीन्द्रं सर्ववेदज्ञं ब्रह्मज्ञं लोकविश्रुतम्"—इति विकृतिवल्ल्यां व्याडिवचनम् (२) ; न हि तेन तत्रोक्तम् ऋषीन्द्र मिति। पाणिन्यादीनां पतञ्जल्यन्ताना मध्ययुगीयाना मेव हि मुनित्वेनैव व्यवहारो दृश्यते प्रधानतः सर्वत्र, ऋषित्वेनापि व्यवहारस्त्वौपचारिकः ; पाणिनिपूर्वजाना मापिशलि-शाकटायन-गार्ग्य-शाकल्य कश्यपक्रौष्टुशौनक-माण्डूक्य-पाराशर्यप्रभृतीनां त्वाचार्यत्वेनैव व्यवहारो दृश्यते प्रधानतः सर्वत्र, ऋषित्वेन व्यवहारस्त्वातिदेशिक ; तेभ्योऽपि प्राचीनतमानां पुराकल्पश्रुतानां वशिष्ठ वामदेव गृत्समदशौनक-शौनकादीनां मन्त्रद्रष्टृणा मेव ऋषित्वं मुख्य मिति तु प्रतिपादितं पुरस्तादेव ( ३२–४४ पृ० )। तदेवं प्रातिशाख्यकृच्छौनको नून मध्ययुगीयः ; तत्रापि व्याडिसमकालिक इति पाणिनिपरजश्चातो नास्य कथ मपि युज्यते सूक्तद्रष्टृत्वादिक मितोऽप्यपास्तं षड्गुरुशिष्यस्याभिमत मिति ॥

एवञ्च यद्यपि बहूना मेव वैदिकग्रन्थाना प्रणेतृनाम शौनक इत्येवं श्रूयत एव, परं न हि तस्मादेवैव तेषां सर्वेषा मेक एव प्रणेतेति प्रामाण्य मुपगन्तु मर्हतीति शौनकाना विभिन्नव्यक्तित्व मसमकालिकत्वञ्च सुतरा सम्पद्यत एव। वर अनुमीयते,— शिक्षाविशेषकृत् शौनकाचार्यः पाणिनेः पूर्वजः; शैक्षाधिकारे "शौनकादिभ्यश्छन्दसि (४. ३. १०६.)"–इतिसूत्रीयशेखरे "छन्दसि किम्? शौनकीया शिक्षा"–इतिप्रत्युदाहरणदर्शनात्। कल्पकृत् शौनकाचार्यस्तु ततोऽपि पुरातन, तत्रैव तद्ग्रन्थस्यैवोदाहरणत्वेन बोधनात्; छन्दस्त्वसामानाधिकरण्येन प्रोक्तृत्व मेव हि तादृशोदाहरणत्वे बीजम्। यस्तु कल्पकृत्, स एव कर्त्ता शाखाप्रवचनस्यापि। तथा च्युद्धृतं विक्रान्तिकौमुद्या गङ्गाधरभट्टाचार्येण— "शाकलाः शौनका सर्वे कल्प शाखा प्रचक्षते"–इति (१. ४.)। तत्त्वत पाठभेदकल्पभेदावेव शाखाभेदहेतू। मण्डलद्रष्टुः शौनकर्षेस्तु द्रष्टृत्वेन व्यवहारात् ततोऽपि प्राचीनत्व मन्त्रयुगीयत्वञ्च; न हि एतद्युगीयस्य कस्यापि द्रष्टृत्वेन परिचय क्वाप्युपलभ्यते; भस्ति चैतस्य शौनकस्य द्रष्टृत्वेनैव व्यपदेश,— "द्वितीय मण्डल मपश्यत्"–इति (३३ पृ०)। मण्डलशब्दस्तु वैदिकमन्त्रसूक्ताना महत्त्वविशेषस्यैव वाचक., तदाह सर्वानुक्रमणीकृच्छौनकोऽपि— "तत्तद्दृष्टाना बहूना सूक्ताना मेकर्षिकर्तृक सङ्ग्रहो मण्डलम्"–इति, "सम्पूर्ण मृषिवाक्यन्तु सूक्त मित्यभिधीयते"–इत्यादि च। ततस्तस्माच्च तादृक्सङ्ग्रहकारात् शौनकात् प्राचीनोऽन्य एव शौनकर्षिः सूत्रकार,— इत्याप्यविचारित मेव मिदम्। तत्त्वत. सर्वत्रैव ग्रन्थकालनिर्णये ध्यातव्य मेतत्,— प्राचीनार्षाणा गोत्रनाम्ना मेव व्यवहार प्रामीत पुनर्व्यक्तिनाम्ना

मिति; यथाद्यापि दृश्यते मपिन्नामनामध्ययद्वारो दाक्षिणात्यानां भारतीयानां तथा इलण्डीयादीना मपि। अतएव व्यासाश्वलायनपाणिनिशौनकयास्कादीनां बहुत्वात् तत्तत्कृतेष्ववश्यम्भावी पौर्वापर्यविभ्रमो भवत्येव ?

इत्थ 'आर्षानुक्रमणी'-प्रभृतीनां दशाना मेवर्ग्वेदीयग्रन्थानां प्रणेता बभूव चैकः शौनक इत्याह सर्वानुक्रमणीवृत्तौ षड्गुरुशिष्यः—

"शौनकीया दशग्रन्थास्त ऋग्वेदस्य गुप्तये।
आर्षानुक्रमणीत्याद्या छान्दसी दैवती तथा।
अनुवाकानुक्रमणी सूक्तानुक्रमणी तथा।
ऋक्पादयोर्विधाने च वार्हद्दैवत मेव च।
प्रातिशाख्यं शौनकीयं स्मार्तं दशम मुच्यते"–इति।

एतदपि तादृशभ्रमादेव। तत्त्वतो बृहद्देवताकृच्छौनकस्तु प्रातिशाख्यकृतः शौनकात्, निरुक्तकृतो यास्काच्च अङ्गवरः; तत्र बहुत्रैव तयोर्नामोल्लेखदर्शनात्। तथाहि बृ० दे० २, ११२—

"पद मेकं समादाय द्विधा कृत्वा निरुक्तवान्।
पुरुपादः पदं यास्को दृचे दृचे इति त्वृचि॥"–इति।

दृश्यते चात्र निरुक्ते 'पुरुपानदनाय'–इति (२, २, २,)।

"कात्तीवतं सर्व मिति भगवानाह शौनकः॥"–इति च बृ० दे० ३, १५२,। लभ्यते चैव शौनकीयानुक्रमणिकातोऽपि। न हि कोऽपि विप्रः स्वं भगवानिति वक्तु मुत्सहेतेति नूनमनुक्रमणीकृच्छौनको बृहद्देवताकृच्छौनकात् प्राचीन इत्येवावगम्यते। तथा च षड्गुरुशिष्यकृत. 'शौनकीया दश ग्रन्थाः'–इति सिद्धान्तः कथं न विलोनो जलमध्यस्थमषीबिन्दुवदिति सुधीभिर्विभाव्य मेव। एवञ्च य एव प्रातिशाख्यकृत् स एव

आर्य्यनुक्रमस्यादीना मपि भवानां प्रणेतेति कथं स्वीकुर्महे वयम्? पर गीतावस्थाकं भवेत् स्वीकार्यम्,— सर्वं एवैते ग्रन्थाः पाणिनीयतो बहुत्तरभवाः; प्रातिशाख्यकृत्सहइकृतोर्गुरुशिष्यत्वेन समकालिकत्वप्रतीतेरिति (१२४ पृ०)।

यच्चाह षड्गुरुशिष्यः—"आसीद् ग्रहपतिर्यो वै नैमिषारण्यवासिनाम्। शतानीकाय राज्ञे वै जनमेजयसूनवे"-इत्यादि। तदपि न, बह्वृक्प्रातिशाख्यकृतः शौनकस्य व्याड़िसमकालिकत्वात्, व्याड़ेर्हि पाणिनितोऽन्यूनद्विशताब्दीपरत्वं प्रतिपादित चेतः पुर एवेति (१२१पृ०)। तदेवम् सर्वानुक्रमणीभाष्ये दृष्टानि षड्गुरुशिष्योक्तानि शौनकपरिचायकवचनानि सर्वाण्येवाग्रमात् विप्रापयन्ते एव। तत्सतो सर्वं एवैते शौनका नूनं विभिन्नकालजा इति बहुपूर्वापरीभावान्विताः; तत्रायं बह्वृक्प्रातिशाख्यकार' स्त्वेष शौनको यतो व्याड़िसमकालिकः, तत एव कलेरन्यूनैकादशशताब्दां स्त्रीष्टजन्मतश्च द्विसहस्राब्दीतः प्रागिहाक्षोड़दित्येवोपलभ्यत इति॥

[यास्कः] निरुक्तकारोऽयं यास्कश्च तस्मादस्माच शौनकात् पराचीन। दृश्यते ह्यत्र निरुक्ते (१. ६. १.) शौनकीयप्रातिशाख्यपूत्र मुद्धृतम्— "पदप्रकृतिः संहिता (ऋ० प्रा० २. १.)" -इति। उक्तञ्चेह— "पदप्रकृतीनि सर्वचरणानां पार्षदानि"-इति (१. ६. १.)। यतोऽस्मान्निरुक्तात् पूर्व मेव प्रणीताः प्रायः सर्व एव प्रातिशाख्यग्रन्थाः इत्यप्यनुमवामः॥

यत्तु केनचित् "न दाशतय्येकपदा काचिदस्तीति वै यास्कः"-इतिप्रातिशाख्योक्तिदर्शनात् यास्कस्तेतश्च शौनकाद्यजत्वं निर्णीतम्; तत्र मन्त्रिर्णयस्य तु मूले एव कुठाराघात इमः पुरस्तात् (१८पृ०)॥

एवं हि निरुक्तकारोऽयं यास्काचार्यः शौनकपरशताब्दीज इत्यपि वक्तुं शक्यते, सम्भवति च तथा पाणिनितः त्रिशताब्दी-परजत्व मस्य; नापि हि त्रि-चतुः-शताब्दी मन्तरा मनुजाना मेतादृशं बुद्धिवैजात्यं सम्भाव्यते,— यत्रैकेनैव सूत्रेण कृतार्थो मुनिः, तदर्थ एवैवं बृहद्ग्रन्थः प्रयोजनीयो भवेत्;— पृषो-दरादीनीति सूत्रेणैव साधितं पाणिनिमुनिना प्रायः सर्वनैरुक्त कार्य मिति तु बोधित मेव पुरस्तात् (१०, ११ पृ०)। एवञ्चेद मेव स्फुटं प्रतीयते पाणिनिकाले शिष्टानां भाषाव्यवहारत एव पदाना मर्थाः प्रतीयन्ते स्म, अत एव सूत्रयामास पृषोदरादी-नीति; तत उत्तरकालम् जाते हि शिष्टाना मपभाषाव्यवहार-बाहुल्ये, सञ्जाते च बुद्धिमालिन्ये ऽवश्य मेव विशेषतो निर्व-चनादेर्वैतथ्यत्व मुपगत मत एव प्रवृत्त मिदं निरुक्तं यास्कीय मिति। तदेवं कलेर्द्वादशशताब्द्या ख्रीष्टजन्मतश्चैनविंशशता-ब्दीतोऽपि प्राक् समभवदयं यास्क इति सिद्धम्॥

पाश्चात्याध्यापकगोल्डष्टूकरोड्नाविलप्रणालीतो बौधमिङ्गीयं प्लव मारुह्य च अपारकालपारावारे विचरन्तो वय मिमं यास्क मप-श्याम;—कस्यां नु वेलाया मासीनः स प्रणिनायेदं निरुक्त मिति।

साधवो येन गच्छन्ति तेन गच्छन् न दोषभाक्।

निन्दा वा यदि वा शंसा मानुषाणां हि युज्यत इति शम्॥

---

( ८ )

अथेदानीं विचार्यं मस्ति,— कैमर्थिक्येण प्रवृत्तिस्तस्य यास्कस्येति, "प्रयोजनमनुद्दिश्य न मन्दो हि प्रवर्त्तते"। किञ्च,

"सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित्।
( यावत् प्रयोजनं नोक्तं तावत् तत् केन गृह्यते ?'-इति।

न केनापीति भावः। अतोऽस्य च यास्कस्यात्र प्रवृत्ते प्रयोजनं वक्तव्य मेव। न चात्र साङ्ककर्त्तुः सृष्टिविषयक प्रश्न इवाय विचारः स्वार्थं परार्थो वास्यारम्भ इति निर्णयायेति, न ह्यन्यप्रकृतिरिव कोऽपि केवलं परार्थं किमपि कर्त्तुमुत्सहतेऽवेति धीमतां सिद्धान्त एव। अत एवाह भगवान् पतञ्जलिः —'नेह कश्चित् परोऽनुग्रहीतव्य इति प्रवर्त्तते, सर्वं इमे स्वभूत्यर्थं प्रवर्त्तन्ते। ये तावदेते गुरुशुश्रूषवो नाम, तेऽपि स्वभूत्यर्थं प्रवर्त्तन्ते,— पारलौकिकञ्च नो भविष्यति इह च प्रीतो गुरुरध्यापयिष्यतीति। तथा य एते दासाः कर्मकरा नाम, एतेऽपि स्वभूत्यर्थं प्रवर्त्तन्ते, भक्तं चैलञ्च लप्स्यामहे, परिभाषाश्च न नो भविष्यन्तीति ("परिभाषा = दण्डनादिका" कै०)। तथा य एते शिल्पिनो नाम, एते च स्वभूत्यर्थं प्रवर्त्तन्ते, वेतनञ्च लप्स्यामहे, मित्राणि च नो भविष्यन्तीति"-इति (१ अ० १ पा० २ आ०)। हरिणाप्युक्त मेव मेव—

"निमित्तेभ्यः प्रवर्त्तन्ते सर्व एव स्वभूतये।
अभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धये'-इति।

एष च विशेषाशयोऽस्य प्रश्नस्य— यथा च खलु ऋक्तन्त्रव्याकरणस्य ऋग्वेद एव विषयः, सामतन्त्र व्याकरणस्य सामवेद

एव ; तथैवास्यापि शास्त्रस्य कश्चिदेक एवैको विषयतया निर्दिष्ट उत यथा पाणिनीयं नाम व्याकरणं लौकिकानां सर्ववेदगतानां च सर्वविधसाधुशब्दाना मविशेषेण व्युत्पादनाय प्रवृत्तम्, तथै-वेद मपि ?-इति। अत्र ब्रूमः,— नेद मृक्तन्त्रादिवदेकवेद-विषयम्, इह सर्ववेदीयाना मेव निगमानां दर्शनात्; नापि पाणिनीय मिवेद लोकवेदयोरविशेषेण शासनम्, इह केवल-लोकविदिताना केवलब्राह्मणगतानाञ्च पदानां निर्वचनाना मना-लोचनात्; ततोऽयं ग्रन्थः तृतीयश्रेणीकः सर्ववेदमन्त्रव्याख्या-मार्गबोधनार्थैव प्रणीतः। अत एवाह यास्कः स्वय मेव—"अथा-पीद मन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते ऽर्थ मप्रतीयतो नात्यन्तं स्वरसंस्कारोद्देशस्तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थ-साधकञ्च"-इति (१. ५. १.)। प्रपञ्चितश्चैतत्तत्रैव तदुत्तरत्र।

अपरञ्चास्य विशेषतः समालोचनयेद मपि लक्ष्यते,— यथा मन्त्राणा मर्थादिज्ञापनाय च प्रवृत्ता ब्राह्मणग्रन्थाः, तथैवेद मपीति। प्रथमं ब्राह्मणग्रन्थेष्वेव निर्वचनानि च समाम्नातानि, ततोऽनुब्राह्मणग्रन्थेषु तन्निर्वचनादिकम्, ततो निदानसूत्रादिग्रन्थेषु बहु लीलायितं तद् भगवता यास्केनावहं पृथग् ग्रन्थरूपेणेति। ततश्च नेद शास्त्रं ब्राह्मणग्रन्थीयपदादिव्याख्यामार्गबोधनाय प्रवृ-त्तम्; अपि नाम यदर्थं प्रवृत्तं ब्राह्मणम्, तदर्थ मेवेद मपीति सर्वेषां वेदाना मन्त्रगतपदादीना मेव व्याख्यानप्रकारबोधनायास्य प्रवृत्तिरिति। अतएव स स्वय मेवोक्तवान् ग्रन्थोपक्रमे— "छन्दोभ्यः समाहृ य"-इत्यादि; छन्दस्त्वन्तु मन्त्राणा मेव मुख्य मिति सङ्क्षेपः॥

---

( ८ )

अथ कोऽयं वेदः ?— वेदशब्दस्य कीदृशी व्युत्पत्तिरिष्टा आर्य्याणाम् , तथा वेदस्य किं लक्षणम् , स्वरूपञ्च तस्य किमिति त्रयः प्रश्नाः स्वत एव सर्व्वमन सु समुत्पद्यन्त एव ; तत्समालोचना-यैवैतर्हि किञ्चिदिह यतामह इति यावत् ।

[ वेदः ] "विन्दन्ते ज्ञायन्ते लभ्यन्ते वा एभिर्धर्म्मादिपुरुषार्था इति वेदाः"–इत्येतद् वेदशब्द व्युत्पादनं कृतं दृश्यते देवमित्रपुत्रेण विष्णुमित्रेण ऋक्प्रातिशाख्यवृत्त्युपक्रमे । अन्यान्यविधानि च सन्ति बहूनि वेदशब्दव्युत्पादनानि, तानि चान्यत्रान्यत्र द्रष्टव्यानि ।

"प्रत्यक्षानुमानागमेषु ( प्रमाणेषु ) अन्तिमो वेदः"–इति, "प्रमाणबलेन सम्यक् परोक्षानुभवसाधनं वेदः"–इति, "अपौरुषेयं वाक्यं वेदः"–इत्यादीनि च वेदलक्षणानि सायणीये ऋग्भाष्यादौ द्रष्टव्यानि । "इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेदः"–इत्येकेनैव वाक्येन च वेदस्य व्युत्पादनलक्षणेऽप्युक्ते कृष्णयजुर्भाष्यभूमिकायां सायणेनैव । "प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते । एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता"–इति वचनञ्च तत्र मानत्वेनोपन्यस्तमुक्तं च "स एवोपायो वेदस्य विषयः, तद्बोध एव प्रयोजनम्, तद्बोधार्थी चाधिकारी ; तेन सहोपकार्य्योपकारकभावश्च सम्बन्धः"–इति ।

वेदस्वरूपञ्चोक्त मेवं बौधायनेन—"मन्त्रब्राह्मण मित्याहुः" –इति । आपस्तम्बेन च यज्ञपरिभाषायां स्फुट मुक्तम्— "मन्त्रब्राह्मणयोर्वेदनामधेयम्"–इति । सर्ववेदभाष्यकारेण सायणाचार्येणापि तद्वेदापस्ताम्बीयलक्षण मन्त्रस्य प्रपश्चितम् ऋग्भाष्यभूमि

कायां बहुधैव; सिद्धान्तितश्चैतत् तत्र "मन्त्रब्राह्मणात्मकः शब्दराशिर्वेद."-इति। उक्तञ्च भगवता जैमिनिमुनिनापि तथैव; तदनुश्लोकितञ्च सर्वानुक्रमणीवृत्तिभूमिकायां षड्गुरुशिष्येण। तथाहि –

"मन्त्रब्राह्मणयोराहुर्वेदशब्दं महर्षयः ॥
विनियोक्तव्यरूपो यः स मन्त्र इति चच्यते।
विधिस्तुतिकरं शेषं ब्राह्मणं कथयन्ति हि ॥
विनियोक्तव्यरूपश्च त्रिविधः सम्प्रदर्श्यते।
ऋग्यजु.सामरूपेण मन्त्रो वेदचतुष्टये ॥
अहेबुध्नीय मन्त्रं मे गोपायेत्यभिधीयते।
ऋक् पादबद्धा, गीतन्तु साम, गद्यं यजुर्मन्त्रः ॥
चतुर्ष्वपि हि वेदेषु त्रिधैव विनियुज्यते।
वेदैरशून्य इत्यादौ मन्त्रे त्रैविध्य मुच्यते ॥
प्रस्तुतर्त्त्विग्विनियोग ऋधान्त्यो मन्त्रे यज्ञकारणे।
'सर्वैर्ब्रह्मा'-निरुक्तेऽपि चतुर्भिरिति निर्णय. ॥
ऋग्रूपमन्त्रबाहुल्यादृग्वेदः स्यात् तथेतरौ।
शान्तिपुष्ट्यादिकब्रह्मवर्गप्रणवविद्यया।
ऋचाञ्च यजुषा तुर्यो बाहुल्येन विधायकः ॥
एकविंशत्यध्वयुक्त ऋग्वेद ऋषयो विदुः।
सहस्राध्वा सामवेदो यजुरेकशताध्वकम्।
नवाध्वाथर्वणोऽन्ये तु प्राहु. पञ्चदशाध्वकम् ॥"-इति ।

एतेन खलु सर्वेषा मेव वेदाना सर्वविधस्वरूपाण्युक्तान्येव समासतस्तेन धीमतेत्यत्रास्माकं नैव किञ्चिदतव्य मस्त्यवशिष्टम्; विशेषतस्तु जिज्ञासायां वेदविषयनिर्णयार्थैवोत्पन्नं सुमहद्दर्शन-

शास्त्रं जैमिन्यादिभिर्महाभाग्भिः प्रपञ्चितं मीमांसासूत्रादिक मेव सुधीभिर्द्रष्टव्य मित्यलं चर्वितचर्वणेन वेदस्य पौरुषेयत्वा-पौरुषेयत्वात्मकविचारेणेति ॥

परन्त्वस्यवैतदालोच्यम् ,— आपस्तम्बादिमतानुगा सायणा-चार्यादयस्तु मन्त्राणां ब्राह्मणानाञ्च वेदत्वं चिरात् सिद्ध मिति मन्यन्ते। केचित्त्वपरतना ब्राह्मणग्रन्थेषु बहुत्र 'य एव वेद'-इति दर्शनादेव प्रथमं तावत् ब्राह्मणग्रन्थाना मेव वेदाख्या प्रच-लिता, अत कालक्रमेण मन्त्रेष्वपि सा उपचरितेत्याहुः। वयन्तु तदुभरोरेव विपरीतं ब्रूमः ,— पुरासीत विद्यापरपर्याय एवाय वेदशब्द , तथा यतश्च सर्वासा मेव विद्याना निधानानीमे मन्त्रा प्रदृष्टा , यतो मन्त्रकाले एव विविधाना मन्त्राणा वाचक सम्पन्नो वेद इति, ततो ब्राह्मणकाले ब्राह्मणेष्वपि ग्रन्थेषु मन्त्रमात्रपर एव व्यवहृतो वेदशब्द , पश्चात् सूत्रकाले तु मन्त्रब्राह्मणयोरुभयोरेव विद्यानिधानत्वेनादरातिशयस्थितेरुभयो रेव वाचक सञ्जातो वेद इति। तदत्र वयं यथा सम्पश्यन्ते ,— ( १ ) मन्त्रब्राह्मणयोर्वेदत्वम् , ( २ ) ब्राह्मणग्रन्थाना मेव मुख्य वेदत्वम् , ( ३ ) सर्वविद्यानिधानाना हि मन्त्राणा मेव वेद इति व्यवहारो मुख्योऽतिपूर्वकालिकश्चेति। यद्येषा कतम पक्षो न्याय्यम् इति पूर्वापरदर्शिभिर्मार्ध्यस्थ्यधिषणावद्भि सूरिभिरेवालोच्यताम्।

श्रूयते हि शुक्लयजुषि मन्त्रे एव वयोपरो वेदशब्द — "वेदेन रूपे व्यपिबत् सुतासुतौ प्रजापति "—इति ( १९. ७८ )। 'प्रजापति 'सुतासुतौ' सुतासुतयो रूपे 'वेदेन' ज्ञानेन, त्रय्या विद्यया वा 'व्यपिबत्' विविच्य पीतवान्। सुत — मास. , असुत — पय परिस्नुत्'—इति च तस्य व्याख्यानं भाषितं महौ

घरेण। तदत्र वेदेनेत्यस्य द्विविधोऽर्थः शक्यो द्रष्टुम्— 'ज्ञानेन तया विद्यया वा'—इति। तत्र द्वितीयोऽर्थ एव युक्ततरोऽस्माकम्; मन्त्रे 'वेदेन'—इत्याद्युदात्तश्रवणात्। अस्ति हि वेदशब्दः उञ्छादिगणे (६. १. १६०. पा० सू० ) पठितः करणव्युत्पाद्यो यौगिको ऽन्तो-दात्तः; अस्ति चापरो वृषादिगणे (६. १. २०३. ) पठितस्त्रय्यां रूढः आद्युदात्तो वेद इति। अत एव ऋक्संहितायां श्रुतस्य "यः समिधा"—इति (८. १९. ५.) मन्त्रस्य व्याख्याने भाषितं सायणाचार्येण 'वेदेन= वेदाध्ययनेन'—इति। तैत्तिरीयसंहितायां मप्येव मस्ति त्रयीपरो वेदशब्द आद्युदात्तः (७. ५. ११. २.)। तथैवाथर्वणिका अप्यसकृदाम्नन्ति संहितायामेव त्रयीपरं वेद-शब्दम्। तथाहि— "यस्मिन् वेदा निहिता विश्वरूपास्तेनौदनेनातितराणि मृत्युम्"—इति (४. ७. ५. ६. ); बहुवत्त एवात्र हि वेदा इत्यस्यार्थे ऋगादय इति। तथा तत्रैवोनविंशकाण्डे ऽपि त्रिशः श्रुतो वेदशब्दस्त्रयीपर एव। तदेवं सर्वसंहितास्वेव त्रयी-परो वेदशब्द श्रूयत एवेति मन्त्राणा मेव वेदत्वं सिद्धम्।

एवं ब्राह्मणेष्वपि सर्वत्र श्रूयत एव वेदस्त्रयीपरः। तथाहि, बह्वृचब्राह्मणे— "त्रयो वेदा अजायन्त ऋग्वेद एवाग्नेरजायत यजु-र्वेदो वायोः सामवेद आदित्यात्; तान् वेदानभ्यतपत्"—इति (ऐ० ब्रा० ५. ५. ६.); एवं मन्यत्राप्यत्र च तत्रैव (६. १५; ७. १८.)। तैत्तिरीयब्राह्मणेऽपि तृतीयकाण्डे (१०. ११. ४.) श्रूयत एव त्रयीपरो वेदशब्दः। तथा छान्दोग्यब्राह्मणे च— "स होवाचर्ग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेद माथर्वणं चतु-र्थम्"—इत्यादि (८. १. २.)। अथर्वब्राह्मणेऽपि— "इमे सर्वे वेदाः"—इत्यादि (गो० ब्रा० १ २. ८.)। तदेवं सर्वब्राह्मणेषु

च त्रयीपरो वेदशब्द. सूयत एवेत्यस्माच सिध्यति मन्त्रमातार्णा वेदत्वम्।

किञ्च सर्वसंहितासु त्रयीपरवेदशब्ददर्शन मेव प्रमाणयति, आसीन्मन्त्रकालेऽपि मन्त्राणा मेव वेद इति व्यपदेशः; तदापि मन्त्रव्याख्यानार्थकानां ब्राह्मणग्रन्थाना मनाविर्भावात्। प्रदर्शित-ब्राह्मणवाक्यानि च तदेव द्रढयन्ति; ऋगादिशब्दानां मन्त्रेष्वेव मुख्यशक्ते'। अत एवोपपद्यन्ते तत्र गोपथे— "इमे सर्वे वेदाः" -इत्यत्र विशेषणानि "सब्राह्मणाः"-प्रभृतीनि। निरुक्ते ये चार्थज्ञ-प्रशंसनाय शाखान्तरीयमन्त्रा उद्धृता यास्केन, तत्र च सूयते त्रयीपर एवाद्युदात्तो वेदशब्द'— "अधीत्य वेदम्"-इति (१. ६. २.)। तदेतस्माच विज्ञायते मन्त्रकाले मन्त्रार्थक एव वेदशब्दः प्रसिद्ध आसीदिति। यास्कोऽप्याह— "कर्मसम्पत्तिर्मन्त्रो वेदे"-इति (१. १. २.)। स हि कर्मसम्पत्तिर्मन्त्रः क्वास्ति ब्राह्मणेषु संहितासु वा? संहितास्वेवेति विदितोऽपि स्फुटं व्यज्यते संहितार्थ एव वेदशब्दोऽभिमत खलु निरुक्तकारस्यैतस्य यास्कस्यापीति॥

एव मपि ज्ञानार्थस्य विदधातो रूपं वेद इति विदीव तस्य-यौगिकार्थः फलति। अनन्ताश्च विद्या इह जगति सन्ति चिरस्थाय; तत एव वेदस्य सनातनत्व मनन्तत्वञ्च मन्यन्ते सर्व आर्याः। आदिसृष्टिकालेऽत्र भारते ये ऋषयः प्रादुर्बभूवुः, प्रायस्तेव ते विविधविद्याविभूषणाः साक्षात्कृतधर्म्माणः, अत एव तैर्दृष्टा मन्त्रास्तत्कालादेवोच्यन्ते वेदा इति। तथापि मन्त्रेष्वेव वेदशब्दस्य मुख्या शक्तिः। तथा ह्यामनन्ति—

"भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्य मुवास। तए ह जीर्णिए स्थविरए शयानम्, इन्द्र उपव्रज्योवाच। भरद्वाज। यत्ते चतुर्थ

मायुर्दद्याम्, किं मेतेन कुर्य्या इति। ब्रह्मचर्य्य मेवैतेन चरेय मिति होवाच। तं ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार; तेषाꣳ हैकैकस्मान्मुष्टि माददे। स होवाच भरद्वाजेत्यामन्त्र्य। वेदा वा एते, अनन्ता वै वेदाः, एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः; अथ त इतरदननूक्त मेव"–इति (तै० ब्रा० ३. १०. ११. ३, ४.)।

छान्दोग्येऽपि श्रूयते वेदपर्य्यायो विद्याशब्दः। तथाहि—"प्रजापतिर्लोकानभ्यतपत् ०—० अग्नेर्ऋचो वायोर्यजूंषि सामान्यादित्यात्। स एतां त्रयीं विद्या मभ्यतपत्"–इत्यादि (१. १७. १—१०.)। एवं तत्रैवान्यत्रान्यत्रापि (४. २१. १; २३. २.)।

अतः सूक्त मस्माभिः 'पुरासीत् विद्यापरपर्याय एवायं वेदशब्दः'–इत्यादि (१३६ पृ०); तथा सम्भाव्यते चैष पक्षो युक्ततम एवोपन्यस्तो मन्त्रेष्वेव वेदशब्दस्य मुख्या वृत्तिरिति ॥

आपस्तम्बादिसूत्रप्रणयनकाले तु ब्राह्मणग्रन्थाना मपि वेदत्वं व्यपदिष्टम्; ततः प्रभृति सिद्ध मेव "मन्त्रब्राह्मणयोर्वेदनामधेयम्"–इति। अत एव मनुसंहितादावपि "वेदः कृत्स्नोऽधिगन्तव्यः (२. १६५.)"–इत्यादिषु वचनेषूभयोरेव ग्रहण मवगम्यते। अत एवैषा सङ्गच्छते (म० सं० २. १५.)—

"उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः"–इति।

"उदिते जुहोति"–इत्यादिविषयस्तु ऐतरेयादिब्राह्मणेष्वेव विश्रुताः। तथाहि—"अथ ह स्माह वातावत उवाच जातूकर्ण्यो वक्ता को वा इदं वेदेभ्यो यद्येतदग्निहोत्र मुभयेद्युरहयतान्येद्युर्नाव तद्देतर्हि इत्यतु इत्येतद् हैवोवाच कुमारी गन्धर्व्वगृहीता वक्ता को

च त्रयीपरो वेदशब्द श्रूयत एवेत्यस्माच्च सिध्यति मन्त्रमात्राणां वेदत्वम्।

किञ्च सर्वसंहितासु त्रयीपरवेदशब्ददर्शन मेव प्रमाणयति, आसीन्मन्त्रकालेऽपि मन्त्राणा मेव वेद इति व्यपदेश, तदापि मन्त्रव्याख्यानार्थकाना ब्राह्मणग्रन्थाना मनाविर्भावात्। प्रदर्शित ब्राह्मणवाक्यानि च तदेव द्रढयन्ति, ऋगादिशब्दाना मन्त्रेष्वेव मुख्यशक्ते। अत एवोपपद्यन्ते तत्र गोपथे— "इमे सर्वे वेदा" -इत्यत्र विशेषणानि "सब्राह्मणा"-प्रभृतीनि। निरुक्ते ये चार्थस्य प्रदर्शनाय शाखान्तरीयमन्त्रा उद्धृता यास्केन, तत्र च श्रूयते त्रयीपर एवाद्युदात्तो वेदशब्द — "अधीत्य वेदम्"-इति (१ १ २)। तदेतस्माच्च विज्ञायते मन्त्रकाले मन्त्रार्थक एव वेदशब्द प्रसिद्ध आसीदिति। यास्को ऽप्याह— "कर्मसम्पत्तिर्मन्त्रो वेदे"- इति (१ १ २)। न हि कर्मसम्पत्तिर्मन्त्र क्वाप्ति ब्राह्मणेषु संहितासु वा ? संहितास्वेवेति चेदितोऽपि स्फुट मवगम्यते संहितार्थ एव वेदशब्दो ऽभिमत खलु निरुक्तकारस्यैतस्य यास्कस्यापीति।

सायुर्दद्याम्, किं मेतेन कुर्य्या इति। ब्रह्मचर्य्यमेवैतेन चरेय मिति होवाच। तं ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार; तेषां हैकैकस्मान्मुष्टि माददे। स होवाच भरद्वाजेत्यामन्त्र्य। वेदा वा एते, अनन्ता वै वेदाः, एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः; अथ त इतरदननूक्त मेव"-इति (तै० ब्रा० ३, १०, ११, ३, ४,)।

छान्दोग्येऽपि श्रूयते वेदपर्य्यायो विद्याशब्दः। तथाहि— "प्रजापतिर्लोकानभ्यतपत् ०—० अग्नेर्ऋचो वायोर्यजूंषि सामान्यादित्यात्। स एतां त्रयीं विद्या मभ्यतपत्"-इत्यादि (१. १७. १—१०.)। एवं तत्रैवान्यत्रान्यत्रापि (४. २१. १; २२. २.)।

अतः सुष्ठूक्त मस्माभिः 'पुरासीत् विद्यापरपर्य्याय एवायं वेदशब्दः'-इत्यादि (१२६ पृ०); तथा सम्भाव्यते चैव पश्चो युक्ततर एवोपन्यस्तो मन्त्रेष्वेव वेदशब्दस्य मुख्या वृत्तिरिति ॥

वा इद पितृभ्यो यद्वैतदग्निहोत्र मुभयेद्युरहूयताऽन्येद्युर्वाव तदे तर्हि ह्वयत इत्येतद्वा अग्निहोत्र मन्येद्युर्हूयते, तदस्तमिते साय जुहोत्यनुदिते प्रातरथैतदग्निहोत्र मुभयेद्युर्हूयते, यदस्तमिते साय जुहोत्युदिते प्रातस्तस्मादुदिते होतव्यम्। ०—०। उद्यन् खलु वा आदित्य आहवनीयेन रश्मीन्त्सन्दधाति। स योऽनुदिते जुहोति, यथा कुमाराय वा वत्साय वाऽजाताय स्तन प्रतिदध्यात तादृक्, तद्, अथ य उदिते जुहोति, यथा कुमाराय वा वत्साय वा जाताय स्तन प्रतिदध्यात् तादृक् ०—०। तदेषाऽभियज्ञगाथा गीयते –

प्रात प्रातरनृत ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्।
दिवाकीर्त्य मदिवा कीर्त्तयन्त सूर्यो ज्योतिर्न तदा ज्योतिरेषा मिति'

–इति (ऐ०ब्रा० ५ ५, ४, ५, ६)। तथा "श्रुतिस्तु वेदो विज्ञेय (म० स०२ १०)'–इत्यत्र च श्रुतिलक्षणे मन्त्राणा ब्राह्मणानाञ्च ग्रहण मिष्ट तस्येत्यपि प्रतीयत एव। आयति च तथा श्रुतिरिति वेदस्यैव नामान्तर मिति॥

[श्रुति] श्रवणात् श्रुतिरित्याख्या। 'श्रुयजीषिस्तुभ्य करणे'–इति (पा० ३ ३ ९५ वा० २) निष्पादित श्रुतिशब्दस्तु श्रवणेन्द्रियपर, इह तु 'स्त्रिया क्तिन्'–इति (पा० ३ ३. ९४) भावार्थ एव क्तिनिष्ट। एष हि वेदयिर मेव श्रूयते गुरुपरम्परानुसारेण,— केनापि कदापि एकस्यापि मन्त्रस्य प्रणयनकालनिर्णये कथ मपि न समर्थं। अत एव वाय्वादिवद् अनादिरपौरुषेयेति स्मृयत एवाय मिति दृष्टा।

स एष श्रुतिशब्दो वेदपरो व्यवहृतो नासीत् मन्त्रकाले, मन्त्रसंहितासु क्वचिदपि वेदार्थश्रुतिशब्दस्य दर्शनाभावात्। अपि तु ऐतरेयादिब्राह्मणप्रचारात् पुरैव सूत्रकाले व्यवहृतो भावसाधन

प्रवादपरः । तथा ऐतरेयकम्— "तस्मादपत्नीको ऽप्यग्निहोत्र माहरेत् । तदेषाभियज्ञगाथा गीयते—

'यजेत् सौत्रामन्या सपत्नीको ऽप्यसोमप ।

मातापितृभ्या मनृणाद्यजेति वचनाच्छ्रुतिः'–इति ।

तस्मात् सौम्यं याजयेत् (७. १.८.)"–इति । ता मिमा मवलम्ब्ये-वाख्यातं ब्राह्मणम् "तदाहुर्वाचाऽपत्नीकोऽग्निहोत्रं •—• स्वर्गाल्लो-कान् जयन्तीति"–इति (७, १. १०.)। तदेवमादीना दर्शनादिद मपि व्यक्तम्— आदौ मन्त्रकालः, ततस्तेषा यज्ञादिषु व्यवहार कालः, ततस्तादृशप्रवादश्रुतिकालः, ततो गाथाकालः, ततश्च ब्राह्मणकाल.; गाथामूलान्येव हि बहूनि ब्राह्मणवचनानि इति ॥

स एषः प्रवादार्थः श्रुतिशब्दो ब्राह्मणकालादुत्तरं मन्त्रब्राह्म-णयोरुभयोरपि वाचक. सम्पन्न :। तत एवैतच्छितत्रयोदशाध्यायान्ते दृश्यते— "सेयं विद्या श्रुतिमतिबुद्धि"–इति (१३. १. १३.)। तथा स्मर्यते च मन्वादिभिः—

"श्रुतिस्मृत्युदितं धर्म मनुतिष्ठन् हि मानव."–इति (२, ८.),

"उदितेऽनुदिते चैव समयाध्युषिते तथा ।

सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुति. (२. १५.)"–इत्यादि च।

वेदस्यानुश्रवनामापि श्रुतिमूलक मेव । तथाच्युक्तम्— "दृष्ट-वदानुश्रविक:"–इतीश्वरकृष्णीयसाङ्ख्यकारिकाव्याख्यानावसरे वाच-स्पतिना— "गुरुमुखादनुश्रूयते इत्यनुश्रवो वेद."–इति ॥

लौकिकप्रवादवाख्याना मपि श्रुतिरितिव्यवहारो दृश्यते बहुल । तदेवं यस्य कस्यचिद् वचनस्य प्रचारकालस्यादिर्न निर्णीयते,— कदा केन कथित मिद मिति, अपि च प्रामाणिकतया गुरुपरम्प-रयोपदेशो लभ्यते, तत् किल वैदिकं वा लौकिकं वा वचनं श्रुति-

रित्युच्यते। कल्पयन्ति चानुमितश्रुतीः मन्वादिभिर्वेदविद्भिर्विहिताना विधीना मूलानि स्मार्त्तग्रन्थेषु; वेदार्थस्मरणमूलकत्वादेव च तेषा स्मृतित्वाख्यानात्। तदेवं यस्य च प्रामाणिकस्मृतिवचनस्य मूलं वैदिकवचन साक्षान्नोपलभ्यते, तस्य मूलं तादृशवैदिकवचनं कल्पनीयं भवति, तत् कल्पितवचन मपि श्रुतिरिति व्यवहृत रघुनन्दनादिभिः। परे तु श्रुतिकल्पनारीतिस्त्वयुक्तैवेत्याहु., मीमासाधिकरणमालायाम् 'औदुम्बरीं स्पृष्टोद्गायेत्'–इति विधान मनुद्दत्य 'औदुम्बरी सर्वा वेष्टयितव्या'–इति विधेर्भ्रममूलकत्वेनाप्रामाण्याख्यापनात्। तदेवं मन्त्रभागाना श्रुतित्व तु सर्ववादिसम्मतम्; ब्राह्मणभागाना श्रुतित्व च मन्वादिभिः स्वीकृत मेव, प्रवादवाक्याना लौकिकानाञ्च श्रुतित्व व्यावहारिकं दुर्वलम्; कल्पितश्रुतयोऽपि सन्ति रघुनन्दनादीना मिति श्रुतिचातुर्विध्यं सुस्थिर मिति॥

[आम्नायः] "श्रुतिस्त्री वेद आम्नायस्त्रयी"–इति। नामलिङ्गानुशासनात् श्रुति, वेद, आम्नाय, त्रयी, इत्येतान्येकार्थान्येव पदानि। आम्नायसमाम्नायौ चाभिन्नार्थौ। अतएव "इति माहेश्वराणि सूत्राणि"–इति भट्टोजिदीक्षितप्रथमवचनव्याख्यानावसरे प्रोक्तं नागेशेन लघुशब्देन्दुशेखरे— "आम्नायसमाम्नायशब्दौ वेदे एव रूढौ"–इति। वेदशब्देन तु आ सूत्रकालात् मन्त्रा ब्राह्मणवचनानि च गृह्यन्त इत्युक्त मेवानुपदम्। अत एव भगवता जैमिनिना कृते इदानीं प्रचलिते मीमासादर्शने च बहुत्रैव मन्त्रब्राह्मणार्थपरो ह्याम्नायशब्दो दृश्यते। तथाहि — "आम्नायस्य क्रियार्थत्वादानर्थक्य मतदर्थानाम् (१. २. १.)" –'उक्त समाम्नायैदमर्थ्यं (१. ४. १.)"–इत्येवमादयो द्रष्टव्या.।

"स्वाद्याम्नायधर्मित्वाच्छन्दसि नियमः ( १. ४. )"–इत्येतस्य वाजसनेयिप्रातिशाख्यसूत्रस्य व्याख्यानावसरे च "आम्नायो वेदः"–इत्यारभ्य 'ब्राह्मणं विध्यर्थवादरूपम्, मन्त्रस्तु कर्माङ्गभूतद्रव्य-देवताप्रकाशकः'–इत्याद्युक्तं तद्भाष्यकृदुव्वटेनापि। तथा स्पष्टमेवोक्त मथर्ववेदीये कौशिकसूत्रे— "आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि च"–इति।

यास्कीयेऽत्र निरुक्तेऽप्युभयोरेवाम्नायत्वं स्वीकार्यं गम्यते। तथाहि—"अथाप्यनुपपन्नार्था भवन्ति—'ओषधे त्रायस्वैनम्', 'स्वधिते मैनं हिंसीः'–इत्याह ( य० वा० सं०४. १ ; ६. १५. ) हिंसन्"–इत्याशङ्कय (१. ५. १.), समाहितं तत्तत उत्तरम् "यथो एतदनुपपन्नार्था भवन्तीत्याम्नायवचनादहिंसा प्रतीयेत"–इति (१. ५. २.)। तदत्र मन्त्राणा माम्नायत्वेन ग्रहणं दृष्टम्। अन्यत्र तु "एषां लोकानां रोहेण सवनानां रोह आम्नातः (७. ६. ४.)"–इत्यत्र, इत उत्तर मेतस्मिन्नन्ते "यथो एतद्रोहात्प्रत्यवरोहश्चिकीर्षित इति, आम्नायवचनादेतद् भवति (७. ७. १.)"–इत्यत्र च ब्राह्मणाना माम्नायत्वेन ग्रहणं दृष्टम्। एवञ्च सुव्यक्तं निरुक्तकृन्नयेऽप्युभयोरेव मन्त्रब्राह्मणयोराम्नायत्व मिति।

मन्त्राणा माम्नायत्वं मत्वैव ततः सङ्गृहीतस्य निघण्टोर्य समाम्नायत्व मुक्त मादौ तेनैव निरुक्तकृता— "समाम्नायः समाम्नातः, स व्याख्यातव्यः"–इति (१. १. १.)। अत एव तद्वृत्तिकृता दुर्गाचार्येणोक्तं भूमिकायाम्— "छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाता, सैषा छन्दोऽवयवभूता छन्दोधर्मिण्येव यथायथापठिता गौर्गोधर्मा इति"–इति॥

वेदाङ्गाना मप्याम्नायत्वं निरुक्तकृत्सम्मत मेव; तत एवोक्तम्

— "समाम्नासिषुर्वेदञ्च वेदाङ्गानि च"–इति ( १. ६. ५. )। तदत्र मन्त्राणाम्, मन्त्रेभ्यः सङ्गृहीतानां नैघण्टुकपदानाम्, वेदानाम् ( मन्त्रातिरिक्तानाम् )= ब्राह्मणानाम्, वेदाङ्गानाञ्चा-म्नायत्वं मुररीकृतं यास्केनेति स्फुटम्।

तथा लघुशब्देन्दुशेखरेऽपि प्रत्याहारव्याख्यानावसरे "ननु चतु-र्दशसूत्रा सचरसमाम्नाय इति व्यवहारानुपपत्तिः ?"–इत्यादिकं विचार मवतार्य पाणिनिव्याकरणादीनां वेदाङ्गाना मप्याम्नायत्वं प्रमाणीकृतं नागेशेनेति।

"तस्येदम्"–इति (४. ३. १२०.) पाणिनीयसूत्रे यदुक्तं वार्त्ति-कम् — "चरणाद्धर्माम्नाययोः (२)"–इति, तदनुसत्यैव "छन्दो-गौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः"–इति (पा० ४. ३. १२९.) सूत्रतो नाट्यस्याप्याम्नायत्व मुररीकृतं दीक्षितेन। तथा ह्युक्तम्— "चरणाद् धर्माम्नाययोरित्युक्तं तत्साहचर्यान्नटशब्दादपि तयोरेव" –इति। एवञ्च शिलालिप्रभृतिकृतानां प्राचीनतमानां नटसूत्रा-दीना मप्याम्नायत्वं दीक्षितादिसम्मत मिति॥

वृद्धास्त्वाहुः—यतो हि 'म्ना अभ्यासे'–इति धातुज आम्नायपदं निष्पन्नम्, अतो यः कश्चन ग्रन्थोऽभ्यस्त उक्तः, स एवाम्नायः। एक-स्यैव पुन पुनरुच्चारणादिना स्मृत्यनुगतकारण मेवाभ्यसनम्। युगा-वसानकाले प्रायः सर्वेस्यैव प्राण्यादिवस्तुसमूहेषु ये केचिच्छिष्टा अवशिष्टा बभूवुः, तैः स्वस्वस्मृत्यनुरूपः साङ्गो वेदः प्रोक्तः स्वस्वान्तेवासिभ्यः, तैश्च बहुभ्य इत्येवं पुनर्विस्तृतः सः; पुनर्यु-गान्ते चोपगते पुनः सर्व एव ते ऽन्तर्हिताः, पुनर्नवयुगारम्भे न्यायवशिष्टैः शिष्टैः स्वस्वस्मृत्यनुरूपत एव प्रोक्तः स्वस्वान्तेवासिभ्यः। एवं मेवाभ्यासः सम्पद्यते साङ्गस्य वेदस्य सदैवेति स साङ्गो वेदः

सर्व एव समाम्नाय इत्याख्यायते। अत एवं ज्योतिषविषये सूर्य-सिद्धान्ते ज्योतिषोपनिषदध्यायेऽप्युक्त मेव मेवं ( १९ श्लो० )—

"युगे-युगे समुच्छिन्ना रचनेयं विवस्वतः।
प्रसादात् कस्यचिद्भूयः प्रादुर्भवति कामतः"–इति।

तत्र चायं विशेष उपलभ्यते,— मन्त्राणा मेव यथावत् स्वरवर्णमात्रादियुतानां यथाश्रुताना मभ्यासः क्रियते; स एव मन्त्रभागो दृष्ट इत्युच्यते। तत्रापि स्मृतिच्युत्यादिहेतुभिः पाठ-न्यूनाधिक्यं पाठान्तरत्वं क्रमान्यत्वञ्चानिवार्य मिति शाखान्तरत्वं सम्पद्यते। ब्राह्मणानान्तु तदर्थाद्यभिधानोपयोगित्वात्तस्यान्यथा-प्युपपद्येतेति न तत्र यथावत्पाठाभ्यासः स्वीकृतः प्रत्युत तदर्था-भ्यास एव कृतोऽपरपरप्रवचनेनेति; स एव ब्राह्मणभागः प्रोक्त इत्युच्यते। एवं वेदाङ्गग्रन्थाना मपि मूलतत्त्वाना मभ्यसनीयत्वे-ऽपि तत्सम्प्रयोगस्थानाना मस्ति देशकालाद्यपेक्षेति देशकालाद्यनु-सारेणैव विधान मुचित मिति प्रतिनवयुगे नवकल्पनैव कृता; स एव वेदाङ्गभागः कल्प इति चोच्यते। तदेवं सर्व एव वेदाङ्गाः तत्त्वतोऽभ्यस्ता अपि ग्रन्थतः प्रतियुगे नूतनाः कल्प्यन्ते–इति कल्पनाभाजः स्युः, परं शिक्षाप्रभृतीनां पञ्चानां कल्पनामतो व्यवहारो न दृश्यतेऽपि तु यागादिविधायकानां पैङ्गीप्रभृतीना मेव ग्रन्थाना श्रौतसूत्राणां कल्प इति प्रसिद्धिः; व्यवहार एवात्र निदा-नम्। तथाच वेदाङ्गग्रन्थेषु तेषा मेव श्रौतसूत्रग्रन्थानां प्राथम्य मनुमीयते; यथा हि शैशिरीयाणां पञ्चाना मेव शाकलत्वेऽपि आद्याया एव शाखायाः शाकल इति प्रसिद्धिः, यथा च सर्वेषां सामवेदीयार्चिकानां छन्दस्त्वेऽपि पूर्वभागस्यैव छन्द इति।

अत एव ब्राह्मणग्रन्थेष्वपि निरुक्तादिनामदर्शनं न विस्मयकरं

भवत्यार्याणाम्। नाट्यादिग्रन्थोऽपि नासीत् पुराकल्पे इति को वदितु क्षमते? परं मन्त्रातिरिक्तानां केषामपि ग्रन्थानां न हि यथावदक्षरशोऽभ्यसन समयोजन मित्यतिप्राचीननटसूत्रादीनां क्षतकालेऽप्याम्नायत्व मव्याहत मेव। तदेव नटशब्देनापि कात्यायनीक्तधर्माम्नानयोरभिसम्बन्धे को दोषः पाणिनिवृत्तिक्तत खलु भट्टोजिदीक्षितस्य।

परं मत चेद मवश्य माय्यम्, यद् भवतु नाम मन्त्रब्राह्मणात्मकस्य वेदस्य, मन्त्रीकृतपदसङ्घात्मकस्य निघण्टो, पड्विभागीकृतस्य वेदाङ्गस्य, अन्येषाञ्च नटसूत्रादीनां सर्वेषा मेव प्राचीनतमाना मार्थशास्त्राणा माम्नायत्वम्, परं मन्त्रभागस्यैवाम्नायत्व मुख्यम्, प्रतिकल्प मन्त्राणा मेवाचरण आम्नानात्, तथैव नैघण्टुकपदानाम्, तदनु ब्राह्मणभागस्य, तस्यापि तथा व्यवहारात्, तदनु वेदाङ्गानाम् यास्कादिभि स्वीकारात्, नटशास्त्रादीनान्तु तथात्वे प्रामाण्य विप्रकृष्टतर इतीति॥

[त्रयी] अमरसिंहोक्तायु वेदनामसु त्रयीत्वेवावशिष्ट मालोचयितुम, तदप्यालोच्यते यथाज्ञानम्।— रचनायास्त्रैविध्य मेव मन्त्राणां त्रयीत्वे बीजम्। अस्ति हि काचिद्रचना पद्य नाम, सैव पुरा ऋगिति श्रुता, अस्ति काचिद्रचना गद्य नाम, सैव पुरा यजुरिति श्रुता, अस्ति काचिद्रचना गान नाम, सैव पुरा सामेति श्रुता। यतो हि गद्यपद्यगानातिरिक्तो नास्ति रचनाप्रकार, अत एव ऋक्संहितासु, यजुःसंहितासु, सामसंहितासु, अथर्वसंहितासु वा अस्यत्र सामभ्योऽन्यो नैव दृश्यते कोऽपि वेदमन्त्र। पद्यगद्यगानातिरिक्ता हि रचना कदापि नासीत्, इदानी मपि नावलोक्यते लोके, तत् कथमाम ऋग्यजु

सामलक्षणातिरिक्तापि मन्त्ररचना भवेद् वैदिकीति। तदाह भगवान् जैमिनिः— "तेषा मृग् यत्रार्थवशेन पादव्यवस्था। गीतिषु सामाख्या। शेषे यजु शब्दः"-इति ( मी० द० २, १, ३२, ३३, ३४.)। तदेतन्न्यायविस्तरे सटीकतश्च माधवेन, द्रष्टव्यं तत् तत्रैव। एवञ्च त्रयी नाम त्रिविधरचनामयी आप्तवाणी; सैव वेदः, सैव आम्नायः, सैव श्रुतिरित्यादि।

यद्यपि मन्त्राणा मेव रचनानियमाधीन मेतत्त्रयीनाम, अतो मन्त्रभागस्यैव त्रयीत्व मङ्गीकर्त्तव्यम्, न तु ब्राह्मणभागस्येति वक्तुं युज्यते; "अहिर्बुध्न्यो मन्त्रं मे गोपाय य मृषयस्त्रैविदा विदु"। ऋच' सामानि यजूंषि"-इति (तै० ब्रा० १. २. २६.) श्रुति चात्र साधिकैव। अत्र हि "त्रीन् वेदान् विदन्तीति त्रिविद'। त्रिविदा सम्बन्धिनीऽध्येतारस्त्रैविदाः, ते च यं मन्त्रभागम् ऋगादिरूपेण त्रिविध माहु, तं गोपायेति योजना"-इत्यधिकरणमालाकारो माधवाचार्यवान् तथैव। तथापि मन्त्रभागानुगतब्राह्मणग्रन्थाना मपि त्रयीत्वं व्यावहारिक मिदानीं मन्तव्य मेव; सञ्ज्ञाया. खलु व्यवहाराधीनत्वात्। परं यथोक्त पुरस्तात् मन्त्रभागस्यैव वेदत्वं, श्रुतित्व, समाम्नायत्व च मुख्य, ब्राह्मणभागस्य त्वप्रधान मिति; तयैवात्रापिबोध्य मिति॥

इह केचिदन्यथैवाहुरन्यदेशीयाः। तद्यथा— पुरा किल यदा ऋग्वेदो यजुर्वेद' सामवेद इति त्रय एव वेदा आसन्, नासीदथर्ववेदः; तदैव वेदस्य त्रयीत्याख्या व्यवहृतेति। अत एव प्राचीनतमेष्वेव ग्रन्थेषु त्रयीति वेदस्योल्लेखो दृश्यते; नानतिप्राचीनेषु। यथा च छान्दोग्यब्राह्मणे— "अग्नेर्ऋचो वायोर्यजूंषि सामान्यादित्यात्। स एता त्रयीं विद्या मभ्यतपत् (६. १७.)"

-इत्यादि। एवं मनुसंहितायां अपि— "अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्। दुदोह यज्ञसिद्ध्यर्थं ऋग्यजुःसामलक्षणम्"-इति (१, २३.)। छान्दोग्यादिभ्योऽर्वाचीना ये ग्रन्था., तेषु तु वेदस्य चतुष्ट्व मेव, न त्रयीत्वम्, तदानीं मथर्ववेदोऽपि सम्भूत इत्येव तथात्वे बीजम्। तथा हि बृहदारण्यके— 'अरे ऽस्य महतो भूतस्य निःश्वसित मेतद् यदृग्वेदो यजुर्वेदः सामवेदो ऽथर्वाङ्गिरस (४. ४. १०.)'-इत्यादि। किञ्च महाभारतेऽपि — "एकतश्चतुरो वेदान् भारतञ्चैतदेकतः। पुरा किल सुरैः सर्व्वैः समेत्य तुलया धृतम्॥ चतुर्भ्यः सरहस्येभ्यो वेदेभ्यो ह्यधिकं यदा। तदा प्रभृति लोकेऽस्मिन् महाभारत मुच्यते"-इति। (१प० २६८, २६९ श्लो०)। पुनस्तत्रैव "यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः। न चाख्यान मिदं विद्यात् नैव स स्याद् विचक्षणः"-इति (१ प० २६८ श्लो०)। एवञ्च ऋग्यजुःसाम इत्येव त्रयो वेदा त्रयीशब्दवाच्या, अथर्ववेदस्तु न त्रयीशब्दस्य शक्त्या गृह्यते, अपि तु गौण्येति। तथा च ऋगादयस्त्रय एव प्राचीन तमा, अथर्ववेदस्तु तदपेक्षयार्वाचीनस्तया मेव परिशिष्ट इति।

नैतन्मत मस्मन्मनोहरम्, नापि विचारसहम्, निर्म्मूल त्वात् एकदेशदर्शित्वदोषग्राहग्रस्तत्वाच्च। तथाहि— न क्वापि वेदे लोके वा तादृशमतस्य किञ्चिदपि मूलं क्व मपि दृश्यतेऽनुमातुं वा शक्यते। त्रयीतिनाम्ना वेदस्य व्यवहार एवात्र निदान मिति चेत्, अस्मदुक्तत्रयीनामकारण मेव तद्व्यवहारकतया सदैव जागर्त्ति, सत्स्वपि हि चतुर्ष्वपि वेदेषु रचनात्रयभेदनिबन्धन मेषु त्रयित्व मव्याहत मेव। अत एव, सामवेदे ऋचां यजुषां च पाठो विद्यत एव, एवं यजुर्वेदेऽपि ऋचां पाठो दरीदृश्यते

एव, कथं मन्त्राणां सामादिलक्षणाना मित्याशङ्का सिद्धान्तितं माधवाचार्येण,— "मस्तु सामादिनामतः सम्प्रति प्रसिद्धेषु ग्रन्थेषु यजुरादीनां साङ्कर्यम्, परं न हि तेन सामादिलक्षणानां साङ्कर्यं सम्भवति; ऋगादिलक्षणानि तु सर्वथा अव्याप्त्यतिव्याप्तिदोषशून्यान्येवेति। तथाहि— "नर्क्सामयजुषां लक्ष्म साङ्कर्यादिति शङ्किते। पादश्च गीतिःप्रश्लिष्टपाठ इत्यस्यसङ्करः॥ ०—०। तत्र त्रिविधानां मृक्सामयजुषां व्यवस्थितं लक्षणं नास्ति। कुतः ? साङ्कर्यस्य दुष्परिहरत्वात्। 'अध्यापकप्रसिद्धेषु ऋग्वेदादिषु पठितो मन्त्रः'–इति हि लक्षणं वक्तव्यम्, तच्च सङ्कीर्णम्। 'देवो वः सवितोत्पुनात्वच्छिद्रेण वसोः सूर्यस्य रश्मिभिः' –इत्ययं मन्त्रो यजुर्वेदे सम्प्रतिपन्नो यजुषां मध्ये पठितः; न च तस्य यजुष्ट्वं मस्ति, तद्ब्राह्मणे सावित्रर्चं त्वृक्त्वेन व्यवहृतत्वात्। 'एतत् साम गायन्नास्ते'–इति प्रतिज्ञाय किञ्चित् साम यजुर्वेदेऽङ्गीकृतम् ( तै० उ० ३. १०. ५. १ )। 'अक्षित मसि। अच्युत मसि। प्राणसंशित मसि'–इति त्रीणि यजूंषि सामवेदे समाम्नातानि ( छा० ब्रा० ३. १७. )। तथा गीयमानस्य साम्न आश्रयभूता ऋचः सामवेदे समाम्नायन्ते। तस्मान्नास्ति लक्षण मिति चेत्, न; पादादीनां मसङ्कीर्णलक्षणत्वात्। 'पादवन्थेनार्थेन चोपेता हत्तवद्धा मन्त्राः ऋचः', 'गीतिरूपा मन्त्राः सामानि', 'हत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि'– इत्युक्ते न क्वापि सङ्करः"–इति ( अधि० मा० २. १. ५०. )।

एवञ्च इदानींतनाध्यापकप्रसिद्धितो वेदनामप्रश्नो मुख्यकार एव; वस्तुतो यत्र क्व च ग्रन्थेऽग्रन्थे वा यस्य कस्यचिन्मन्त्रस्य पादबन्धेनार्थेनोपेतत्वं हत्तवद्धत्वञ्च दृश्यते, सोऽयम मेव ऋङ्मन्त्रः;

एवं यत्र क्व च ग्रन्थेऽन्ये वा यस्य कस्यचिन्मन्त्रस्य गीत्यात्मकत्वं दृश्यते, सोऽवश्य मेव साममन्त्रः; तथैव यत्र क्व च ग्रन्थेऽन्ये वा यस्य कस्यचिन्मन्त्रस्य गद्यात्मकत्वं दृश्यते, सोऽवश्यं यजुर्मन्त्र.। एतदेवाह्नीकव्योक्तं बह्वृक्प्रातिशाख्यव्याख्याने दिशुमित्रेण— "तथाचोक्तम्— 'यः कश्चित् पादवान् मन्त्रो युक्तश्चाचरसम्पदा। स्वरयुक्तोऽवसाने च ता ऋचं परिजानते'–इति"–इत्यादि। अत एव चात्रैव निरुक्ते ऋगिति प्रदर्शितं शतपथब्राह्मणीयवचनम् 'ग्रहादङ्गात् सम्भवति'–इति। न ह्येतदद्वचन मस्ति क्व चिदपि ऋक्संहितायाम्, प्रत्युत ग्रस्त्येव शतपथब्राह्मणे (१४. ८. ४. २६.); यदि नाम ऋक्संहितावचनाना मेव ऋक्त्वमाचार्यसम्मतं स्यात्, तर्हि कथ मुखेनात्र भगवता यास्केन "तदेतदृक्श्लोकाभ्या मभ्युक्तम् (३. १ ४)"–इत्यादि। सामवेदीयमन्त्रब्राह्मणेऽपि चैष मन्त्रो विद्यते 'ग्रङ्गादङ्गादिति (१ ५. १७.), तदेव सिद्ध ऋगिति शतपथीयं मन्त्रब्राह्मणीयं च वचन मभिप्रेतम्, श्लोक इति तदानी प्रचलिताया मनुसंहिताया वचनञ्च प्रदर्शितम्। तदेव गैवैषाचार्यप्रवृत्तिर्ज्ञापयति यत्र क्व वेदे स्यात् ऋग्लचणो मन्त्र., भवत्येव ग्रहण तस्य ऋगिति, एवं यजुरयीत्यादि। एवञ्च ग्रन्थाना कालक्रतबहुत्वेऽपि वेदस्य त्रैविध्यं तदवस्थमेव यथा पुरा तथाद्यापि सुस्थित मित्यथर्ववेदोऽपि नासाद् भिन्नः, तस्यापि ऋग्यजुर्मयत्वात्। यपि च यथा सामबहुत्वे सामवेद इति प्रसिद्धेऽपि ग्रन्थे पठिताना मृचा मृक्त्वं यजुषां यजुष्ट्व मुररीकार्य मेव, न च तत्स्वीकारात् तस्य सामवेदत्वं विहन्यते; तथैव ग्रथर्वत्वबहुले ग्रथर्ववेद इति प्रसिद्धेऽपि ग्रन्थे पठिताना मृचा मृक्त्वं यजुषाञ्च यजुष्ट्वं कथं न स्वीका

र्थेम् ? तथा स्वीकृते च तस्य अथर्ववेदत्वं कथं वा विहन्येत ? एवं हि अस्त्यथर्ववेदस्य स्वातन्त्र्यम्, तदीयमन्त्राणां केषाञ्चिदृक्त्वं केषाञ्चिच्च यजुष्ट्वं न केनापि कदापि कथ मपि वारितुं शक्यते। तत् सिद्ध मेतत्,— वेदानां ग्रन्थभेदकृतचतुष्ट्वे ऽपि रचनाभेदकृतत्रयीत्वे न कोऽप्यस्ति संशयः। उक्त मप्येतत् सर्वानुक्रमणीकृता—

"विनियोक्तव्यरूपश्च त्रिविधः सम्प्रदर्श्यते।
ऋग्यजुःसामरूपेण मन्त्रो वेदचतुष्टये।
अहेबुध्नीय मन्त्रं मे गोपायेत्यभिधीयते।
ऋक् पादवद्धा, गीतन्तु साम, गद्यं यजुर्मन्त्रः।
चतुर्ष्वपि हि वेदेषु त्रिधैव विनियुज्यते"–इति।

यच्चोक्तम्,— प्राचीनतमेष्वेव ग्रन्थेषु छान्दोग्यादिषु त्रयीव्यवहारः; तदपेक्षयार्वाचीनेषु बृहदारण्यकादिष्वेवाथर्वनामेति। तदिदं तेषा मेकदेशदर्शित्व मेवावेदयति; सर्वत्र सर्वविधदर्शनात्। तथाहि, तत्रैव छान्दोग्ये— "ऋग्वेदं विजानाति यजुर्वेदं सामवेद माथर्वणञ्चतुर्थम्"–इति (७. ७.) च; तत्रैव मनुसंहिताया मपि — (८. २८.) "अभिचारेषु", "कृत्यासु" –इति। तत्रैव शतपथब्राह्मणेऽपि – "त्रयो वेदा अजायन्त (११. ५. ८.)"–इत्यादि च; तत्रैव महाभारतेऽपि— "अग्निहोत्रं त्रयी विद्या (१. १००. ६६.)", "कच्चिदर्सि त्रयीमूलि (२. ५. ८८.)", "न सामऋग्यजुर्वर्णाः (३. १५०. १३.)"–इत्यादि च। किम्बहुना यत्र क्वच ग्रन्थे वेदस्य त्रित्वं दृश्यते, तत्र सर्वत्रैव चतुष्ट मपि। तदेवं ग्रन्थानां प्राचीनत्वार्वाचीनत्वभेद एव वेदस्य त्रित्वचतुष्ट्ववर्णने बीज मिति मतं सर्वथैवापास्तम्॥

अथर्ववेदस्याधुनिकत्वे पाणिनेरस्मरण मपि मानान्तर मित्यु-

न्त्रिय तेषां तथैव। तथाहि— ऋक्, यजुः, साम— इमानि तु मन्त्रलक्षणानि; ऋग्लक्षणो मन्त्रः, यजुर्लक्षणो मन्त्रः, सामलक्षणो मन्त्र इति; तादृशमन्त्रास्तु सर्वेष्वेव वेदेषु राजन्ते इति तेषां ग्रहणेनैव सर्ववेदानां ग्रहणं सम्पन्नम्; सूत्राणा मेव ग्रहणेनैव यथा सर्वेषा मेव पटाना मिति। अथर्वेति तु न किञ्चिदस्यापि मन्त्रस्य लक्षणम्; अपि तु यथा शाकलादिशाखानां साधारणं नाम ऋग्वेद इति, यथा च कठादिशाखाना साधारणं नाम यजुर्वेद इति, यथा च कौथुमादिशाखानां साधारणं नाम सामवेद इति; तथैव शौनकादिशाखाना साधारणं नाम अथर्ववेद इति। शाकलादिसंहिताग्रन्थानान्तु दृष्टत्वाभावः; अपि तु पाणिनेरतिपूर्वतनीयत्वादार्षत्वाच्च प्रोक्तत्वं पाणिनिसम्मतम्। अत एव यथाप्रयोजनं प्रोक्ताधिकारे एव शाकलादीनामुल्लेखः कृतः पाणिनिना— "शाकलाद्वा (४, ३, १२८.)"-इत्यादिभिः सूत्रैः; तत्राथर्ववेदीयशौनकसंहिताप्रोक्तृत्वस्योल्लेखः— "शौनकादिभ्यश्छन्दसि"-इति (४, ३, १०६.)। तस्मिंश्च सूत्रे छन्दसि इति दर्शनादिदञ्च ज्ञायते यत् प्रोक्तत्वेनैव शाखोऽपि न छान्दसः, एव मप्यस्त्येव कश्चन ग्रन्थः पाणिनेर्विदित इति। स च ग्रन्थः खल्वथर्ववेदीयशिक्षैव; तत एव तत्र प्रत्युदाहृतं नागेशेन "शौनकीया शिक्षा"-इति। अथर्ववेदीयस्यापि ग्रहणं कृत मेव तत्र प्रोक्ताधिकारे "काश्यपकौशिकाभ्यामृषिभ्यां णिनिः"-इति (४, ३, १०३.)। चतुरध्यायिकौशिकसूत्रस्याथर्ववेदीयत्वन्तु सुप्रसिद्ध मेव। किञ्च तत्रैव प्रोक्ताधिकारे यथैव "छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः"-इति (४, ३, १२९.) सूचितम्; तथैव "आथर्वणिकस्येकलोपश्च (४, ३, १३३.)"-

इत्यपि सुचित मेव। तथाच यथैव छन्दोगानां धर्म आम्नायो वा इत्यर्थे साधितं छान्दोग्य मिति, तथैव आथर्वणिकाना धर्म आम्नायो वा इत्यर्थे साधित मेव आथर्वण इति पदम्। "चरणाद्धर्माम्नायोः"-इति (४. ३. १२६.) वार्त्तिकञ्च पाणिनितात्पर्याख्यानपर मेव न तु वाचनिक मित्यपि तत्रैव भाष्ये स्फुटम्। तथाहि— "न चेदानी मन्यदाथर्वणिकानां स्वं भवितु मर्हति, अन्यदतो धर्माद्वा आम्नायाद्वा"-इति। तस्मात् सर्वत्रैव "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्"-इत्येव भाष्यसम्मतम्। तदित्थं मथर्ववेदास्तित्वज्ञानं पाणिनेरासीन्नवेति विचारस्तु दूरे आस्ताम्; प्रत्युत अथर्ववेदीया शौनकसंहिता, अथर्ववेदीयकल्पसूत्रं चतुरध्यायात्मकं कौशिकं नाम, अथर्ववेदीया शिक्षा, अथर्ववेदीयानां पाठप्रकाराद्यात्मको धर्मश्चेति सर्वाण्येतानि आसन्नेव तस्य पाणिने. सुविदितानीति सुव्यक्तम्।

निरुक्तकारो यास्क पाणिनेरपि पूर्वतन,-इतिवादिनां नये तु निरुक्ते,यास्कदेवाथर्ववेदीयनिगमोद्धृतिदर्शनात् तस्य यास्कस्यपूर्वदृष्टत्वनिर्णयेनैव पाणिनिविदितत्वं सुवचम्। तदथर्ववेदस्य पाणिनिविदितत्वविचारस्त्वस्तु पैष्टिकावहः; तस्मात् हि तत्पूर्वजस्य यास्कस्यापि विदित आसीदथर्ववेद इत्युपपद्यते। तद्यथा— "तथापि निगमो भवति— 'य मर्चिति मर्चितयः विपक्ति'— इति। ०—०। तथापि निगमो भवति— 'यथा देवा अंश्रु माप्याययन्ति'-इति"-इति निरु॰ ५. २. ६। तावेतौ द्वावेव निगमौ अथर्ववेदीयावेव (अथ॰ मं॰ ७, ७, ८. ६.)। अन्यत्र च "एकं पादं नोत्खिदतीत्यपि निगमो भवति"-इति (१२. ३. १०.)। एषोऽपि निगमोऽथर्वसंहितास्थ एव सत्यस्तेन; यूयमि हि तत्रैवैका-

दशकाण्डीयद्वितीयानुवाकाद्यसूक्ताद्या ऋक् "एकं पादं नोत्खि-दति सलिलाद्धंस उच्चरन्"–इत्यादि। किञ्चात्र निघण्टुस्थितस्यैक-पादित्यस्यैव एव निगमोऽन्यत्र वैश्वदेव्यादृक्षु तु निपात एवेति निर्णयात् निघण्टुसमाम्नायग्रथणात् पुराप्यासीदथर्ववेद इति यास्कसम्मतमेवेत्युपलभ्यते; निघण्टोर्हि यास्कादिवद्दूपूर्वश्रुतत्वं प्रति-पादितमेव पूर्वम् (२२ २-७१०)। तस्मात् ऋग्यजुस्सामवेदसमकालि-कत्वमेवाथर्ववेदस्येत्यत्र सन्देहलेशोऽप्ययुक्त एवेत्यस्माकमिति॥

वस्तुत एक एव वेद, त्रिविधरचनात्मकस्त्रयीति प्रसिद्धोऽपि ऋक्संहिता, यजुःसंहिता, साममंहिता, अथर्वसंहितेति चतुः-संहिताभिरत्र सङ्कलित'। संहितालक्षणं तु प्रातिशाख्यादौ प्रसिद्धम्— "पदप्रकृतिः संहिता"–इति (ऋ० प्रा० २. १.), "वर्णानामेकप्राणयोग' संहिता"–इति (य०वा०प्रा० १. १५८.), "परः सन्निकर्षः संहिता"–इति (पा० १. ४. १०८.); एव-मादि। तत्र,— ऋग्लक्षणानां (पद्यात्मकानां) मन्त्राणां चतुर्विधा-स्वपि संहितासु विद्यमानत्वेऽपि यत्र ग्रन्थे ऋग्लक्षणमन्त्रभूयिष्ठं, (कुन्तापादीनां) यजुर्लक्षणमन्त्राणामल्पत्वम्, तस्यैव ऋक्संहिता-त्वम्। एव मन्त्रास्त्रिविधास्वपि संहितासु यजुर्लक्षणानां (गद्यात्म-कानां) मन्त्राणां विद्यमानत्वेऽपि यत्र ग्रन्थे यजुषामेवाधिक्यम्, ऋचामपि यजुष्ट्वेनैव पाठो विनियोगश्च, तस्यैव यजुःसंहितात्वम्। अतएवोक्तमध्वर्युब्राह्मणभाष्यभूमिकायां सायणाचार्येणापि— "तत्र यजुषामध्वर्युवेदेऽतिबहुलत्वात् क्वचित् क्वचित् ऋचां सद्भावेऽपि यजुर्वेद इत्येवाख्यायते"–इति। साममंहितायाश्च स्तोमानां गानानाञ्च मूलीभूतानामृचामादिष्टत्वाम्, स्तोमलक्षणानां कति पयानां यजुषां चाश्रयत्वेऽपि प्रधानतया साम्नामेवाधारभूमित्व

स्पष्टम्। तदेवं पद्यगद्यगीतिभेदात् या त्रिविधा रचना भवति; तादृग्रचनात्रैविध्यावलम्बनेनैतानि त्रीणि नामानि सम्पन्नानि, —ऋक्, यजु:, साम इति; ततश्चतुर्थसंहितायाः किं नाम भवितव्य मिति चिन्तायामेव विभागकारिणो नाम्नैवैतस्या नामकरण मुचित मिति सिद्धं तन्नामथर्वसंहितेति॥

अथर्वा नामर्षिरेव हि यज्ञप्रक्रियाया: प्रथमप्रकाशक:, अत: स एव स्वाहोत्रादिकार्यसौकर्यायैव ऋगादिनाम्ना वेदविभाजकश्चेत्यपि नासङ्गतम्। तथा हि— "यज्ञैरथर्वा प्रथम: पथस्तते"-इति (ऋ० सं० १, ६, ४. ५.), "अग्निर्जातो अथर्वणा"-इति (ऋ० सं० ७, ७, ४. ५), "त्वा मग्ने पुष्करादध्यथर्वा निरमन्थत" -इति (ऋ० सं० ४, ५, २१, ३.), "अथर्वाणं पितरं देवबन्धुं मातुर्गर्भं पितुरसुं युवानम्। य इमं यज्ञं मनसा चिकेत प्र णो वोचस्त मिहेह ब्रव:"-इति (अ० सं० ७, १, २.) चैवमादि-मन्त्रलिङ्गात् प्रतीयत एवाथर्वणो यज्ञाविष्कर्तृत्वम्।

"यदृचैव होत्रं क्रियते यजुषाध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवत्यथ केन ब्रह्मत्वं क्रियते इति त्रय्या विद्ययेति ब्रूयात् (ऐ०ब्रा० ५.५. ८.)"-इत्यादिश्रुतेरेव स्फुट मिव प्रतीयते यज्ञकार्य-निर्वाहसौकर्यार्थ मेव च ऋगादिसंहिताविभाग इति। किञ्चात्रैव च "अथ केन ब्रह्मत्वं क्रियते ? त्रय्या विद्यया"-इत्यत्र, समया एव त्रयी विद्या ब्रह्मत्वकरणे साधिकेति स्पष्टम्। न चाथर्वसंहिता-ध्ययन मन्तरा समयायाञ्छ्रया: ज्ञान भवितु मर्हति; होत्राध्वर्यूद्गात्-व्यवहारातिरिक्ताना मप्यृग्यजुर्मन्त्राणा तत्र सद्भावात्। अतएव "ऋचाम्त्व: पोष मास्ते"-इति (ऋ० सं० १०, ७१, ११.) मन्त्रस्य निर्वचनावसरे यास्कोऽप्याह—"ब्रह्मा सर्वविद्य: सर्वं वेदितु मर्हति"

–इति ( १. ३. ३. )। अथर्ववेदी एव ब्रह्मा भवति, स एव च यज्ञं समन्तात् रक्षति। तथाहि— "ब्रह्मैव विद्वान् यद् भृग्वङ्गिरोवित् सम्यगधीयानयरितब्रह्मचर्योऽन्यूनातिरिक्ताङ्गोऽप्रमत्तो यज्ञं रक्षति, तस्य प्रमादाद् यदि वाप्यसान्निध्याद् यथा भिन्ना नौरगाधे महत्युदके सम्प्लवेत्"–इत्यादि., "तस्माद् यजमानो भृग्वङ्गिरोविद मेव तत्र ब्रह्माणं वृणीयात्, स हि यज्ञं तारयतीति ब्राह्मणम्"–इत्यन्तो गोपथग्रन्थो द्रष्टव्य ( गो० ब्रा० २. २. ५. )। छन्दोगा अपि ब्रह्मणो भिषक्त्व मामनन्त्येव— 'भेषजकृतो ह वा एष यज्ञो यत्रैवंविद् ब्रह्मा भवति ( छा० ब्रा० ५. १७. ८. )"–इत्यादि। सामवेदभाष्यावतरणिकादौ सायणाचार्योऽप्यवोचत्—

'त्रय्या मपराधन्तु ब्रह्मा परिहरेत् सदा"–इति।

युक्ततरश्चैतद् तदेव ब्रह्मत्विजि, यदा खलु तस्य चतुर्वेदवित्त्वेन समग्रत्रयीवेत्तृत्व स्यात्, सर्ववेदवेत्तृत्वेव च तस्य विश्वव्यचा इति समुद्र इति चाख्यान सङ्गच्छते। श्रूयते हि— "समुद्रोऽसि विश्वव्यचा"–इति (य० वा० म० ५ ३३.) यजुर्मन्त्र.। स्फुटतरश्चैतदाम्नातं दृश्यते गोपथपूर्वार्द्धे एव। तथाहि— 'तस्मादृग्विद मेव होतारं वृणीष्व, यजुर्विदं मध्वर्युम्, सामविदं मुद्गातारम्, अथर्वाङ्गिरोविद ब्रह्माणम्"–इति, "प्रजापतिर्यज्ञ मकरोत्; स ऋचैव हौत्र मकरोत्, यजुषाध्वर्यवम्, साम्नौद्गात्रम्, अथर्वाङ्गिरोभिः ब्रह्मत्वम्"–इति (गो० ब्रा० १. ६. १. २.) च।

एवञ्च यज्ञीयहौत्रादिकार्यानुसारत एव चतसृ संहिताः सम्पन्नाः; यत्र च यदीय विधानादिक श्रूयते, तदेव तस्य ब्राह्मण मिति च। तदुक्त सर्वानुक्रमणीवृत्तिभूमिकायाम् —

"विनियोक्तव्यरूपो यः स मन्त्र इति चच्यते ।
विधिस्तुतिकरं शेषं ब्राह्मणं कथयन्ति हि"–इति ।

एवं श्लोकस्यैव वेदस्य चतुर्धा विभागः सम्भवस्तत्र कः संशयः । सामवेदीयोद्दोल्लग्रन्थयोः प्रकरणसन्निवेशदर्शनेन च यज्ञकार्यसौकार्यायैवैतस्य वेदस्य चतुर्भेदाः कृता इत्याभाति स्फुटम् ; दृश्यते हि तयोरुभयोरेव ग्रन्थयोः क्रमात् दश-रात्र-संवत्सर-एकाह-अहीन-सत्र-प्रायश्चित्त-क्षुद्रेतिसप्तपर्वात्मकत्वम् । एवमेव अध्वर्युवेदसंहिताभाष्ये प्रथमानुवाकव्याख्यावतरणिकायां यदाह सायणाचार्यः— "अस्मिन् वेदे समाम्नाता दर्शपूर्णमासे-ष्टिमन्त्रास्त्रिविधाः, आध्वर्यवा याजमाना हौत्रकाश्चेति । •—• । एतेषां मध्ये याजमानानां हौत्राणाञ्च चित्रस्थानीयत्वात् भित्ति-स्थानीयाना माध्वर्यवाणा मेवादौ पाठो युज्यते"–इत्यादि, तदपि सङ्गच्छते ; यदि तावतस्त एव संहिता यज्ञकार्यानुक्रमेणैवेव ग्रथिता न स्युस्तर्हि तस्य तयोक्तिरसङ्गतिव मैवोपगच्छेतामेति । अपिवा यजुर्वेदीयमैत्रायणीयशाखायाः परिच्छेदविन्यासानां प्रत्यक्ष-सन्दर्शनेनैवास्तु च्छेदेऽयं संशयस्तत् किं तत्र प्रमाणपारायणेनेति ।

तथाच निष्पन्न मेतत् ;— हौत्रव्यवहार्यमन्त्रास्तु सर्वं एव ऋचः ; तासां ऋचां संकलनेनोपनिबद्धो ग्रन्थ एव सम्यक् ऋक्-संहितेति ; तदर्थविनियोगाद्यभिधायकश्च ग्रन्थ ऋग्ब्राह्मण मिति । तावेव ग्रन्थावधुना ऋग्वेद इति प्रसिद्धौ । अध्वर्युव्यवहार्यमन्त्रास्तु ऋचोऽपि सन्ति परं प्रधानतो यजूंष्येव ; तादृग्यजुःसंकलनेनोप-निबद्धो ग्रन्थ एव सम्यक् यजुःसंहितेति ; तदर्थविनियोगाद्यभि-धायकश्च ग्रन्थो यजुर्ब्राह्मण मिति । तावेव ग्रन्थावधुना यजुर्वेद इति प्रसिद्धौ । उद्गातृव्यवहार्यमन्त्राः खलु ऋचो, यजूंष्यपि, सन्ति, परं

सता मपि अथर्वसंहिताध्ययन मन्तरा न सम्भवेत्, अतो यथा हौत्रे ऋग्वेदः, यथा च आध्वर्यवे यजुर्वेदः, यथैव औद्गात्रे सामवेदः; तथैव ब्रह्मत्वे अथर्ववेदः। किञ्च यथा ऋग्वेदस्य होतृवेद इत्यपरं नाम, यथा च यजुर्वेदस्य आध्वर्युवेद इत्यपरं नाम, यथैव सामवेदस्य उद्गातृवेद इत्यपरं नाम; तथैवाथर्ववेदस्य ब्रह्मवेद इत्यपरं नाम। अपि च ब्रह्मत्वकरणायैवाथर्ववेदाध्ययनं विशेषतः सप्रयोजनम्, तच्च ऋगाद्यध्ययन मृते न सम्भवति, अतो ऽथर्ववेदाध्ययनेच्छुना ऋगवेदाद्यध्ययन मध्यवश्य कर्त्तव्य मित्यतो ये त्वथर्ववेदिनस्त एव प्रायश्चतुर्वेदाध्यायिनो भवन्ति, ततः "चतुर्वेदी"–इत्याख्यायन्ते, भाषाया 'चौबे'–इति च।

तदेवं मूलत एकस्यैव वेदस्य रचनाभेदमूलकत्रयीत्वेऽपि हौत्रादिकार्यसौकर्याय कृतं चतुष्ट्व मप्यवश्य मादरणीयम्। अतएव ह्यस्तेऽत्र निरुक्तेऽपि— "चत्वारि शृङ्गे ति, वेदा वा एत उक्ताः" –इति (१३. १. ७.)। सिद्ध मित्थ मेकं एव वेदो रचनाप्रकारभेदतस्त्रयीशब्दवाच्योऽपि हौत्रादिकार्यानुसारतः संहिताग्रन्थनभेदात् चत्वार इति॥

[ छन्दः ] "छन्दः"–इत्यपि वेदस्यैवान्यतम मतिप्राचीनं नाम।

( १ ) छन्दःशब्देन प्रथमं तावत् पैशप्रबन्धाना मेषा वाय्वादीनां सर्वेषा मेव बोधो भवति स्म। तत एवैव माथर्वणिका आमनन्ति— "त्रीणि च्छन्दांसि कवयो •—• आपो वाता ओषधयः" –इति (१८. १. २. ७.)। तत्र छन्दांसि बन्धनानीत्यर्थे। अत्राप्युपपद्यत एतन्निरुक्तम्— 'छन्दांसि छादनात्'–इति (७. ३. ६.); छादनं नाम बन्धन मेव; बन्धनान्येव होमाः सर्वे विषयाः; तदुक्तं साङ्ख्यतत्त्वकौमुद्याम्— "विषयन्ति विषयिण मनुबध्नन्ति

खेन रूपेण निरूपणीयं कुर्वन्तीति यावत्, विषयाः पृथिव्यादयः सुखादयश्चाक्षरादीनाम् ( प्रश्नो० कौ० )"–इत्यादि।

( २ ) तत उत्तरं सर्वेषा मपि अक्षरसमाम्नायानां तत्त्वतस्तु येन केनापि प्रकाशितानां सर्वेषां शब्दाना मकारादीनां छन्दः-शब्देन व्यपदेशो भवति स्म। तत एवैवं तैत्तिरीया आमनन्ति— "छन्दः पुरुष इति य एवोचाम, अक्षरसमाम्नाय एव; तस्यैतस्याकारो रसः"–इति ( ३. २. ३. ४. )। तत्राप्युपपद्यत एवैतन्निरुक्तम्— 'छन्दांसि छादनात्'–इति; छादनान्येव हि शब्दा अकारादयोऽर्थानाम्।

( ३ ) ततः पश्चादासर्वेषां प्रबन्धेषु ऋगादि विविधेषु मन्त्रेष्वपि व्यवहृतं छन्द इति। तत एवैव मथाथर्वणिका आमनन्त्युच्छिष्टसूक्ते— "अन्याधेय मथो दीक्षा काममश्छन्दसा सह। उत्सन्नयज्ञाः सत्राण्युच्छिष्टेऽधि समाहिता"–इति ( ११. ४. १. ८. )। अन्यत्र च "दिवो नु मां बृहतो अन्तरिक्षादपां स्तोको अभ्यपप्तद्रसेन। स मिन्द्रियेण पयसाह मग्ने छन्दोभिर्यज्ञैः सुकृतां कृतेन"–इति ( ६. १२, ११. १. )। तत्राप्युपपद्यत एतदेव निरुक्तं 'छन्दांसि छादनात्'–इति; छादनान्येव हि ते शब्दा मनोभावादीनाम्। निरुक्तारम्भेऽपि यद्भ् भाषितम्— "छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाताः ( १. १ १. )"–इत्यादि, तत्रापि मन्त्रेभ्य इत्येव तस्यार्थः; तत्र हि निघण्टौ मन्त्रमात्रत एवोद्धृताना पदानां दर्शनात्। अत एव तस्य वृत्तौ 'छन्दासि=मन्त्राः' –इत्येवोक्तं दुर्गाचार्येणापि।

श्रूयते चेदं तैत्तिरीयारण्यके – "यश्छन्दसा मृषभो विश्वरूपः ०—० भूर्भुवः सुवश्छन्द ओम्"–इति ( १०. ६. )। "'यः' प्रणवः

'छन्दसा' वेदानां मध्ये 'ऋषभः' श्रेष्ठः"–इत्यादि च तदर्थं सायणीयम्। तथैव छान्दोग्यब्राह्मणेऽपि— "देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशंस्ते छन्दोभिरच्छादयन्; यदेभिरच्छादयंस्तच्छन्दसां छन्दस्त्वम्"–इति ( १, ४ २, )। शतपथेऽप्येवमेव— "यदेभिरात्मानमाच्छादयन्, देवा मृत्योर्बिभ्यत, तच्छन्दसां छन्दस्त्वम्"–इति ( ८, ५, १, १, )।

निघण्टुमतस्य ( २, ७, १४, ) कान्तिकर्मणोऽपि, धातोर्निष्पन्नं छन्द इत्येके। तथाच सर्व एव वेदाः काम्यमानाश्चास्माकं सर्वकामपूरकाः कमनीया वा। अर्चतिकर्मण एव ( ३, १४, २०, २१, ) भवति छन्द इति च केचित्। तथाच सर्वेषामेव वेदमन्त्राणां मर्त्यामर्त्यैरिति छन्दस्त्वम्; अर्चनीया वा सर्वे वेदा अस्माकमिति। तदेवं पुरा सर्वेषां मन्त्राणां साधारणं नामासीच्छन्द इति सर्वसम्मतम्। अतएव निघण्टौ स्तोत्रनामसु ( ३, १६ १०, ) 'छन्द'–इति पदमाम्नातम्। पाणिनीयसूत्रेषु, कात्यायनीयवार्त्तिकेषु, पतञ्जलेरिष्टिषु, अन्यत्रान्यत्र चैवमादिषु ग्रन्थेषु सर्ववेदपरं छन्दोवचनं सर्वैरशादिसम्मतं सुप्रसिद्धञ्चेत्यतः सर्वं एव वैदिकाश्छन्दसा इत्यभिधीयन्तेऽपीति।

( ४) अस्तीदमपरमपि ज्ञेयम्;— "ऋचः सामानि छन्दांसि पुराणं यजुषा सह। उच्छिष्टाज्जज्ञिरे० (अ० सं० ११, ७, २, ४,)" –इत्याथर्वणे, "तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ( ऋ० स १०, ९, )"– इत्युभि च "छन्दांसि"–इति पदेन सामवेदीयच्छन्दोनामग्रन्थीयमन्त्राणामेव ग्रहणमिष्यते छान्दसैरेकमत्येति। सामवेदीयानां हि संहिता, छन्दो गानमिति द्विधा भिदा। गानं तत्र

गेयारण्योह्योह्येति चतुर्विधम्; छन्दस्तु योनिरुत्तरेति द्विविधम्। तयोश्छन्दोग्रन्थयोर्द्वयोरार्चिक इत्यपि व्यवहारोऽनतिप्राचीनो वैयाकरणतोपकरः। एवं हि यथैव 'तस्मात् सर्वहुतः यज्ञात्' 'ऋचः' ऋग्वेदीयाः, यजुर्वेदीयाः, अथर्ववेदीयाश्च; 'यजुः' यजूंषि यजुर्वेदीयानि सामवेदीयानि अथर्ववेदीयानि च छन्दोगीतिवर्जितानि वाक्यानि; 'सामानि' सामवेदीयानि यजुर्वेदीयानि च 'जज्ञिरे', तथैव 'तस्मात्' तत एव यज्ञात् 'छन्दांसि' सामवेदीयगानमूलीभूताश्छन्दोनामकमन्त्राश्च जज्ञिरे इति तदर्थः। नन्वेवं तेषु छन्दःसु च ऋग्लक्षणं विद्यत एवेति पुनश्छन्दोग्रहणं मानर्थक्यं भजेतेति चेत्, न; तेषां प्राधान्यख्यापनाय ब्राह्मणवसिष्ठन्यायेन पृथग्ग्रहणस्येष्टत्वात्; अन्यथा हि ऋग्वेदत एवोद्धृतास्ते मन्त्रा इति भ्रममूलकमप्राधान्यं स्यात्तेषामिति।

एतेन ऋग्वेदत एव साममूलीभूतास्ता ऋचस्सत्र सङ्गृहीता इति मतं तु दूरीत्सारितम्। पुनर्विशदयिष्याम्येतदिहैवोपरिष्टाच्चान्यनिरुक्तिप्रकरणे। वस्तुतो यज्ञार्थमेव हौत्रम्, यज्ञार्थमेवौद्गात्रम्; तत्र हौत्रकार्यनिर्वाहाय ये मन्त्राश्चिताः, ते हि सर्व एव ऋक्संहितायां दृश्यन्ते; उद्गातृकार्यनिर्वाहाय ये तु मन्त्राश्चिताः, ते सामरूपा ऋग्रूपाश्च; त एव दृश्यन्ते सामसंहितायाम्। तत्र च सामसङ्घातात्मग्रन्थानां सामेत्येव प्रसिद्धिश्चिरन्तनी, इदानीमस्ति गान मित्यपि; ऋक्सङ्घातात्मग्रन्थयोस्तु छन्द इत्येव प्रसिद्धिः पुरातनी, आर्चिक इति तु पाणिनीयानामिति विशेषः। इत्थं खलु परस्तु,तावत्— ऋक्संहितातः सामवेदीयमुद्धरणस्य कोऽवसरः? यदैव यथैव यतएव येनैव ऋक्संहिताया ऋचां सङ्ग्रह सम्पन्नः, तदैव तथैव ततएव तेनैव सामसंहिताया-

च्छन्दसाच सङ्करः; तव्यैतत्व्यापनायैव "छन्दांसि जज्ञिरे तस्मात्"–इति कृतः पृथगुपन्यास इति।

(५) गायत्र्यादीना मपि छन्दस्त्वं व्यवहृतं पुरैव; "छन्दांसि च दधतो अध्वरेषु (ऋ॰ सं॰ ८. १६. ५.)"–इत्यादि मन्त्रेष्वपि तथा प्रतीतेः। अत्रापि छादन मेव बीजम्; भवति हि शब्दाना छादनं गायत्र्यादिभिः। किञ्च यथा खलु पद्यैर्भवति शब्दानां छादनम्, तथैव गद्यैर्गानैरपीति सर्वविधरचनाना मेव छन्दस्त्वं चिरात्प्रतिष्ठितम्; कालभेदाल्लौकिकव्यवहारो विभिन्न इत्यन्यदेतत्। अत एव "छन्दांसि=छादनात्"–इति व्याख्यानावसरे प्रोक्तं दुर्गाचार्येण— "ते (मन्त्राः) छन्दोमयाः; नाच्छन्दसि वागुच्चरति"–इत्यादि। अतएव च गद्यात्मकस्य यजुर्मन्त्रस्यापि छन्दोनिर्णयं कुर्वन्ति वैदिकाः, याजुषीति गायत्र्यादिभेदोऽपि वर्णित. पिङ्गलाचार्येण (३, ३-८सू॰)। एवञ्च निश्छन्दो यजुरिति चापेक्षिकं वचः; कात्यायनेन सर्वेषा मेव हि यजुर्वेदीयमन्त्राणा छन्दोज्ञानस्य विधानात् (अनु॰ १. १.)। माध्यन्दिनीभाष्योपक्रमे महीधरेणाप्युक्तम्— 'तत्र यजुर्वेदमन्त्रेषु कानिचिद् यजूंषि काश्चन ऋचः; तत्र ऋचा नियताक्षरपादावसानाना सावश्यकं छन्दः कात्यायनेनोक्तम्, यजुषा षडुत्तरशताक्षरावसानाना मेकाक्षरादीना पिङ्गलेन दैव्येक मित्यादिनोक्तं छन्दो बोद्धव्यम्'–इति।

(६) यत. प्रभृति 'मन्त्रब्राह्मणयोर्वेदनामधेयम्'–इत्यभूत् सूत्रम्, तत प्रभृत्येव ब्राह्मणग्रन्थाना मपि छन्दःशब्देन च ग्रहणीयता सुतरा सम्पन्ना; एव मपि मन्त्रभागाना मेव मुख्यं छन्दस्त्व मिति तु न ततोऽपि विलय मुपगतम्। अतएव यास्को मन्त्रार्थमात्रे एव छन्दःशब्द प्रायुङ्क्त (१. १. १.), मन्त्रब्राह्मणयो-

तभयोरेवाविशेषेण छन्दःशब्दव्यवहारं कृतवता भगवता पाणिनि-नापि क्वचित् प्रायोजि मन्त्रेष्वेव च छन्द इति। तथाहि— "छन्दोब्राह्मणानि च तद्विषयाणि (४. २. ६६.)"-इत्येवमादीनि समालोच्यानि; न हि तत्र छन्दःशब्दस्योभयपरत्वे ब्राह्मणाना पृथक् ग्रहण मुपपद्यते।

(७) ततो वेदाङ्गाना मपि वेदत्वातिदेशात् छन्दस्त्व मप्य-निवार्य मेव। तदुक्तं भगवता पतञ्जलिना— "छन्दोवत् सूत्राणि भवन्ति"-इति (१ अ० ४ पा० २ आ०), परं तत्रापि ये केचित् शौनकीयशिक्षादयः, तेषा वेदाङ्गत्व मस्तु मास्तु वा छन्दस्त्वं तु नास्त्येव। तथा च दर्शितं प्रत्युदाहरणम्— "शौनकादिभ्यश्छन्दसि" -इति-(४. ३. १०६)-सूत्रीयशेखरे 'छन्दसि किम्? शौनकीया शिक्षा'-इति। अपि वा तत्र सूत्रे मुख्यछन्दस्त्व मेवापेक्षितम्, न च तद्वेदाङ्गाना मित्येव तथोक्तं नागेशेनेति। प्रातिशाख्या-दावपि व्यवहृत एव छन्दःशब्दः पतञ्जलिना— "छन्दःशास्त्रेषु"-इति (१अ० २पा० १आ०); प्रातिशाख्यादिष्वेव तदर्थो गम्यते; अपि वा छन्दसा शास्त्रेषु इत्येव तदर्थः।

(८) नागेशादिभिस्तु भिक्षुसूत्रनटसूत्रयोरपि छन्दस्त्व स्वीकृ-तम्। तथाहि— "तित्तिरि०। इत आरभ्य वक्ष्यमाणाः प्रत्य-यास्तेनैकदिगित्येतत्पर्यन्त छन्दसि वाच्ये इष्यन्ते। शौनकादिभ्य-श्छन्दसीत्यतश्छन्दोग्रहणस्य पूर्वं मपकर्षादुत्तरत्रानुवृत्तेश्च"-इति लघुशब्देन्दुशेखरे द्रष्टव्यम्। तित्तिर्यादिषु तेनैकदिगिति सूत्रतः पूर्वेषा (४. ३. १०२-१११.) दशानां सूत्राणां नवमे एव "भिक्षु-नटसूत्रयोः" ग्रहणं दृश्यते। तदेवं क्रमादिदानीं सार्वत्रिकप्रसिद्धग्रन्थ-मात्रस्यैव छन्दस्त्व मुररीकुर्वन्ति विपश्चित इत्यलम्॥

[ स्वाध्यायः ] स्वाध्याय इति च तस्यैव वेदस्य नामान्तरम् ; "स्वाध्यायोऽध्येतव्यः ( तै० आ० २, १५, ७, )"–इत्यादिश्रुतिषु "यः स्वाध्याय मधीतेऽब्दम् ( २. १०७.)"–इत्यादिस्मृतिषु च तथैव व्यवहारात्। द्विजातिभिः सम्यगध्येय एष इत्येवायं स्वाध्याय इति कथ्यते। अतएवाह भगवान् मनुः ( २. १६८. )—

"योऽनधीत्य द्विजो वेदामन्यत्र कुरुते श्रमम्।
सजीवन्नेव शूद्रत्व माशु गच्छति सान्वयः."–इतीति ॥

[ आगमः ] आगम इति च वेदस्यैव नामान्तरम् ; "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्"–इति पाणिनीयवार्त्तिककार-कात्यायनाद्युक्तेः ; "आगमः,— खल्वपि ब्राह्मणेन षडङ्गो वेदोऽध्येयो ज्ञेयश्च"–इति च तत्र पातञ्जलम्। भट्टकुमारिलेनाप्युक्तं स्वश्लोकवार्त्तिकभूमिकायाम्— "आगमप्रवणश्चाहं नापवाद्यः स्खलन्नपि"–इति। साङ्ख्यकारिकाया मीश्वरकृष्णेनापि यदुक्तम् "तस्मादपि चासिद्धं परोक्ष माप्तागमात् सिद्धम्"–इति, तदप्येतदभिप्रायेणैवेति ॥

[ निगमः ] निगम इति च आगम इति चानर्थान्तरम्। यास्कीयेऽत्र निरुक्ते यावन्ति खलूदाहरणानि दर्शितानि, प्रायस्ताश्वता सर्वेषा मेव निगम इत्युपन्यासो दृश्यते। तथाहि— "तत्र खलु इत्येतस्य निगमा भवन्ति—"–इत्यादि ( २, २, ३, )। "अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते, दमूनाः क्षेत्रसाधा इति ; अथापि नैगमेभ्यो भाषिकाः उष्णं घृत मिति"–इति ( २. १. ३. ) चाह स एव यास्कः। "निगमाः ०—० निगमनात्"–इति ( १, १, १, ) च नैरुक्त मिति ॥

अत्र वेद तत्त्वम्— आदौ तु निगम इति मन्त्रभागस्यैवाभि-

धाम मासीन्न ब्राह्मणभागस्यापि; निरुक्तग्रन्थे सर्वत्रैव मन्त्राणां मन्त्रांशानाञ्चैव निगमत्वेनोपन्यासात्, "अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते, दमूनाः क्षेत्रसाधा इति (२. १. ३.)"–इति तत्प्रदर्शितयोः 'दमूनाः'–'क्षेत्रसाधाः'–इत्यनयोः पदयोः मन्त्रभागे एव विद्यमानत्वाच्च। मन्त्रभागत उद्धृतानां पदानाम्, तदाश्रयग्रन्थानां चास्ति निगम इति व्यवहारः। तथाहि मनुसंहितायाम्— "नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान्"–इति (४. १९.)। अत्र चोक्त मिदं कुल्लूकेन— "तथा पर्य्यायकथनेन वेदार्थावबोधकान् निगमाख्यांश्च ग्रन्थान्"–इति। मेधातिथिना तु व्याख्यातम्— "वैदिका निगमाः = वेदार्थज्ञानहेतवो निगम निरुक्तव्याकरणमीमांसाः"–इति। अत्र निगम इति निघण्टोरेव ग्रहणं तस्याभिप्रेतं गम्यते। ततः कालप्रभावाद् ब्राह्मणग्रन्थेष्वप्युपसङ्क्रान्तं निगमाभिधानम्। अत एव भागवतादौ निगमपदेन मन्त्रब्राह्मणोभयात्मकस्य वेदस्यैव बोधो गम्यते। तथाहि (१. १. ३.)—

"निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम्।
पिबत भागवतं रस मालयं मुहुरहो रसिका भुवि भावुकाः."–इति।

"निगमो वेदः, स एव कल्पतरुः, सर्वपुरुषार्थोपायत्वात्; तस्य फल मिदं भागवतं नाम"–इति तत्र श्रीधरस्वामी, "निगमकल्पतरो सर्वफलोत्पत्तिभुवः शाखोपशाखाभिर्वैकुण्ठ मप्यध्यारूढस्य वेदरूपतरोः"–इति तु तत्र क्रमसन्दर्भः, "निगमो वेदः स एव कल्पतरुः"–इत्यादि च तत्रैव विश्वनाथः।

वस्तुतो मन्त्रभागस्य निगमत्वं चिरादेव व्यवह्रियते, ब्राह्मणभागस्य तथा व्यवहारस्त्वनतिप्राचीनः ऐतरेयादिभिः प्रोक्ताः प्रसिद्धा ब्राह्मणग्रन्थास्तु तन्निगमव्याख्यानादिपरा एवेति। यदा हि

बहुकालपार्थक्यात् मन्त्रार्थानां दुर्बोधतोपपन्ना, तदैव यज्ञानुष्ठानतत्परैः तदानीन्तनैर्ब्राह्मणैः तेषां मन्त्राणां विधानादिव्यवस्थया सह मन्त्रान्तर्गतदुर्बोधपदानामर्था अपि भाषिताः ; अतो ब्राह्मणान्येव आदिवेदभाष्याणीति सुवचम्। तद्यथा श्रूयतेऽयमृङ्मन्त्रः ( ऋ॰म॰ २. ३. २३. ४; ८. ४. १८. ६. )—

"यज्ञेन यज्ञ मयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः"–इति।

तद्विधिव्याख्यानपरश्चैतदैतरेयकं ब्राह्मणम्— "यज्ञेन यज्ञ मयजन्त देवा इत्युत्तमया परिदधाति।०—०। छन्दांसि वै साध्या देवाः, तेऽग्रेऽग्निनाग्नि मयजन्त। 'ते स्वर्गं लोक मायन्' आदित्याश्चैवेहासन्नङ्गिरसश्च (१. ३. ५.)"–इत्यादि। तत एव निरुक्तेऽपि व्याख्यातः ( १२. ४. ७. )।

तथैव योऽयं शुक्लकृष्णयोरुभयोरेव यजुषोरारम्भमन्त्रः—"इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे" –इति। तस्यैतस्य विधानैः सह दुर्गमपदव्याख्यानानि च तानि दृश्यन्ते शुक्लकृष्णयोरुभयोरेव ब्राह्मणयोः। तथाहि शतपथब्राह्मणे— "इष्ये तदाह यदाह इषे त्वेति"–इति, "यो वृष्टादूर्ग् रसो जायते, तस्मै तदाह"–इति, 'यज्ञो वै श्रेष्ठतमं कर्म'– इति च ( १. ७. १. १–५. )। तैत्तिरीये "तृतीयस्या मितो दिवि सोम आसीत्"–इत्यारभ्य "श्रेष्ठतमाय कर्मण इत्याह यज्ञो हि श्रेष्ठतमं कर्म तस्मादेव माह"–इति यावत् ( तै॰ ब्रा॰ ३. २. १. १–४. ) ग्रन्थसन्दर्भो द्रष्टव्य ।

तथा श्रूयन्तो सामवेदे सर्वसामस्वेव ये स्तोभाः, ते खलु व्याख्याता दृश्यन्त एव तद्ब्राह्मणे— "अयं वाव लोको हाउ-

धान मासीन्न ब्राह्मणभागस्यापि; निरुक्तग्रन्थे सर्वत्रैव मन्त्राणां मन्त्रांशानाञ्चैव निगमत्वेनोपन्यासात्, "अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते, दमूनाः क्षेत्रसाधा इति ( २. १. ३. )"-इति तत्प्रदर्शितयोः 'दमूनाः'-'क्षेत्रसाधाः'-इत्यनयोः पदयोः मन्त्रभागे एव विद्यमानत्वाच्च। मन्त्रभागत उद्धृतानां पदानाम्, तदाश्रयग्रन्थानां चास्ति निगम इति व्यवहारः। तथाहि मनु-संहितायाम्—"नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान्"-इति ( ४. १९. )। अत्र चोक्त मिदं कुल्लूकेन—"तथा पर्यायकथनेन वेदार्थावबोधकान् निगमाख्यान् ग्रन्थान्"-इति। मेधातिथिना तु व्याख्यातम्—"वैदिका निगमाः— वेदार्थज्ञानहेतवो निगम निरुक्तव्याकरणमीमांसाः"-इति। अत्र निगम इति निघण्टोरेव ग्रहणं तस्याभिप्रेतं गम्यते। तत. कालप्रभावाद् ब्राह्मणग्रन्थेष्वप्युप-सङ्क्रान्तं निगमाभिधानम्। अत एव भागवतादौ निगमपदेन मन्त्र-ब्राह्मणोभयात्मकस्य वेदस्यैव बोधो गम्यते। तथाहि (१. १. ३.)—

"निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम्।
पिबत भागवतं रस मालयं मुहुरहो रसिका भुवि भावुका."-इति।

"निगमो वेदः, स एव कल्पतरु., सर्वपुरुषार्थोपाय-त्वात्; तस्य फल मिदं भागवतं नाम"-इति तत्र श्रीधर-स्वामी, "निगमकल्पतरो. सर्वफलोत्पत्तिभुव. शाखोपशाखाभि-र्वैकुण्ठ मप्यध्यारूढस्य वेदरूपतरोः"-इति तु तत्र क्रमसन्दर्भः, "निगमो वेद. स एव कल्पतरुः"-इत्यादि च तत्रैव विश्वनाथः।

वस्तुतो मन्त्रभागस्य निगमत्वं चिरादेव व्यवह्रियते, ब्राह्मण-भागस्य तथा व्यवहारस्त्वनतिप्राचीन. ऐतरेयादिभिः प्रोक्ताः प्रसिद्धा ब्राह्मणग्रन्थास्तु तन्निगमव्याख्यानादिपरा एवेति। यदा हि

बहु कालपार्थक्यात् मन्त्रार्थानां दुर्बोधतोपपत्ता, तदैव यज्ञानुष्ठानतत्परैः तदानीन्तनैर्ब्राह्मणै' तेषां मन्त्राणां विधानादिव्यवस्थया सह मन्त्रान्तर्गतदुर्बोधपदाना मर्थां अपि भाषिता' ; अतो ब्राह्मणान्येव आदिवेदभाष्याणीतिसुवचम्। तद्यथा श्रूयतेऽयं मन्त्रः ( ऋ०सं० २. ३. २३. ४, ८. ४. १८. ६. )—

"यज्ञेन यज्ञ मयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमान' सचन्त यत्र पूर्वे साध्याः सन्ति देवाः"–इति।

तद्विविव्याख्यानपरश्चैतदैतरेयकं ब्राह्मणम्— "यज्ञेन यज्ञ मयजन्त देवा इत्युत्तमया परिदधाति। ०—०। छन्दांसि वै साध्या देवाः, तेऽग्रेऽग्निनाग्नि मयजन्त। 'ते स्वर्गं लोक मायन्' आदित्याश्चैवेहासन्नङ्गिरसश्च ( १. ३. ५. )"–इत्यादि। तत एव निरुक्तेऽपि व्याख्यात. ( १२. ४ ७. )।

तथैव योऽयं शुक्लकृष्णयोरुभयोरेव यजुषोरारम्भमन्त्र'—"इषे त्वोर्जे त्वा वायव स्थ देवो व सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे" –इति। तस्यैतस्य विधानं, सह दुर्गमपदव्याख्यानानि च कृतानि दृश्यन्ते शुक्लकृष्णयोरुभयोरेव ब्राह्मणयो'। तथाहि शतपथ-ब्राह्मणे— "इष्वै तदाह यदाह इषे त्वेति"–इति, "यो वृष्टादूर्ग् रसो जायते, तस्मै तदाह"–इति, 'यज्ञो वै श्रेष्ठतमं कर्म"–इति च ( १. ७. १. १–५. )। तैत्तिरीये "तृतीयस्या मितो दिवि सोम आसीत्"–इत्यारभ्य "श्रेष्ठतमाय कर्मण इत्याह यज्ञो हि श्रेष्ठतमं कर्म तस्मादेव माह"–इति यावत् ( तै० ब्रा० ३. २. १. १–४. )ग्रन्थसन्दर्भो द्रष्टव्य ।

तथा श्रूयन्ते सामवेदे सर्वमामखेव ये स्तोभाः, ते खलु व्याख्याता दृश्यन्त एव तद्ब्राह्मणे— "अयं वाव लोको हाउ-

कारो वायुर्हाइकारश्चन्द्रमा अथकारः आत्मेहकारोऽग्निरीकारः आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोइकारः प्रजापति-र्हिङ्कारः प्राणः स्वरोऽन्नं या वाग् विराट् अनिरुक्तस्त्रयोदश स्तोभः सञ्चारो हुङ्कार (छा० ब्रा० ३. १३. १-२.)"-इति।

यथलेपायितयाय मर्थो मीमांसादर्शने। तथाह्यस्ति तत्र मन्त्रलिङ्गाधिकरणे सूत्रम्— "विधिशब्दाश्च"-इति (१. २. ५३.)। 'विधिशब्दाश्च विवक्षितार्थमेव मन्त्रानुवदन्ति,— 'शतं हिमाः शतं वर्षाणि जीव्यासमेत्येतदेवाह'-इति"-इति तद्भाष्यं शबरस्वामि-सतम्। "मन्त्रव्याख्यानरूपो ब्राह्मणगतः शब्दो विधिशब्द इत्यु-च्यते"-इति च तत्राह सायणाचार्योऽपि। तत्रैवोदाहृत्य व्याख्या-तञ्च तेनापि तथैव ब्राह्मणम्। तथाहि— "स चैव माध्यायते— 'शतं हिमाः शतं वर्षाणि जीव्यास्मेत्येवैतदाह'-इति। तत्र 'शतं हिमाः (ऋ० म० १, ५, ८. ४.)'-इत्येतद् व्याख्येयमन्त्रस्य प्रतीकम्, अवशिष्टं तु तस्य तात्पर्यव्याख्यानम्"-इत्यादि। तद्भाष्येऽप्युक्तम्—'अत्र हिमशब्देन तद्युक्ता हेमन्तर्त्तवोऽभिधीयन्ते; तथाच ब्राह्मणम्'-इत्यादि।

स्वर यद्यकर्मस्वराणां विधानस्य पर्य्यालोचनयेद्दशुतमाष्यशब्देन ब्राह्मणाना मेव बोधने कात्यायनाभिप्रायोऽनुभूयते ; "अथ ब्राह्मणस्वरसंस्कारनियम."–इत्यारभ्य "तान एवाङ्गोपाङ्गानाम्"–इत्यन्तेन परिशिष्टग्रन्थेन भाषिकादिस्वराणां सुष्ठु परिचायितत्वात् । ब्राह्मणग्रन्थानां हि भाष्यत्वेनैव तदीयस्वराणां भाषिकत्वसिद्धिः । ब्राह्मणस्वर एव भाषिकस्वर इत्युच्यते इति तु सर्वसम्मतम् । अतएवोक्तम् "एकम्"–इति सूत्रस्योव्वटभाष्यस्य टीप्पन्याम्– "मन्त्रकाण्डपठिताना मपि ब्राह्मणभागाना मन्त्रस्तूपर इत्यादीनां त्रैस्वर्यम् (निगमस्वरत्वम् । एव ; ब्राह्मणकाण्डपठितानां विश्वेदेवाः श्रोमन्न मपर्येहेत्यादीनां भाषिकस्वर एवेति"–इति । मन्त्रकाण्डे ब्राह्मणवचनानाम् , ब्राह्मणकाण्डे च मन्त्राणां पाठस्तु कृष्णयजुर्वेदे एवाम्नातो नान्यत्रेति च ध्यर्त्तव्यम् ।

तथा तैत्तिरीयसंहिताभाष्यभूमिकाया मपि स्पष्ट मेवाभिचख्यौ सायणाचार्य्यो ब्राह्मणाना मन्त्रव्याख्यायकत्वम्– "यद्यपि मन्त्रब्राह्मणात्मको वेदः, तथापि ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वात् मन्त्रा एवादौ समाम्नाताः"–इति ।

तदित्थं सिद्ध मेव सर्वेषां हि मन्त्रग्रन्थाना मसाधारणं नाम मन्त्र इति निगम इति च ; एवं सर्वेषा मेव ब्राह्मणग्रन्थाना मसाधारणं नाम ब्राह्मण मिति भाष्य मिति च ; तथा मन्त्रग्रन्थेषु श्रुतानां पदानां वाक्याना स्वराणाञ्च नैगमत्वम् ; ब्राह्मणग्रन्थश्रुतानां पदाना वाक्यानां स्वराणाञ्च भाषिकत्व मिति । अत एव "प्रोक्षणस्तु हिरण्यवता पाणिना दर्भपिञ्जूलवता वेति भाषिकम् ( ६. २.)"–इत्युक्तं सङ्गच्छते साङ्ख्यायनगृह्यकारस्येति ।

"अथापि भाषिकेभ्यो धातुभ्यो नैगमाः २—७ ; अथापि

नैगमेभ्यो भाषिकाः ( २. १. ३. )"–इत्यादौ निरुक्ते श्रुतं भाषिक-पदं यदि भाषाशब्दमूलक मेव, तथापि न क्षतिः ; भाषाभाष्ययो-रेकधातुजत्वात् । किञ्च भाषयोपनिबद्ध मेव भाष्यं भवति ; मूलार्थ-बोधने एव हि सर्वभाष्यस्य तात्पर्यम् ; न च चलितभाषया कथन मन्तरा मूलस्य स्पष्टतया बोध सञ्जायते । तदेवं वेदस्य दुर्बो-धत्वपरिहाराय यदा ब्राह्मणग्रन्था विरचिताः , तदा तादृश्या एव भाषाया व्यवहार आसीत् यादृश्या रचितानि वेदभाष्यरूपाणि ब्राह्मणानि । एवञ्च तदानीं ब्राह्मणग्रन्थीयानां वाक्यादीनां यथा-सीद् भाषिकत्वम् , तथैवाद्यतनीयाना मस्मद्वाक्यादीना मपीति सम मेवेति नवेदत्वञ्च न विरुद्ध्यते । वस्तुतस्तु पुराकल्पे ब्राह्मण-ग्रन्थरचनाकाले मन्त्राणा मेव वैदिकत्वेन ग्रहण मासीद्योग्यम् ; ब्राह्मणानान्त्ववश्यं लौकिकत्वेनैव ; पर मिदानीन्तु मन्त्रब्राह्म-णयोरुभयोरेव वैदिकत्वेनाभ्यर्चनं सम्भवति ; सौत्रिकाणा मपि वचनानां वैदिकवत्त्वम् , तत परस्याना मेव लौकिकत्व मिति । शास्त्रकृतां व्यवहार एवात्र निदानम् , तत्रापि कालस्यैव प्राधान्य मित्यभ्युपगन्तव्य मत एव आ सूत्रकालात् सिद्ध मविशेषेण "मन्त्र-ब्राह्मणयोर्वेदनामधेयम्"–इति ॥

[ मन्त्र ] तत्र, तयोर्मन्त्रब्राह्मणयोरादौ तावत् मन्त्रस्य लक्षण मनुसन्धेयम् ,— किन्नाम मन्त्रत्वम् ? इति ; लक्षणस्यौपयोगो हि पूर्वाचार्यैः प्रदर्शित एव— "ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः । लक्षणेन तु सिद्धाना मन्तं यान्ति विपश्चितः"– इति । तयोऽनुसन्धीयमानञ्च दृश्यते— उक्तं खलु भगवता यास्के-नैव "मन्त्राः मननात्"–इति ( ७. १. ६. ) मन्त्रनिर्वचनम् ; तत एव सिद्धञ्च मन्त्रलक्षणम्— 'मननहेतुर्मन्त्र'–इति । तथाच तत्र

वृत्तिः— "तेभ्यः (मन्त्रेभ्यः) हि अध्यात्माधिदैवाधियज्ञादि-मन्तारो मन्यन्ते तदेषां मन्त्रत्वम्"–इति।

'मननहेतुर्मन्त्र इत्युक्ते ब्राह्मणेऽतिव्याप्तिः'–इति ब्रुवता साय-णेन दूषितञ्चैतल्लक्षणं ऋग्भाष्यभूमिकायाम्; परं न तत्रोदा-हृतं तादृशं ब्राह्मणवाक्य मेकं मपि। तथाचावगम्यते— "तच्चो-दकेषु मन्त्राख्या (जै० सू० २. १. ३२.)"–इतिसूत्रानुमतम् "अभियुक्तानां मन्त्रोऽय मिति समाख्यानं लक्षणम्"–इति विव-क्षया,— 'विहितार्थाभिधायको मन्त्रः'–इत्यस्य पूर्वाचार्यविहितस्य, असिपदान्तादीनां पञ्चदशानां च मीमांसावृत्तिकृदुदाहृतानां, मन्त्रलक्षणानां मीमांसाभाष्यकारकृतखण्डनेभ्यः सोदाहरणेभ्यः कतिचिदुद्धृत्य दिदर्शयिषया चोद्विग्नचित्तस्तत्रैवैकाग्रमना यास्कोक्ते विचारावसरं नालभत स इति। प्रतिपादितञ्चास्माभिर्मीमांसा-कारस्य जैमिनेः यास्कात्प्रजत्वम् (८४ पृ०); तथाच जाग्रति-ऽपि हि तादृशे लक्षणे यदुक्तं यास्केन "मननान्मन्त्रः"–इति, ततः सम्भाव्य मेवैतल्लक्षण मदुष्ट मिति। अपि च सायणतः प्राचीनेन, उद्धृतासिनापि हि शबरस्वामिना तत्सूत्रस्य भाष्ये विहितार्थाभि-धायकत्वादीनि मन्त्रलक्षणानि खण्डखण्डीकृतानि; परं न तन्नि-विष्टवेऽप्यस्य यास्कीयलक्षणस्यावतरणं सपीष्टं तेन; इतश्च ज्ञायते नैतल्लक्षणं दुष्ट मिति। "अविशिष्टस्तु वाक्यार्थः (जै सू० १. २. ४०.) इति सूत्रस्य, "विधिशब्दाच्च"–इति (जै सू० १. २. ५३.) सूत्रस्य च व्याख्यानावसरे, मन्त्राणां मननसाधनत्वं च स स्वयं व्यनक्ति— "तु-शब्देन मन्त्राणा मदृष्टार्थं मुच्चारणमात्रं वारयति ०—० तस्मान्मन्त्रोच्चारणस्य अर्थप्रकाशनरूपं दृष्ट मेव प्रयोजनम्"–इति, "तस्मादिवक्षितार्था मन्त्राः प्रयोगकाले स्वार्थ-

प्रकाशनार्थेनोच्चारयितव्या."-इति च । मन्त्राणां मननहेतुत्वलक्षण मनुलक्ष्यैवोक्तिरेषा भगवतो यास्कस्य— "यत्काम ऋषिर्यस्यां देवतायामार्थपत्य मिच्छन् स्तुतिं प्रयुङ्क्ते, तद्दैवत. स मन्त्रो भवति"-इति (७. १. १.) । तदेवं 'मननहेतुर्मन्त्र.'-इति, 'मन्त्रोऽय मित्यभियुक्तोपदिष्टो मन्त्र.'-इति च द्वे एव मन्त्रलक्षणे निर्दिष्टे इति गम्यते ; तद् यस्मै यद्रोचेत, तदेव स गृह्णात्वित्यन्न मिह नीरसविवादेनेति ।

अथवात्रैतत् सुष्ठु समाधानम्— जैमिनिरुक्तं मन्त्रलक्षणं ग्रन्थपरम्, यास्ककृतलक्षणं तु वाक्यपर मिति । तथाच जैमिनिनये वैदिकसमाख्याभिज्ञानां मन्त्रेतिप्रसिद्धानां संहिताग्रन्थाना मेव मन्त्रग्रन्थत्वम् ; न त्वन्येषा ताण्ड्यादीनाम् ; यास्कमते तु ग्रन्थाना तथा लक्षणेऽपि न क्षतिः ; परं ताण्ड्यब्राह्मणाद्याध्यायगतानां 'मह्यमै वोच.'-इत्यादीनाम्, छान्दोग्यब्राह्मणाद्याध्यायद्वयगतानाञ्च 'देव सवितः प्रसुव'-इत्यादीनाम्, तथा तैत्तिरीयारण्यकादिपठितानाञ्चोद्धृतासीन्यादीना वाक्याना मन्त्रत्वमिहत्ये खल्विद मवश्यं वक्तव्यम्— 'मननहेतुर्मन्त्र.'-इति । तदेद मुभय लक्षणयोर्विषयभेदात् नैवास्ति विवादविषय इत्यस्माक मिति ॥

"आनन्दपुरवास्तव्य वज्रटाख्यस्य सूनुना । मन्त्रभाष्य मिद कृतं भोजे पृथ्वीं प्रशासति"-इत्युक्त्या स्वपरिचय सुज्ञापयताखिलयजुर्मन्त्र भाष्यं कृतवता उव्वटेन तत्रैव भूमिकायां प्रदर्शितास्वैते मन्त्रभेदाः ;—

"न्यायविदः पठन्ति—

'विध्यर्थवादयाञ्चाशी.स्तुतिप्रैषप्रवह्लिका ।<br>
प्रश्नो व्याकरणं तर्क पूर्ववृत्तानुकीर्तनम् ।<br>
अवधारणं चोपनिषत् वाक्यार्थास्तु त्रयोदश ।<br>
मन्त्रेषु ये प्रदृश्यन्ते व्याख्यातृमुनिनोदिता. ।'-इति ।"

अथ तेषामुदाहरणानि। तत्र,—

परमेष्ठ्यभिहितः— "अश्वस्तूपरो गोमृगस्ते (य०वा०स० २४.१)।

अर्थवादः— "देवा यज्ञ मतन्वत (य० वा०स० १८, १२)"–इति।

याच्ञा—"तनूपा अग्नेऽसि तन्वं मे पाहि (वा०स० ३,१७)"–इति।

आशी —"आ वो देवास ईमहे ( य० वा० स० ४, ५ )"–इति।

स्तुतिः—"अग्निर्मूर्द्धा दिवः ककुत् (य०वा०स० ३, १२)"–इति।

प्रैषः—"होता यक्षत् समिधाग्निम् (य०वा०स० २१, २९)"–इति।

प्रवह्लिका— "इन्द्राग्नी अपादियम् (वा० स० ३३, ९३)"–इति।

प्रश्नः— "कः स्विदेकाकी चरति (य० वा० स० २३, ९)"–इति।

व्याकरणम्— "सूर्य एकाकी चरति (य०वा०स० २३,१०)"–इति।

तर्कः— "मा गृधः कस्य स्विद्धनम् ( वा० स० ४०, १ )"–इति।

पूर्ववृत्तानुकीर्त्तनम्— "ओषधयः समवदन्त (य०वा०स० १२ ९६)"।

अवधारणम्— "तमेव विदित्वातिमृत्युमेति (श्वे० उ० ६, १५)"।

उपनिषत्— "ईशा वास्य मिदं सर्वम् (य०वा०स०४०, १)"–इति।"

शबरभाष्येऽपि आशीरादयस्तयोदशैव मन्त्रभेदाः प्रदर्शिताः, परं तत्तन्नयैव; द्रष्टव्यास्ते तत्रैव (जै० सू० २, १, ३२ भा०)। ऋग्भाष्यभूमिकायाञ्च सायणेन तत एव कतिचिदुद्धृत्य प्रदर्शिताः।

उव्वटेन ह्येतानि सर्वाण्येव यजुर्वेदाधिकत्योदाहृतानि; निरुक्तकारेण भगवता यास्केन त्वेव ऋग्वेदेऽपि दर्शितानि बहून्युदाहरणानि। तथाहि— "तास्त्रिविधा ऋचः ;— परोक्षकृताः प्रत्यक्षकृताः, आध्यात्मिक्यश्च"–इत्युपक्रम्य, "परोक्षकृताः प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठा अल्पश आध्यात्मिक्यः."–इत्युक्त्वा, "अथापि स्तुतिरेव भवति नाशीर्वादः ०—० ; अथाप्याशीरेव न स्तुतिः; तदेतद्बहुल माध्वर्यवे याज्ञेषु च मन्त्रेषु"–इति प्रदर्श्य, उदाहृता

नीमानि— "यथापि शपथाभिशापौ ०—० ; यथापि कस्यचिद् भावस्याचिख्यासा ०—० ; यथापि परिदेवना कस्माच्चिद् भावात् ०—० ; यथापि निन्दाप्रशंसे ०—० "यथाक्षसूक्ते द्यूतनिन्दा च कृषिप्रशंसा च एव मुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति"—इति। (७. १. १.)॥

भेदाश्च सम्भवाः ; अत एवैकैकापि सा बहुशाखत्व मापन्ना । तद्-वोदाहृतश्च प्राचीनभाषितं चरणषट्कं षड्गुरुशिष्येण —

"एकविंशत्यध्वयुक्त मृग्वेद मृषयो विदुः ।

सहस्राध्वा सामवेदो यजुरेकशताध्वकम् ।

नवाध्वाथर्वणोऽन्ये तु प्राहुः पञ्चदशाध्वकम्"—इति ।

"अध्वा, देवता, गतिः, शाखा इति पर्यायवाचकाः"—इति च तत्रोक्तं तेनैव । पातञ्जले महाभाष्येऽप्युक्तं पस्पशायाम्— "एक विंशतिधा बाह्वृच्यम् , एकशत मध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, नवधाथर्वणो वेदः"—इत्येव ।

वेदव्यासीये शौनकीये वा चरणव्यूहे तु ऋग्वेदस्य पञ्चैव शाखाः समुल्लिखिताः— "शाखाः पञ्चविधा भवन्ति , शाकला बाष्कला आश्वलायनाः शाङ्खायना माण्डूकायनाश्चेति"—इति । तथाच तदानी मेवान्याः षोडश शाखा विलुप्ता इति गम्यते । तदिद मृग्वेदशाखानिरूपण मस्मत्कृते ऐतरेयालोचने ( ११८–१४४ पृ० ) द्रष्टव्यम् ।

ततस्तत्रैव "यजुर्वेदस्य षडशीतिर्भेदा भवन्ति"—इत्युक्तम् । तथाच तदायजुषोऽपि पञ्चदश शाखाः प्रविलुप्ता इति स्फुटम् ; नान्यथा प्रदर्शितषड्गुरुशिष्यधृत-प्राचीनवचन पस्पशावचने चोपपद्येते इति । यदप्युक्तं षडशीतिरिति, तत्र च "कठानामूपमन्युविशेषाश्चतुश्चत्वारिंशत्"—इत्युक्तेर्द्विचत्वारिंशदेवावशिष्यन्त इति चरण-व्यूहकाले ता एव शाखा आसन् प्रचलिता इत्येव तत्त्वम् । तासां द्विचत्वारिंशच्छाखानां नामानि यथा— चरकी, आह्वरकी, कठी, प्राच्यकठी, कपिष्ठलकठी, आष्ठलकठी , औपमन्यवी , पाराय-णीया, पाराशरीया, वार्त्तान्तवेया, श्वेताश्वतरा, मैत्रायणी चेति

द्वादश चरकाध्वर्युभेदाः । मैत्रायणीभेदाश्च मानवी, दुन्दुभी, छाग
लेया, हारिद्रवेया, वाराही, श्यामी, श्यामायनीया चेति सप्त ।
ता एता मैत्रायण्योऽपि चरकाध्वर्युष्वेव गण्यन्त इत्यूनविंशतिः ।
जाबाली, माध्यन्दिनी, काण्वी, कापाली, गालवी, वैजवापी, पौ
धेया, वैनेया, वैरेया, बौधेया, पाराशरीया, शातातपीया, तापाय
नीया, कात्यायनीया पौण्ड्रवत्सी आवटिकी, परमावटिकी, चेति सप्त
दश वाजसनेयशाखाः शुक्लयजुर्वेद इत्युच्यन्ते । औख्या, खाण्डिकेया
चेति द्वे तैत्तिरीयशाखे । खाण्डिकेयाश्च पुनः पञ्चभेदाः सञ्जाताः
—आपस्तम्बी, बौधायनी, सत्याषाढी, हिरण्यकेशी, शाट्यायनी
चेति । द्विविधैवैषा तैत्तिरीया कृष्णयजुर्वेद इत्युच्यते । तदेवं
चरकाध्वर्यु , वाजसनेयी , तैत्तिरीयेति तिस्र एव मूलशाखाः ,
आसामेवानुशाखा अन्याः । ता इमाः सङ्कलनया ( १९ + १७ +
६ = ४२ ) द्विचत्वारिंशच्छाखा यजुर्वेदीया इति । एषु मैत्राय
णीया , माध्यन्दिनी , काण्वी, तैत्तिरीयेति प्रसिद्धा औख्या,
आपस्तम्बी च पञ्च शाखा अद्यापि सन्ति ।

ततस्तत्र तदुत्तरम्— सामवेदस्य किल सहस्रभेद आसीत्,
अनध्यायेष्वधीयानास्ते शतक्रतुवज्रेणाभिहताः प्रणष्टाः । तेषाम्
प्रवक्ष्यामि— आसुरायणीया , वासुरायणीया , वार्तान्तवेया ,
प्राञ्जला , ऋग्वर्णभेदा , प्राचीनयोग्या , ज्ञानयोग्या , राणा
यनीयाश्चेति । तत्र राणायनीयानां नव भेदा भवन्ति— राणाय
नीया , शाट्यायनीया , सात्यायनीया , सात्वला , खल्वला ,
महाखल्वला , लाङ्गला , कौथुमा , जैमिनीयाश्चेति '-इति ।
तदिदं चरणव्यूहाख्यमथर्ववेदिकशास्त्रमप्युक्तं पौराणिकमिति
नादरणीयं वेदविदुषां मान्यतमानाम् । तत्रत्यमथर्ववेदीय शाखा

सामवेदस्य, सहस्रशाखत्वप्रवादस्तु बहुविधस्वरादिसंयोगादेकस्यापि मन्त्रस्य बहुविधसामश्रुतेरित्येव। अतएव तर्पणविध्यादौ त्रयोदशाना मेव सामगाचार्याणां नामोल्लेखो भवति यथा— "राणायणः, शाट्यमुग्न्यः, व्यास, भागुरिः, औलुण्डिः, गौल्गुलवि, भानुमानौपमन्यव, काराटि, मशको गार्ग्य', वार्षगण्यः, कुथुमः, शालिहोत्र, जैमिनि। त्रयोदशैते मे सामगाचार्याः स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्पिता."–इति। एतदीयशाखासु राणायणी, कौथुमी, जैमिनिश्चेति तिस्रोऽद्यापि सन्ति।

ततस्तत्र चरणव्यूहे उक्तं ह्येतत्— "अथर्ववेदस्य नव भेदा भवन्ति। पैप्पलाः, दान्ता, प्रदान्ताः, स्नाताः, स्नौताः, ब्रह्मदावलाः, शौनकी, देवदर्शती, चरणविद्याश्चेति"–इति। अस्ति चैषा नाम्नां पाठान्तरतापि। आसां नवशाखाना मेकैव मुद्रितेति संक्षेपः॥

इत्थं बहुशाखत्वेऽप्येकैकस्य वेदस्य, एकैकस्याः शाखाया अध्ययनेनैव अभेदेवाधीत एकैको वेद', सर्वास्वेव शाखासु संहितायाः प्रायोऽभेदात्। किञ्चित्पाठन्यूनातिरिक्तेन, किञ्चिदुच्चारणभेदेन, किञ्चिदनुष्ठानपद्धतिपार्थक्येन च न ह्येव भवेत् संहितायाः स्वरूपतो विभिन्नत्वम्; जागर्त्येव ह्येष न्यायः 'एकदेशविकृत मनन्यवत्'-इति (पा॰ सू॰ १. १. ७२ भा॰), भवत्येव हि छिन्नपुच्छे शुनि श्वव्यवहारः, तथा ह्येपदशेणिरपि देवदत्तादौ देवदत्तादिव्यवहारश्च लोके। अत एव सायणाचार्यादय आचार्या एकैका मेव शाखां व्याख्याय एकैकवेदव्याख्यानेऽनभन् स्व स्व कृतकृत्यता मिति। अत एव च "वेदः कृत्स्नोऽधिगन्तव्य"–इति (२. १६५), "षट्त्रिंशदाब्दिकं चर्य गुरौ त्रैवेदिकं व्रतम् (३. १.)–"–

इति, "वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्"-इति(२.२.) चै मनुवचनानि सङ्गच्छन्ते ; शाखानां मूलतः प्रभूतपार्थक्ये हि कथं सम्भवेत्तामाध्ययनं द्वादशस्वेवाब्देषु सहस्रशाखस्य सामवेदस्येति तादृशस्मृतिवचनानां मुक्तत्तप्रलपितत्व मेव प्रसज्येतेति। अतोऽत्र खेव मेवावधार्यम् ,— एष खलु वेदशाखाभेदो न मन्वाद्यध्यायभेद-तुल्यः, प्रत्युत भिन्नकाललिखितानां भिन्नदेशीयानां मेकग्रन्थीयानां मपि बहुतरादर्शपुस्तकानां यथा भवत्येव पाठादिभेदः, तथैवेति। अथाप्यत्र संशयश्चेत् कस्याप्येकस्य वेदस्य कयोरपि शाखयोरत्यन्तपाठसन्दर्शनेनैव तद्दूरीकरणं सुकर मेवेति।

परन्त्वेव मपि यजुषस्तु कतिपयशाखाभिः कतिपयशाखानां मेव मस्ति भेदः, यत्तयोरुभयोः शाखासमूहयोः शुक्ल-कृष्णत्वे एवामंसत प्राचीनाः। तथाच माध्यन्दिनीप्रभृतीनां यजुः-शाखानां शुक्लयजुरिति ख्यातिः, तैत्तिरीयादीनान्तु यजुः-शाखानां कृष्णयजुरिति समाख्या चेति। ईदृशासदृशभेदकार-णन्तु उक्तं बहुषु पुराणेषु बहुविध मपि मूलत. प्रायोऽविभिन्न मेव। तद्विस्तर्य एष उक्तो महीधराचार्येण शुक्लयजुर्भाष्यभूमि-कायाम्— "व्यासशिष्यो वैशम्पायनो याज्ञवल्क्यादिभ्यः स्वशि-ष्येभ्यो यजुर्वेद मध्यापयत्। तत्र दैवात् केनापि कारणेन क्रुद्धो वैशम्पायनो याज्ञवल्क्य प्रत्युवाच 'मदधीतं त्यज'-इति। स योगसामर्थ्यान्मूर्त्तां विद्यां विधायोद्ववाम। 'वान्तानि यजूंषि गृह्णीत'-इति गुरुणोक्ता अन्ये वैशम्पायनशिष्यास्तित्तिरयो भूत्वा यजूंष्यभक्षयन्। तानि यजूंषि बुद्धिमालिन्यात् कृष्णानि जातानि। ततो दुःखितो याज्ञवल्क्यः सूर्य माराध्यान्यानि शुक्लानि यजूंषि प्राप्तवान्। तानि च जाबालगौधेयकाण्वमध्यन्दिनादिभ्यः सम-

दशशिष्येभ्यः पाठितवान् [ 'पञ्चदशशिष्येभ्यः'-इत्यपपाठः ]। एतस्मादितिहासात्, मैत्रायणी माध्यन्दिनी तैत्तिरीयशाखानां पाठप्रकारदर्शनाच्च प्रतीयते चैतत् ,— चरकाध्वर्युयजुःशाखापाठाः यज्ञक्रमाननुसारिण इति याज्ञवल्क्येन स्वमनीषया दर्शपूर्णमासयज्ञाद्यनुसारिणी संहिता ग्रथिता , पाठिता च सा सप्तदशशिष्येभ्यः ; सैव यज्ञोपयोगिनीति वाजाना मन्नानां सनये लाभाय सम्पन्नेति वाजसनेयीत्याख्याता, क्रमशोऽवयवसम्पन्नेति शुक्ला (शुद्धा) इति च। गुरुमुखतोऽधीतापि तत्परित्यक्ता प्राचीनतमा चरकाध्वर्युसंहितेव अन्यैः आन्ध्रादिदेशीयैस्तित्तिर्यादिसञ्ज्ञकैर्गृहीता, तस्या वाजसनेयीतोऽप्युत्कर्षं चिकीर्षुभिः यत्प्रकरणे ये मन्त्रा पठितास्तत्रैव तदुत्तरं तत्तद्विधायकादिब्राह्मणवचनानि च सङ्गृहीतानि। तथा च, यथा पृथक् पृथक् भुक्तानि च अन्नव्यञ्जनानि छर्दितानि चेद् वान्तं तत् विमिश्रान्नव्यञ्जनमेव भवति, एवं तित्तिर्यादिभिर्मन्त्रा' ब्राह्मणग्रन्थश्च पृथक्-पृथक् अधीता अपि यज्ञकार्येषु तदुभयारसौष्ठवं साधयितुं विमिश्रीकृता इति द्वावेव मन्त्रब्राह्मणग्रन्थौ यात्पूर्णाविव सम्पन्नौ , अतएव कृष्णेतिव्यपदेशभागिनौ च। इत एतावकाशादितयोः शुक्लकृष्णयोर्यजुःशाखयोरनतिप्राचीनानामपि केषाञ्चिद्वचनानां प्रवेशः सम्भाव्यते, तत एवैतयोर्मन्त्रन्यूनातिरिक्तत्वादितो मिथो विभिन्नत्वं च सुव्यक्तमेवेति।

एवञ्चायं मन्त्रभागः ऋग्-यजुः-सामेति त्रिविधरचनात्मकोऽपि होत्राध्वर्यवौद्गात्रब्राह्मेति चतुःसंहितात्मकः, कालेन शुक्लकृष्णेति द्वैविध्य गते च यजुषि सम्प्रति राजते पञ्चसंहितात्मक एव ;— ऋग्वेदसंहिता , शुक्लयजुर्वेदसंहिता, कृष्णयजुर्वेदसंहिता, सामवेदसंहिता , अथर्ववेदसंहितेति ।

यथासु च पञ्चसु वेदसंहितासु बहुधैव पौर्वापर्यं केचिदाहुः। तथाहि — 'ऋक्संहितायाः सर्वत एव प्राथम्यम्; तत्रापि द्वितीयमण्डलस्यापेक्षिकनूतनत्वम्, दशममण्डलस्य तु ऋक्संहितापरिशिष्टरूपत्वञ्च; सामसंहिताया तत एवोद्धृतार्चिकसूक्तत्वम्; शुक्लयजुःसंहितायाः तदपेक्षयाप्यर्वाचीनत्वम्; अथर्वसंहितायास्तु सर्ववेदपरिशिष्टत्वेन ततोऽप्यर्वाचीनत्वम्'—इति। वेदतत्त्वानुसन्धित्सुभिः प्राप्तमेवेदं तत्त्व सुष्ठावित मित्यत्र विश्वास एवोचितः सर्वेषाम्; परं किं कुर्मो वयं नास्माकं बुद्धिः प्रसरति; एकस्मिन्नेव हि काले, एकस्यैवाचार्यस्य, एकेनैव चयनयत्नेन चतुष्टसाधनानां पौर्वापर्यं कथङ्कारं स्यादिति। यदि कश्चित् फलविक्रयी,— आम्रार्थी आम्र मेव स्तूपात्, जम्बर्थी जम्बू मेव, पनसार्थी पनस मेव, राजादनार्थी राजादन मेवेति क्रयविक्रय सौकर्यार्थं मेकस्यैकेनैव यत्नेनैक मेव फलराशिं विभज्य चयनेन चतुरः स्तूपान् विदध्यात्, तत्र कः खलु धीर एवं वदितुमुत्सहेत,— अयं स्तूपः पूर्वं कृतः, अत्राप्ययमो नूतन इत्यादि? तथैवात्रापि। किञ्च यथास्त्येव तत्र फलानां मुत्पत्तौ कालपौर्वापर्यम्, न त्वेककालजातान्येव तानि सर्वाणि; एवमत्रापि मन्त्राणां मुत्पत्तौ कालपौर्वापर्यम्, न त्वेककालीनत्वमास्ते इति स्यात् छलकवादिनाम्; परं न हि तेन स्तूपानां संहितानां वा प्राचीनाप्राचीनत्वविचारः रूढ्यन्ते, तत्त्वतो फलानां मन्त्राणाञ्चोत्पत्तिकालविचारस्तु स्तूपानां संहितानां मुत्पत्तिकालविचारतः सर्वथा स्वतन्त्र एवेति बहुशास्त्रपारगपारदृश्वनां विश्वविख्यातकीर्त्तीनामपि तेषां मत्र तद्वचो न प्रमाणकोटिं प्रवेष्टु मिष्ट इत्यस्माकम् ॥

तथापीदं जिज्ञासितं कथङ्कारं ऋक्संहितायाः प्राथम्य मिति?—

श्रूयते हि मनुसंहितायाम्— "ऋग्यजुस्सामलक्षणम्"–इति (२.११.)। एवं मादौ ऋग्वेदस्य प्रथमप्रयोगदर्शनात् तस्यैव वेदेषु प्राथम्यं गम्यत इति चेन्न ; तादृशसमस्तप्रयोगे हि शब्दानुशासनादेव ऋक्शब्दस्य पूर्वनिपातो भवति। तथा हि पाणिनिसूत्रम्— "अल्पाच्तरम्"–इति (२.२.३४.)। यद्येवमप्रयोगादेव प्राथम्यं गम्येत, तर्हि "विन्ध्यकिष्किन्ध्यहिमालयाः"–इत्युक्ते विन्ध्यस्यैव प्राथम्य सुररीकार्यं स्यात्। असमस्तप्रयोगेषु च यत्र ऋक्शब्दस्य प्रथमतः प्रयोगो दृश्यते, तत्र प्रयोक्तुः याद्दच्छिकत्व मेव बीजम्। अपि वा पद्यगद्यगानात्मिकासु त्रिविधरचनासु तत्त्वतो गानरचनाया एव न्यायत्वेऽपि पद्यरचनायास्तदशिरूपत्वेन ततोऽपि गरीयस्त्व मवश्य मभ्युपगन्तव्य मिति रचनानियमाधीन मेव प्राधान्य मृचां बहुत्र आयुक्तेषु निदानम्। तदेवं सर्वत्रैवर्क्शब्दस्य प्रथमप्रयोग एव ऋग्वेदस्य सर्ववेदप्राथम्ये विनिगमक मिति तेषां मनोराज्यविजृम्भणमात्रम्।

श्रूयते च कौषीतकीब्राह्मणे— "तत्परिचरणावितरौ वेदौ"–इति। एतेन यज्ञकाण्डे होतृकर्मण एव प्राधान्यम्, होत्रर्थं मेव चाध्वर्युत्व मुद्गातृत्वञ्चेत्येव बोधितम् ; एतस्मादृचां प्रथमोत्पन्नत्वं न कथ मपि बुद्ध्यते। एवञ्चास्य तद्विषयकमानत्वेनोपन्यासोऽपि वृथैव।

सर्ववेदभाष्यकारस्य श्रीमतः सायणाचार्यस्य ऋग्वेदभाष्यभूमिकायाम्— "मन्त्रकाण्डेष्वपि यजुर्वेदगतेषु तत्र-तत्राध्वर्युणा प्रयोज्या ऋचो बहव आम्नाताः। साम्नान्तु सर्वेषा मृगाश्रितत्वं प्रसिद्धम्। आथर्वणिकैरपि स्वकीयसंहिताया मृच एव बाहुल्येनाधीयन्ते"–इत्युक्तिः दृश्यते सत्यम् ; पर मेतस्मादपि ऋग्वेदस्य

प्राथम्ये सायणसम्मतिर्न बुद्ध्यते; यदि तु मन्त्रेषु ऋचां बाहुल्य मित्येव घटयते। किञ्चैवं प्राधान्याख्याने च ऋक्संहितायाः प्राधान्यं नैव गम्यते; ततोऽन्यत्रापि ऋचां सद्भावात्। अत एव ऋचां हि रचनानियमाधीनं बाहुल्यमूलकं वा प्राधान्य मुररीकुर्वतोऽपि सायणस्य मते ऋग्वेदस्य त्वप्राधान्य मेव। तथा ह्युक्त मथर्वभाष्यभूमिकायाम्— "आनुपूर्व्या कर्मणां स्वरूपं यजुर्वेदे समाम्नातम्। तत्र विशेषापेक्षाया मपेक्षितायां याज्यापुरोऽनुवाक्यादय ऋग्वेदे समाम्नायन्ते, स्तोत्रादीनि तु सामवेदे। तथा सति भित्तिस्थानीयो यजुर्वेदः, चित्रस्थानीयावितरौ। तस्मात् कर्मसु यजुर्वेदस्य प्राधान्यम्"–इति। सामभाष्यभूमिकायाञ्च— "अध्वर्युमुख्यैरृत्विग्भिर्यजुर्भिर्यज्ञसम्पदः। निर्मिमीते क्रियामन्त्रैरध्वर्युर्यज्ञियं वपु। तदलङ्कुरुते होता ब्रह्मोद्गातेत्यमी त्रयः। ०—०। यज्ञं यजुर्भिरध्वर्युर्निर्मिमीते ततो यजुः। व्याख्यातं प्रथमं पश्चादृचां व्याख्यान मीरितम्। साम्नां ऋगाश्रितत्वेन सामव्याख्याय वर्ण्यते"–इति। वस्तुतो जगत्स्रष्टुः पुरैव ब्रह्मणश्चतुर्भ्यो वदनेभ्यश्चत्वारो वेदा युगपत् समुत्पन्ना इत्येवंवादिनां पौराणिककालप्रभवाणां श्रीमत्सायणादीनां तथाविधविचारे मनोनिवेशोऽप्यसम्भव एव; तेषां तादृगगिरश्चविचारप्रवृत्तौ भवेदेव हि स्वसिद्धान्तव्याकोपः।

किञ्च ऋक्संहितायाः प्राथम्येऽभ्युपगते ऋक्संहिताप्रणयनकाले यजुःसाम्नोरसद्भावात् तस्यैव ऋक्संहितायां यजुःसाम्नोरुल्लेखः कथङ्कारं सूपपत इत्येवं तादृगचतुरचेतसां चेतःसु कथम चमत्कार माविष्कृतम्? पश्यन्तु तावत् धीमन्तः— "यजुस्तस्मादजायत"–इति (ऋ॰ सं॰ १०. ९०. ९.), "त मेव यचि समु

ब्रह्मण आहुयन्त्यं सामगा मुक्थ्यशासम्”–इति ( ऋ० सं० १०. १०७. ६.), “ऋक्सामाभ्या मभिहितौ ( ऋ० सं० १०. ८५. ३१.)”–इत्येवमादीनि। इमानि तु निदर्शनानि दशममण्डला- दाहृतानि, दशममण्डलस्यानतिप्राचीनत्व मेव तेषा मिति चेत्, ततोऽन्यतोऽपि दर्शयामः। तथाहि– “बर्हिरिव यजुषा रक्षमाणः” –इति पञ्चममण्डलीयम् ( ६२. ५.), “उभे वाचौ वदति सामगा इव”–इति च द्वितीयमण्डलीयम् (४३. १.)। सामविशेषनामान्यपि श्रूयन्त एव ऋक्संहितायाम्। तथाहि– “रथन्तर मा जभारा वसिष्ठः”–इति ( १०. १८१. १.), “भरद्वाजो बृहदाचक्रे अग्नेः”– इति च (१०. १८१. २.)। एते च निदर्शने दशममण्डलीये इत्येवा- शाङ्क्ये तेषा मिति चेत्, अन्यत्राप्यस्त्येवं तथैव। तद्यथा– “रथन्तरे सूर्यम्पर्यपश्यत्”–इति प्रथममण्डलीयम् ( १६४. २५.), “प्र गायत्रेण गायत”–इति च नवममण्डलीयम् ( ६०. १.) इति दिक्। तदेव ऋक्संहितायाः ऋड्लक्षणमन्त्राणां वा प्रथमरचितत्व मिति तेषां स्वकपोलकल्पित मिवाभाति स्फुटम्।

यदप्युक्तं तद्द्वितीयमण्डलस्य अपेक्षाकृत मर्वाचीनत्व मिति, तदप्येव मेव; मानाभावात्। को नाम धीमान् शष्कलपसहाय एव वटविटपिदुर्गच्छेदने समर्थो भवेत्? अस्ति खलु ऋक्संहिताया द्वितीयमण्डलीयसायणभाष्यारम्भे “य आङ्गिरसः शौनहोत्रो भूत्वा भार्गवः शौनकोऽभवत् स गृत्समदो द्वितीयं मण्डल मपश्यत्”– इत्यनुक्रमणीवचन मुद्धृतम्। तथाच द्वितीयमण्डलस्य शौनकी- यत्वं सुव्यक्तम्; शौनकीयग्रन्थस्य च पाणिनिना “शौनकादिभ्य- श्छन्दसि”–इति ( ४. ३. १०६.) सूत्रे प्रोक्तत्वस्वीकारात् प्राचीन- तमत्वाभावः सुतरां स्फुट मित्येवैकेषा युक्तिर्द्वितीयमण्डलस्य

चिराखिलप्राचीनतमत्वखण्डने शुष्कयुक्तिमयी कर्त्तनी। इह पश्यन्तु तावच्चक्षुष्मन्त — एकवंशीयाश्चान्यवंशप्रभवाश्च शौनका खलु बहव एव,— मन्त्राणां द्रष्टार आसन् शौनका, तेभ्यो ऽन्ये सूक्तानाञ्च द्रष्टार स्थिता एव शौनका, द्वितीयमण्डलस्य द्रष्टा च शौनकस्ततोऽप्यन्य एव, अथर्वशाखाविशेषस्य च प्रवक्ता शौनकोऽप्यन्य एव, तत्तद्वंशप्रभवा ह्यद्यापि बहुत्र बहव शौनका राजन्त एव। 'शौनकादिभ्यश्छन्दसि"–इति (४ ३ १०६) पाणिनिसूत्रस्य शौनकप्रोक्तमन्त्र एव विषय, तथाच शौनकप्रोक्त अथर्ववेदीयसंहितायन्ये येऽधीयते त एव शौनकिन, शौनकदृष्ट ग्रन्थस्तु न चास्य सूत्रस्य विषय, अनुक्रमण्यान्तु 'द्वितीयमण्डल मपश्यत्'–इत्युक्तम्, न तु द्वितीय मण्डल मवोचदिति। शौनक विषये किञ्च पुरस्तादप्यसकृदुक्तानि। ततश्च शौनकदृष्टत्व मेव द्वितीय मण्डलस्येति शौनकदृष्ट द्वितीय मण्डल ये ऽधीयते इति विषये तत्सूत्रस्य प्रवृत्तिरेव नास्तीति तस्य द्वितीयमण्डलस्य प्रोक्तत्वमूल कापेक्षिकार्वाचीनत्वकल्पन भ्रमविजृम्भित मेवेति।

वस्तुत पाणिनिसूत्राणां समालोचनयैव मेव ज्ञायते,— तस्य भगवत पाणिने शाखाना मेव प्रोक्तत्वेन ग्रहण मीप्सितम्, तदध्येतार एव च प्रत्ययादयो विहिता, मन्त्रसूक्तमण्डलादीनान्तु दृष्टत्वमेव ग्रहण मिति दृश्यतेऽनुक्रमणिकादावपि। न च क्वचिदपि पाणिनीये मण्डलाध्येतृषु तादृशप्रत्ययविधि दृश्यते प्रत्युत शाखा ध्येतार एव, सन्ति यथैव ऋग्वेदादीनां शाकलादय शाखा, तथैवास्ति शौनकसंहितेत्यथर्ववेदस्यापि चिरादेव, एव यथैव शाक लादिशाखानां प्रोक्तत्व मेव पाणिनिसम्मतम्, तथैव शौनकशाखाया अपि। तत्कथ मत द्वितीयमण्डलाध्येतरि तादृशप्रत्ययप्रसङ्ग ?

कृती वा अनुक्रमणी यस्य दृष्टत्वं भासते, तस्यैवेह बलात् प्रोक्तृत्वेन ग्रहणं भवेत् स्वीकार्यं मिति ?।

यच्चाप्युक्तम्— ऋग्वेदद्वितीयमण्डलस्य प्रथमसूक्तीयद्वितीयस्याम्—

"तवाग्ने होत्रं तव पोत्र मृत्वियं तव नेष्ट्रं त्व मग्निदृतायतः।
तव प्रशास्त्रं त्व मध्वरीयसि ब्रह्मा चासि गृहपतिश्च नो दमे"

—इत्यस्या मपि यत् होत्रादीनि याज्ञिकाभिधानानि श्रूयन्ते, ततश्च ज्ञायते तन्मण्डलं यज्ञकालभवम्, एतदेव मानान्तरं तस्यापेक्षाकृताधुनिकत्वस्येति। इतश्च वक्तुरेकदेशदर्शित्व मेव विशदीभवति। यतः खलु यज्ञकाले एव सर्वासां संहितानां प्रथन सम्मत मतः संहितासु सर्वत्रैव विद्यन्ते तथाविधा मन्त्राः; न द्वितीयमण्डले एव। तथाहि तत्-प्रदर्शितमन्त्रश्रुतानि पदानि अन्यत्रापि यथाक्रमेण दर्शयामः— १.७६.४ होत्रम्, तत्रैव पोत्रम्, ८.४०.११ ऋत्वियम्, १.१५.३ नेष्टः, १०.१४.१३ अग्निप्रम्, १.८४.६ प्रशास्ता, १.२२.१६ अध्वरीयताम्, १.८०.१ ब्रह्मा, १.१२.६ गृहपतिः, १.१.७ दमे इति। एवं हि होत्रादिपददर्शनात् तत्तन्मन्त्राणां यज्ञकालजत्वसिद्धेऽपि प्रथममण्डलादिभ्यो द्वितीयं मण्डल माधुनिक मिति वक्तु कथ मपि न युज्यत इति सुव्यक्तम्॥

एवं दशममण्डलस्य ऋक्परिशिष्टरूपत्वं कल्पयितुमेका चाकाशवल्ली अवलम्बिता तैर्भाषापार्थक्यादिर्नाम; दशममण्डलस्य हि भाषा मन्त्रार्थगततात्पर्याणि च प्रथममण्डलादिभ्यः सर्वथा पृथगेवेत्यस्य परिशिष्टरूपत्वं स्वीकार्यं मिति तदाशयः। किं मत्र ब्रूमो वयम्? अस्मच्छ्रुतिषु हि दशममण्डलस्य मण्डलान्तराणाञ्च एकविधैव भाषा प्रतीयते, अस्मद्दृष्टिषु च तथैकविध

मैव तात्पर्य्यं मिति न जानीमहे केषा बुद्धिमालिन्यं केषां वा श्रवणेन्द्रियदुष्टत्व मिति ।

वस्तुतो वेदाना शतकत्वपचे मन्त्राणा बहुकर्त्तृकत्वात् अनेककालजत्वाच्च भाषातात्पर्य्ययो. पार्थक्यन्तु प्रतिमन्त्रगत मेवेत्यन्यदेतत् ; मण्डलगतपार्थक्यन्तु असम्भव मेव मण्डलरूपेण ग्रन्थाविर्भावाभावात् । न च सर्व्वास्वेव शाखासु एकविधपरिच्छेदविभागोऽपि विद्यते ; तथाच या नाम शाखा अष्टपरिच्छेदपरिच्छिन्ना , तत्रैव सर्वे मन्त्रा , तस्या कथ दशममण्डलस्य परिशिष्टत्व परिरच्येत ? इदानीमप्रचलितेय हि संहिता , शाकलबाष्कलेतिशाखाद्वयमिलितेत्येव श्रुयते ; एतस्या द्विविधपरिच्छेदविभागदर्शनात् । तदत्राष्टकाध्यायवर्गविभागो नून मेकशाखाकृत मण्डलानुवाकसूक्तविभागस्त्वपरशाखाकृत स्फुट मेव प्रतीयते । अष्टकाध्यायवर्गविभक्तसंहिताया किञ्चित् पाठाधिक्य मपि श्रूयते । वालखिल्यमन्त्रा अपि तस्या मेवाधीयन्ते । न च ते मन्त्रा खिलात्मिका ; तेषा मपि पदपाठाद्यध्ययनाध्यापनश्रवणात् , "अथ वालखिल्या विहरेत् (उ० २. २. १-२२.)"-इत्याद्याश्वलायनीयश्रौतविधानादिस्मरणात् , निरुक्ते निगमत्वेन व्यपदेशाच्च । अतएवाह च षड्गुरुशिष्य — 'बाष्कलके संहितापाठे अत. शाकलात् अधिकान्यष्टौ सूक्तानि'-इति । भगवता सायणाचार्य्येण तु शाकलसंहिता मधिकृत्यैव व्याख्यात ऋग्वेद इति नैव व्याख्यातानि वालखिल्यानि ; परं स्वीकृतान्येवैतरेयकभाष्ये तान्यष्टाविति । अपि यथैवान्यत्रान्यत्र, तथैवेहापि वालखिल्याना मष्टसूक्तात्मकत्व मेका दशसूक्तात्मकत्वञ्चेति सूक्तसङ्ख्याविषयकोऽप्यस्ति पाठभेद । तदेव मष्टकविभागे बाष्कलके दशममण्डल मेव नास्तीति कथङ्कारं

मसीत् तस्य परिशिष्टत्व मिति विचार्यं सुधीभिरेव [ शाकलबाष्कल-वालखिल्यादीनां वर्णन मस्माभिः कृत मैतरेयालोचने, करिष्यमा-णश्च पुनर्ब्राह्मणालोचने, तत् तत्र-तत्रैव द्रष्टव्यं विशेषतः ] ।

एवञ्च ऋक्संहिताया नवमण्डलात्मकत्व मेवासीत्, ततोऽभवद् दशमण्डलात्मकत्व मिति कथनं यथा सुकरम्; तथा नेदम्—पुरा सप्तमाष्टकीयपञ्चमाध्यायाष्टाविंशतिवर्गान्त मेव ऋक्संहि-तायाः समाम्नान मासीत्, ततस्तदष्टकीयतदध्यायैकोनविंशतित-मादयो वर्गाः प्रणीताः, अष्टमाष्टकश्च समग्रः प्रणीत इति । न च निरुक्ते दाशतयीति व्यपदेशाद् दशममण्डलात्मकत्व मेव सर्वर्क्-शाखासंहिताना मिति वाच्यम्; तत्र सर्वत्र दाशतयीति शाकल-शाखासंहिताया एव ग्रहणे बाधाभावात् । किञ्च प्रथमादि-मण्डलेषु श्रुतानां बहूनां सूक्तानाम्, दशममण्डलस्थितानाञ्च बहूनां सूक्तानाम्, द्रष्टारोऽभिन्ना एवावगम्यन्ते; परिशिष्टत्व-वादिनां मते तत् कथ मुपपद्येतेत्यपि विचारयन्त्वत्र माध्यस्थ्य-पद मादधाना एवेति ॥

एवं सामवेदीयर्ङ्मन्त्राणा मृक्संहितात उद्धृतत्वकथन मपि प्रौढ़िवादमात्रम्; ऋक्संहिताया मपि छन्द इति श्रवणात् । तथाहि ( १०. ८०. ६. )—

"तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत—इति ।"

अस्या मृचि छन्दांसीतिपदेन सामवेदीयर्चा मेव ग्रहण मिष्टम्; तथैव सर्ववैदिकप्रसिद्धेरिति प्रतिपादितं पुरस्तादपि (१६१ पृ०); छन्द इति हि सामवेदीयार्चिकग्रन्थानां तथा तत्तद्ग्रन्थीयमन्त्राणां च नाम इति कोऽधीतवेदो न जानाति ?

पाणिनिना च विशेषतः सामवेदीयच्छन्दोग्रन्थस्थमन्त्रा एव छन्दस्त्वेन लक्षिताः। तथाहि — "सोऽस्यादिरिति छन्दसः प्रगाथेषु" –इति (४. २. ५५.) तत्सूत्रम्; "पङ्क्तिरादिरस्येति पाङ्क्तः प्रगाथः"–इत्यादीनि च तदुदाहरणानि। प्रगाथास्तु सामवेदे एव दृश्यन्ते, नान्यत्र; विहिताश्च ते सामवेदीयताण्ड्यमहाब्राह्मणे एव।

किञ्च यतश्च साममूलमन्त्राणां सर्वेषामेव छन्द इति चिरासमाख्या, अत एव तेषां गानकारिणः सामवेदिनश्छन्दोगा एवेत्युच्यन्ते, न तु ते क्वचित् केनचिदपि ऋग्गा इति। यतश्च सामवेदिन एव छन्दोगा इत्युच्यन्ते, तत एव सामवेदीयब्राह्मणग्रन्थानामुपनिषदाञ्च छान्दोग्यमिति समाख्या प्रसिद्धैव। विहिता च सा पाणिनिना "छन्दोगौक्थिक"–इति (४. ३. १२८)। एवञ्च यच्च केनचिदुक्तम् 'वेदसंहितासु ये केचन प्राचीनतमश्लोकाः, त एव छन्दांसि इत्यभिधीयन्ते; ततोऽप्राचीना एव मन्त्राः' –इति, तदिदमपि जलमध्यगतमसीचोदवद्विलीनमेव न वेत्यपि विचारयन्तु त एव।

नन्वेवमपि ऋक्साम्नोरुत्पत्त्यनन्तरमेव छन्दसामुत्पत्तिश्रवणात् सामवेदीयर्चां ऋक्तोऽवरजत्वं यथावत् स्थितमेवातः 'स्नातेऽपि लङ्घने न शान्तो व्याधि'–इति चेदत्र ब्रूमः,— तस्माद्यज्ञादिति मन्त्रे नैव क्रमोत्पत्तिदर्शनमिष्टम्; अन्यथा हि ऋगुत्पत्त्यनन्तरं सामोत्पत्तिः, तदनन्तरञ्च छन्दउत्पत्तिः इत्येवं मन्तव्यं स्यात्, तथाप्रसिद्धमम्भवदोषग्रस्तं भवेदेव। तथाहि— ऋग्वेदीयर्चोऽवलम्ब्यैव सामानि गीतानि इति चेत् ते नून मृग्गा इत्येव प्रसिद्धाः स्युः, न च तथा प्रसिद्धिः दृश्यते क्वचिदपि लोके वेदे वा; प्रत्युत छन्दोनामतः प्रसिद्धानामेव साम्नां दीर्घा गातव्या-

दैव सामवेदीयाः छन्दोगा एवोच्यन्ते ; एवं साम्नां प्रथम सुत्पत्तिस्तत्सम्मूलानाञ्छन्दसा मित्यप्यसम्भव एव। तस्मात् यदैव यतश्च ऋचः प्रादुरभूवन्, तदैव ततश्च सामानि च, साममूलच्छन्दांसि च, यजूंषि चेत्येव तन्मन्त्राशयस्तथा च सहोत्पत्तिरेव। एतदेवाथर्ववेदीयेऽत्र मन्त्रे सहशब्दश्च श्रूयते ( ११. ७. २८ )—

"ऋचः सामानि छन्दांसि पुराणं यजुषा सह।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रिताः"–इति।

अत्र स्पुतः पुराणशब्द, प्राचीनैतिह्यसाम्यास्यानपरमन्त्रवाचकः। तदेतस्मान्मन्त्राम्नानाच्च सर्वविधमन्त्राणां सहोत्पत्तिः सुव्यक्तैव।

किञ्च यदि नाम ऋक्संहितात एव सामयोनिमन्त्रा उद्धृताः स्युः, तर्हि उद्धृतिक्रमत एवेह सामवेदे मन्त्रा दृश्येरन्; न च तथा दृश्यन्ते। अपरञ्च, एवं मपि बहवो मन्त्राः सामवेदे सन्ति, येषां ऋक्संहितायां श्रवणं नास्त्येव। अथापर मपि, यथेयमृक्संहितायां सूक्तानि, तथैवेह दशदादीनि ; ततश्च कुत कस्योद्धरणं किम्मानकं भवेदिति च स्याद् विचार्य मेव, विचारकाले तु विनिगमकाभाव एव मूर्तिमान् दरीदृश्येतेत्यत्र च कः संशयः। वस्तुतः पुरा ऋगादिलक्षणाः सर्व एव मन्त्रा विकीर्णा एव आसन्, ततो यदैव ऋक्चयनेन ऋग्वेदीयसूक्तानि सङ्गृहीतानि, तदैव तथैव सामवेदीयान्यपि दशदादीनीति किं चित्रम् ? एकस्या एव हि ऋचश्चयन मुभयत्रैककालेऽपि सम्भवत्येवेत्यपास्तैवोद्धृतिमत मिति दिक्॥

अथर्वविचारस्तु प्रदर्शित एव पुरस्तात् ( १४०–१५८ पृ० )॥

[ ब्राह्मणम् ] ततो ब्राह्मणस्यास्ति किं लक्षण मित्यन्विच्छामः तत्राम इदं मापस्तम्बसूत्रम्— "कर्मचोदना ब्राह्मणानि"–इति।

कर्मचोदना विधिरिति त्वनर्थान्तरम्। विधिश्चैव द्विविध इत्याह सायण। तथाहि— "विधिरपि द्विविध, अप्रवृत्तप्रवर्त्तनम्, अज्ञातज्ञापनञ्चेति। 'आग्नावैष्णव पुरोडाश निर्वपति दीक्षणीयायाम्'-इत्याद्या कर्मकाण्डगता विधय अप्रवृत्तप्रवर्त्तका; 'आत्मा वा इद मेक एवाग्र आसीत्'-इत्यादयो ब्रह्मकाण्डगता अज्ञातज्ञापका '-इति (ऋ० स० भा० भू०)।

एतस्यैव ब्राह्मणस्य शेषरूपवाक्यान्येवार्थवादा उच्यन्ते इत्याह चापस्तम्ब। तथाच तत्सूत्रम्— "ब्राह्मणशेषोऽर्थवाद "-इति। शेषशेषिभाव अङ्गाङ्गिभावश्चेत्यनर्थान्तर मीमासकानाम्। तत्र प्रतिपादितम् "अथात शेषलक्षणम् (३ १ १)"-इत्यधिकृत्य "शेष परार्थत्वात्, द्रव्यगुणसस्कारेषु बादरि, कर्मस्वपि जैमिनि, फलञ्च पुरुषार्थत्वात्, पुरुषश्च कर्मार्थत्वात्"-इति (३ १ २-६)। विधिभिरङ्गाङ्गिभावश्चार्थवादाना तै मन्यन्त एव। तथाहि— 'आम्नायस्य क्रियार्थत्वादानर्थक्य मतदर्थाना तस्मादनित्य मुच्यते'-इत्यादिभि षड्भि सूत्रै (१ २ १-६) अतदर्थानाम्— अक्रियार्थानाम्— अर्थवादानाम् आनर्थक्यम्, तस्मात्तेषा मनित्यत्व माशङ्क्य "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीना स्यु"-इत्यादिभि षड्भि सूत्रै (१२. ७-१२.) विधीनाम्— 'वायव्य श्वेत मालभेत'-इत्यादीनाम् ब्राह्मणवाक्याना स्तुत्यर्थत्वेनैव "वायुर्वै क्षेपिष्ठा देवता"-इत्येवमादीना मर्थवादवाक्याना सार्थकता, तस्मान्नित्यता च सिद्धान्तिता। एतदेवाभिप्रेत्याह सायणाचार्य — 'द्विविध ब्राह्मणम्— विधि, अर्थवादश्च -इति।

अर्थवादाना मपि ब्राह्मणत्वं स्वीकृत निरुक्ते च। तथाहि—

"प्रागिव मह्याचिग्गी निर्जयानीति च ब्राह्मणम् ( १२. २. ३. )" –इत्येवमादीनि द्रष्टव्यानि। अपि चार्थवादानां ब्राह्मणत्व मुररी-कुर्वतैव तेन तेषां तत्त्वख्यापनेऽप्रामाण्यञ्च ध्वनितं तत्रैव। तथाहि– "बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति(७. ७. २.)"–इत्यादि ॥

अत्र खेतदपि ज्ञातव्य मस्ति,— सायणस्य प्रदर्शितप्रकारं विधिद्वैधन्तु वेदान्तिकाना मनुरोधतः प्रौढिवादमात्र मिति ; कर्मचोदनैव विधिरिति आपस्तम्बादियाज्ञिकानां जैमिन्यादि-मीमांसकानाञ्च सम्मतत्वात्। न हि केऽपि याज्ञिकाः "आत्मा वा इद मेक एवाग्र आसीत्"–इत्यादीनां विधित्वं मन्यन्ते ; अपि त्वर्थवादत्व मेव। अत एवोक्तं मीमांसा शालिकनाथीयप्रकरणपञ्चि-कायाम्— "केवलवस्तुवादी वेदभागो नास्ति"–इत्येवमादि, मन्यन्ते चात एव साङ्ख्याः— "दृष्टवदानुश्रविकः"–इति ॥

विध्यर्थवादयोः प्रकारभेदादीनि जैमिनीयादौ बाहुल्येन वर्णि-तानि ; लौगाचिभास्करेणार्थसङ्ग्रहे, लघ्वार्यजना च मीमांसा-परिभाषायां सङ्क्षेपेण निर्णीतानि; विधिविचारादिप्रकरणेषु प्रपञ्चि-तानि च ; तेभ्य एव विशेषतोऽवगन्तव्यानि ॥

मीमांसावृत्तिकारेण तु ब्राह्मणलक्षणान्येव सुदाहृतानि— 'इतिकरणबहुलम्', 'इत्याह्योपनिबद्धम्', 'आख्यायिकास्वरूपम्'– इति च। इमानि लक्षणानि प्रायिकाभिप्रायेणोक्तानि ; मन्त्रे-ष्वपि तथादर्शनात्, ब्राह्मणेष्वपि क्वचित्तदभावदर्शनाच्चातिव्याप्त्य-व्याप्तिदोषापत्तेरित्याहतुः शवरस्वामिसायणौ। जैमिनिस्तु सूत्रया-मास "शेषे ब्राह्मणशब्दः"–इत्येव ( २. १. ३३. )। "मन्त्राश्च ब्राह्मणानि वेदः, तत्र मन्त्रलक्षणे उक्ते परिशेषसिद्धत्वात् ब्राह्मण-लक्षण मवचनीयम्, मन्त्रलक्षणेनैव सिद्धम्,— यस्यैतल्लक्षणं न

भवति, तद् ब्राह्मण मिति परिशेषसिद्धं ब्राह्मणम्"–इति च तद्भाष्यम्। तदेवं निष्पन्न मेतत्— अभियुक्तानां समाख्यात एव ज्ञेयम्— एष मन्त्रः, एतद् ब्राह्मण मिति; अपि च नैव मन्त्रेण सम्भवेतां तयोर्लक्षणे; इतिकरणबहुलादिषु सर्वत्रैवाव्याप्त्यति-व्याप्तिदोषयोरनिवार्यत्वात्। अतः सुष्ठूक्तं सायणेन— "ईदृशे-ष्वत्यन्तविजातीयेषु समाख्यान मन्तरेण नान्यः कश्चिदनुगतो धर्मोऽस्ति यस्य लक्षणत्व मुच्येत"–इति। लक्षणाभावप्युदाहरणपरे प्राचीनपद्ये अपि। तथाहि—

"हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः।
परक्रिया पुराकल्पो व्यवधारणकल्पना॥
उपमानं दशैवैते विधयो ब्राह्मणस्य तु।
एतद्वै सर्ववेदेषु नियतं विधिलक्षणम्॥"–इति।

तत्र, (१) हेतुः— "शूर्पेण जुहोति, तेन ह्यन्न क्रियते"–इति।

(२) निर्वचनम्— "तद्दध्नो दधित्वम्"–इति।

(३) निन्दा— "उपावीता वा एतस्याग्नयः"–इति।

(४) प्रशंसा— "वायुर्वै क्षेपिष्ठा देवता"–इति।

(५) संशयः— "तद्व्यचिकित्सन् जुहवानीऽमा हौषाऽम्"।

(६) विधिः— "यजमानसम्मिता औदुम्बरी भवति"–इति।

(७) परकृतिः— "माषानेव मह्यं पचति"–इति।

(८) पुराकल्पः— "पुरा ब्राह्मणा अभैषुः"–इति।

(९) व्यवधारणकल्पना— "यावतोऽश्वान् प्रतिगृह्णीयात्, तावतो वारुणांश्चतुष्कपालान् निर्वपेत्"–इति।

एषाम मुदाहरणन्तु शबरस्वामिना नैव प्रदर्शितम्; तत एव लब्धविधेन सायणेनापि कथङ्कार भवेद् दर्शितम्? अथवा सैरथ-

प्रसाद एवात्र निदानम्। यद्यप्येतादृशोऽस्मादृशानां लेखनीचालन मुपहासास्पद मेव मन्मावेत्रास, तथापि कर्तव्यपरवशैः कथं नुपेक्षणीयं स्यादिद मिति यथाज्ञानं तत् प्रदर्श्यते— "स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वा ऽन्यत्रायतन मलब्ध्वा बन्धन मेवोपश्रयत, एव मेव खलु सोम्य तन्मनो दिशं दिशं पतित्वा-ऽन्यत्रायतन मलब्ध्वा प्राण मेवोपश्रयते; प्राणबन्धनं हि मन इति (छा० ब्रा० ८. ८. २)"–इत्येवमादिक मेवोपमानोदाहरणं भवेद् दृगम मिति ॥

यथावेद मप्यालोचनीयम्— ब्राह्मणग्रन्थेषु खल्वेतत्पदद्वयोक्तातिरिक्ताना मितिहासादीना मपि कतिविधानां वाक्याना मस्तित्व मुपलभ्यते। तथाहि छान्दोग्ये— "स होवाच ऋग्वेदं भगवोऽध्येमि ०—० इतिहासपुराणम् (८. १. ३.)"–इत्यादि। शतपथेऽप्यश्वमेधप्रकरणे— "अथाष्टमेऽहन् ०—० तानुपदिशतीतिहासो वेदः, सोऽय मिति किञ्चिदितिहास माचक्षीतैव मेवाध्वर्युः सम्प्रेष्यति (१२.)"–इति, "अथ नवमेऽहन् ०—० तानुपदिशति पुराणं वेदः, सोऽय मिति किञ्चित् पुराण माचक्षीतैव मेवाध्वर्युः सम्प्रेषति (१३.)"–इत्येवमादि। तैत्तिरीयेऽपि— "यद् ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीर्मेदाहुतयः (आ० २. ८. २.)"–इति। "ब्राह्मणानि कर्मचोदनाः— 'वायव्याए श्वेत मालभेत'–इत्यादयः। इतिहासाः ब्रह्माण्डादिनिरूपाः;— 'देवाः सुराः संयत्ता आसन्'–इत्यादयः। 'आत्मा वा इद मेक एवाग्रआसीन्नैवेह किञ्चनासीत्'–इत्यादीनि सृष्ट्यादिप्रतिपादकानि पुराणानि। कल्पाः कल्पसूत्राणि— प्रयोगप्रतिपादकानि। गाथाः गायन्ति-चोदिता मन्त्रविशेषाः;— 'योऽस्य

भवति, तद् ब्राह्मण मिति परिशेषसिद्धं ब्राह्मणम्"-इति च तद्भाष्यम्। तदेवं निष्पन्न मेतत्— अभियुक्तानां समाख्यान एव श्रेयम्— एष मन्त्रः, एतद् ब्राह्मण मिति; अपि च नैव मन्त्रेण सम्भवेतां तयोर्लक्षणे; इतिकरणबहुलादिषु सर्वत्रैवाव्याप्त्यति-व्याप्तिदोषयोरनिवार्यत्वात्। अतः सुष्ठूक्तं सायणेन— "इत्थं-स्वत्यन्तविजातीयेषु समाख्यान मन्तरेण नान्यः कश्चिदनुगतो धर्मो-ऽस्ति यस्य लक्षणत्व मुच्येत"-इति। तथाचाप्युदाहरणपरे प्राचीनपद्ये अपि। तथाहि—

"हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः।
परक्रिया पुराकल्पो व्यवधारणकल्पना॥
उपमानं दशैवैते विषयो ब्राह्मणस्य तु।
एतद्वै सर्ववेदेषु नियतं विधिलक्षणम्॥"-इति।

तत्र, (१) हेतुः— "शूर्पेण जुहोति, तेन ह्यन्नं क्रियते"-इति।
(२) निर्वचनम्— "तद्दध्नो दधित्वम्"-इति।
(३) निन्दा— "उपवीता वा एतस्याग्नयः"-इति।
(४) प्रशंसा— "वायुर्वै क्षेपिष्ठा देवता"-इति।
(५) संशयः— "तद्विचिकित्सन् जुहवानी३मा हौषा३म्"।
(६) विधिः— "यजमानसम्मिता औदुम्बरी भवति"-इति।
(७) परकृतिः— "माषानेव मह्यं पचति"-इति।
(८) पुराकल्पः— "पुरा ब्राह्मणा अभैषुः"-इति।
(९) व्यवधारणकल्पना— "यावतोऽश्वान् प्रतिगृह्णीयात्, तावतो वारुणाश्चतुष्कपालान् निर्वपेत्"-इति।

दशम मुदाहरणन्तु शबरस्वामिना नैव प्रदर्शितम्; तत एव लब्धविधेन सायणेनापि कयद्वारं भवेद् दर्शितम्? अथवा लेखक-

प्रमाद एवात्र निदानम्। यद्यप्येतादृशोऽस्मादृशानां लेखनीचालन मुपहासास्पद मेव सम्भवेत्नाम, तथापि कर्तव्यपरवशैः कथ मुपेक्षणीयं स्यादिद मिति यथाज्ञानं तत् प्रदर्श्यते— "स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वा ऽन्यत्रायतन मलब्ध्वा बन्धन मेवोपश्रयत, एव मेव खलु सोम्य तन्मनो दिशं दिशं पतित्वा-ऽन्यत्रायतन मलब्ध्वा प्राण मेवोपश्रयते; प्राणबन्धनं हि मन इति (छा० ब्रा० ८. ८. २.)"–इत्येवमादिक मेवोपमानोदाहरणं भवेद् दशम मिति ॥

अथावेद मप्यालोचनीयम्— ब्राह्मणग्रन्थेषु खल्वेतत्पदद्वयोक्ताऽतिरिक्ताना मितिहासादीना मपि कतिविधानां वाक्याना मस्तित्व मुपलभ्यते। तथाहि छान्दोग्ये— "स होवाच ऋग्वेदं भगवोऽध्येमि ०—० इतिहासपुराणम् (७. १. २.)"–इत्यादि। शतपथेऽप्यश्वमेधप्रकरणे— "अथाष्टमेऽहन् ०—० तानुपदिशतीतिहासो वेदः, सोऽय मिति किञ्चिदितिहास माचक्षीतैव मेवाध्वर्युः सम्प्रेष्यति (१२.)"–इति, "अथ नवमेऽहन् ०—० तानुपदिशति पुराणं वेदः, सोऽय मिति किञ्चित् पुराण माचक्षीतैव मेवाध्वर्युः सम्प्रेष्यति (१३.)"–इत्येवमादि। तैत्तिरीयेऽपि— "यद् ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीर्मेदाहुतयः (आ० २. ९. २.)"–इति। "ब्राह्मणानि कर्मचोदनाः— 'वायव्यां श्वेत मालभेत'–इत्यादयः। इतिहासाः ब्रह्माण्डादिनिर्माः;— 'देवाः सुराः संयत्ता आसन्'–इत्यादयः। 'आत्मा वा इद मेक एवाग्रआसीन्नैवेह किञ्चनासीत्'–इत्यादीनि सृष्ट्यादिप्रतिपादकानि पुराणानि। कल्पाः कल्पसूत्राणि— प्रयोगप्रतिपादकानि। गाथाः गायन्ति–चोदिता मन्त्रविशेषाः;— 'सोऽस्य

भवति, तद् ब्राह्मण मिति परिशिष्टसिद्धं ब्राह्मणम्"-इति च राद्धान्तम्। तदेव निष्पन्न मेतत्—अभियुक्तानां समाख्यात एव ज्ञेयम्—एष मन्त्र, एतद् ब्राह्मण मिति, अपि च नैव मन्तरेण सम्भवेतां तयोर्लक्षणे, इतिकरणबहुलादिषु सर्वत्रैवाव्याप्त्यति व्याप्तिदोषयोरनिवार्यत्वात्। अत सुष्ठूक्तं सायणेन—"ईदृशे-ष्वत्यन्तविजातीयेषु समाख्यान मन्तरेण नान्य कश्चिदनुगतो धर्मो ऽस्ति यस्य लक्षणत्व मुच्येत"-इति। स्वयावाप्युदाहरणपरे प्राचीनपद्ये अपि। तथाहि—

प्रमाद एवाऽत्र निदानम्। यद्यप्येतादृशोऽस्मादृशानां लेखनीचालन मुपहासास्पद मेव सम्भवेत्तस, तथापि कर्तव्यपरवशैः कथ मुपेक्षणीयं स्यादिद मिति यथाज्ञानं तत् प्रदर्श्यते— "स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वा ऽन्यत्रायतन मलब्ध्वा बन्धन मेवोपश्रयत, एव मेव खलु सोम्य तन्मनो दिशं दिशं पतित्वा-ऽन्यत्रायतन मलब्ध्वा प्राण मेवोपश्रयते; प्राणबन्धनं हि मन इति ( छा॰ ब्रा॰ ८. ८. २. )"–इत्येवमादिक मेवोपमानोदाहरणं भवेद् दशम मिति ॥

कौडा'-इत्यादयः ; यमगाथाभिः परिगायतीति विधानात्। नाराशंसी: नाराशंस्यः 'होतायज्ञस्यराशंसम्'-इत्याद्याः। ब्राह्मणान्तःपठितानामपि पुनरुक्तिः फलातिशयद्योतनार्थम्''-इति च सङ्गार्थं सायणीयम्। तत्त्वतस्त्विह कल्पाः कल्पसूत्रवीजानीत्येव वक्तु मुचितम्; अस्ति चात्र पाठान्तरता ? गाथाः खलु श्लोकबद्धाः प्रवादवाक्यरूपा ब्राह्मणग्रन्थेभ्योऽपि प्राचीना एव; ता एव च श्लोका इत्यप्युच्यन्ते; तद्यथा—"तदेषाभियज्ञगाथा गीयन्ते— 'यजिङ्गौवासखा सपत्नीकोऽप्यसोमप.। मातापितृभ्या मनृणार्थोऽजितिवचनाच्छ्रुतिः'-इति (ऐ० ब्रा० ७ २, ८,)"-इति। नाराशंस्यस्तु नरस्तुतिश्रुतयः; तासु मन्त्रात्मिका', गाथात्मिकाः, ब्राह्मणात्मिकाश्च भवन्ति। तद्यथा— "अधि स्रुवः पणीना वर्षिष्ठे मूर्द्धन्नस्थात् (ऋ० सं० ४, ७, २६, ६, ७, ८.)"-इत्येवमादयो मन्त्रात्मिकाः; हिरण्येन परीवृतान् कृष्णान् शुक्लदतो मृगान्। मष्णारे भरतो ददाच्छत बद्वानि सप्त च (ऐ० ब्रा० ८ ४, ८,)" -इत्येवमादयो गाथात्मिकाः; "एतेन ह वा ऐन्द्रेण महाभिषेकेणोदमय आत्रेयोऽङ्ग मभिषिषेच तस्मादङ्गः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे (ऐ० ब्रा० ८, ४, ७,)"-इत्येवमादयश्च ब्राह्मणात्मिकाः। अथर्ववेदीयगोपथब्राह्मणे तु तत्त्वप्रकाशितातिरिक्ता बहुविधा एव श्रुतय उपलभ्यन्ते। तथाहि— "इमे सर्वे वेदा निर्मिताः; सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्यानाः सपुराणाः सस्वराः ससंस्काराः सनिरुक्ताः सानुशासनाः सानुमार्जनाः सवाकोवाक्याः (१, २, ९,)"-इति। तत्र कल्पाः खल्विदानीमनवसितकल्पसूत्राणां मूलान्येवोपलभ्यन्ते; रहस्यानि त्वारण्यकानि; स्वरा इति तु

इदानीमप्रचलितशिक्षाग्रन्थानां मूलानि ; निरुक्तानि चाप्रचलित-निरुक्तमूलान्येव ; अनुशासनान्यपि अप्रचलितछन्दोऽनुशासन-मूलानि ; संस्काराः खलु पदसंस्कारकशास्त्राणां पाणिन्यादीना मूलान्येव ; अनुमार्जनानि चाप्रचलितगुप्ततमवेदाङ्गज्योतिषस्य मूलानि ; वाकोवाक्यानि- तु प्रश्नोत्तररूपाणीति शङ्कराचार्यः, ऊहापोहादितर्कप्रतिपादकमीमांसाशास्त्रमूलान्येवेत्यपि केचित् । तदेवैषा मिह प्रदर्शितपदोक्तेषु दशसु कथं भवेत् समावेशः ? तदत्र बहुयत्नतोऽपि द्वयोस्त्रिसृणां वा समावेशानुभवेऽपि न तु सर्वेषां समावेश. सिद्ध्यतीति कथं स्यादेवंविधानां ब्राह्मणत्वम् ?

अतोऽत्रैवं ब्रूमः ।— आसीत् पुरा सर्वा एवेमाः श्रुतयो विकीर्णा इति । तत्र, विधायकवाक्यानाम् ,— 'वायव्यां श्वेत मालभेत'-इत्येवमादीनाम् , तथा प्रवर्त्तकत्वेन ( निषेधविध्यादौ निवर्त्तकत्वेन च ) 'वायुर्वै क्षेपिष्ठा देवता'-इत्येवमादीनाञ्च कर्म-चोदनापरत्वेनैव ब्राह्मणत्वम्; तदतिरिक्तानां मर्थतात्पर्यादिनिर्णय-कानां निरुक्तादीनां नैव वेदार्थवादोपयोगित्वेनार्थवादत्वम् । तयोस्तु प्राचीनपद्धयोः ब्राह्मणभेदा एव निर्दिष्टाः, न त्वर्थवादभेदाः "द्वै-वैते विषयो ब्राह्मणस्य तु । एतद्ध सर्ववेदेषु नियतं विधिलक्ष णम्"-इत्युक्तेः । विधि. कर्मचोदना इत्यनर्थान्तरम् ; "कर्म-चोदना ब्राह्मणानि"-इति हि आपस्तम्बसूत्रम् । अर्थवादशास्त्राणि खलु निरुक्तादीनि ब्राह्मणतो विभिन्नान्येव, अतएवोक्तं द्वितीयं सूत्र मापस्तम्बेन— "ब्राह्मणशेषोऽर्थवादः"-इति । ब्राह्मणेभ्यो-ऽवशिष्टो वेदार्थप्रसक्तम् विधिवाक्यमह यथार्थवाद इत्युच्यते इत्येव च तस्यार्थः । यथा चाह जैमिनिः— "शेषे ब्राह्मणशब्दः ( ८. १. ३३. )"-इति । न च तत्रावगम्यते मन्त्रस्यैव भागविशेषो

ब्राह्मण मिति, अपि तु गद्यत एव मन्त्रातिरिक्तो वेदभागो ब्राह्मण मिति, तथैवेहापि गद्येनैव ब्राह्मणातिरिक्तो मन्त्रमन्त्रणविधुरो वेदभागोऽर्थवाद इति। सिद्ध मित्थ वेदत्रैविध्यम, — मन्त्र, ब्राह्मणम, अर्थवाद इति। अत एव वामवद्वेदस्त्रयीतिव्यपदेश भाक्। सायणीय मेतद्वचनञ्चास्माक मनुकूल मेव— "तदेव वेदे विद्यमानाना त्रयाणा मन्त्रविध्यर्थवादभागाना अप्रामाण्य कारणाभावाद् बोधकाना तेषा प्रामाण्यस्य स्वतस्त्वाङ्गीकारात् कृत्स्नस्यापि वेदस्य प्रामाण्य सिद्धम्"–इति (ऋ॰ स॰ भा॰ भू॰)।

यद्यप्यैतरेयादिग्रन्थेषु विध्यर्थवादावुभावेव स्त, पर विधीना बाहुल्यादेव ब्राह्मण मित्येव ते व्यपदिश्यन्ते, यथाच यजु मन्त्रिताया ऋग्यजुषोरुभयोरपि विद्यमानत्वेऽप्याख्यायत एव यजुरिति यजुषा बाहुल्यात्। तथा ह्यैतरेये बहव एव गाथा प्रमाणत्वेनो ल्लिखिता दृश्यन्ते, तैत्तिरीये च शिक्षादयो बहव श्रूयन्ते, तथा छान्दोग्ये ऽपि छन्दोऽनुकीर्त्तनानि च, गोपथे तु "ओङ्कार पृच्छाम को धातु"–इत्यारभ्य "कि ज्योतिष कि निरुक्त कि स्थान का प्रकृति कि मध्यास मिति षटत्रिंशत् प्रश्ना (१ १ २४)"– इत्यत्रग्रन्थसन्दर्भेण षडङ्गपरिचया व्यज्यन्त एव, तत्तृतीये तु खण्डे 'षडङ्गविदस्तत्तथाधीमहे'–इति चाक्षात स्फुटम्।

तस्मादिद मेव युक्त मिवाभाति,— एतरेयादिग्रन्थाभिधावात् प्रागेव ब्राह्मणार्थवादेतिहासेतिहासगतानि सर्वाण्येव वाक्यान्यासन् विकीर्णानि, तदनुसन्धेव कृत सुसम्बद्ध्य तापस्त्वर्थेन तत उत्तर विकीर्णानि तान्येव सङ्गृह्य यागक्रमेणा पौर्वापर्य मनुसृत्यैव ग्रन्थीकृतानि महीदासादिभि, तत।अयव सवशा मेव निर्वचना दीना समभवद् ब्राह्मणान्तर्गतत्व तथा तत्र स्वैव व्यपदेशभाक्त्व,

तत एव जैमिनिर्विध्यर्थवादयोरुभयोरेव ब्राह्मणत्व मुररीकृत्य तथैव सूत्रयामास तच्चच ? मिति ॥

न चैष ब्राह्मणभागः शाखा भेदानुगतोऽपि विभिन्नत्व मागतः, प्रत्युतः द्वयोर्बह्वीनां वा शाखाना मेक मेव ब्राह्मणम्। एकस्या अपि शाखाया दृश्यते चैकं ब्राह्मणम्। एवञ्चेदानीं सर्व्वशाखा ब्राह्मणसङ्घातस्तन्नामानि च सुदुर्ज्ञेयानि साम्प्रतं हि ऋग्वेदस्य ऐतरेयकं कौषीतकञ्च द्वे एव ब्राह्मणे अस्माभि र्दृष्टे।

यजुर्वेदस्यतु शुक्लयजुषो काण्वमाध्यन्दिन्यो र्द्वे शतपथब्राह्मणे दृष्टे। कृष्णयजुषः खलु तैत्तिरीय मेवैकं दृश्यते। आपस्तम्ब-ब्राह्मणस्यापि विद्यमानता गम्यते। चरकाध्वर्य्युसु मैत्रायन्या शाखायाञ्च ब्राह्म मस्तीति श्रुतम्।

सामवेदीयत्रयोदशशाखानान्तु दशैव ब्राह्मणग्रन्था इति गम्यते। अतएव तर्पणविध्यादौ तेषाम् प्रवक्तृणांनामान्येवमभिधीयन्ते—

शटि', भाल्लवी, काल्लवी, ताण्ड्यः, वृषाणकः, रुरुः, शम-बाहु', अगस्त्यः, वष्कशिराः, हुहुः,—इत्येते मे प्रवचनकर्त्तारः स्वस्ति कुर्व्वन्तु तर्पिताः स्वस्ति कुर्व्वन्तु तर्पिता' इति। तत्र च कौथुम-शाखिभिस्ताण्ड्य मेवाधीयते, ताण्ड्यशशभूतानि ताण्ड्यपरिशिष्ट-भूतानि वा अनुब्राह्मणानि वा अपराण्यपि समाधीयन्ते च; तेषां नामानि यथा,—षड्विंशब्राह्मणम्, सामविधिब्राह्मणम्, आर्षेय-ब्राह्मणम् वंशब्राह्मणम्, दैवताध्यायब्राह्मणम्, संहितोपनिषद्-ब्राह्मणम्, छान्दोग्यब्राह्मणञ्चेति। अत्र च षड्विंशब्राह्मणस्याप्त-प्रपाठकः अद्भुतब्राह्मणोच्यते तथा छान्दोग्यब्राह्मणस्य आद्यप्रपाठक-द्वयम् मन्त्रब्राह्मणञ्चाभिधीयते। विशेषतस्तु मत्कृते "मन्त्रसञ्जी-वनी" नाम मन्त्रब्राह्मणटीकाया द्रष्टव्यम्।

ब्राह्मण मिति, अपि तु गम्यत एव मन्त्रातिरिक्तो वेदभागो ब्राह्मण मिति; तथैवेहापि गम्यतेव ब्राह्मणातिरिक्तो मन्त्रवचनविधुरो वेदभागोऽर्थवाद इति। सिद्ध मित्थं वेदत्रैविध्यम्;— मन्त्र, ब्राह्मण, अर्थवाद इति। अत एव वामवद्वेदस्त्रयीतिव्यपदेश-भाक्। सायणीय मेतद्वचनञ्चास्माक मनुकूल मेव— "तदेवं वेदे विद्यमानानां त्रयाणां मन्त्रविध्यर्थवादभागानां मप्रामाण्य-कारणाभावाद् बोधकानां तेषां प्रामाण्यस्य स्वतस्त्वाङ्गीकारात् कृत्स्नस्यापि वेदस्य प्रामाण्यं सिद्धम्"—इति (ऋ० सं० भा० भू०)।

यद्यप्यैतरेयादिग्रन्थेषु विध्यर्थवादावुभावेव स्तः; परं विधीना बाहुल्यादेव ब्राह्मण मित्येव ते व्यपदिश्यन्ते, यथाच यजु संहि-ताया कृष्णयजुषोरुभयोरपि विद्यमानत्वेऽप्याख्यायत एव यजुरिति यजुषां बाहुल्यात्। तथा ह्यैतरेये बह्व्य एव गाथाः प्रमाणत्वेनो-ल्लिखिता दृश्यन्ते, तैत्तिरीये च शिक्षादयो बहवः श्रूयन्ते, तथा छान्दोग्ये ऽपि छन्दोऽनुकीर्त्तनानि च, गोपथे तु "ओङ्कार पृच्छामः को धातु."—इत्यारभ्य, "किं ज्योतिष किं निरुक्तं किं स्थान का प्रकृति किं मध्यास्य मिति पट्त्रिंशत् प्रश्ना. (१. १. २४.)"— इत्यन्तग्रन्थसन्दर्भेण षडङ्गपरिचया व्यञ्यन्त एव; तत्तृतीये तु खण्डे "षडङ्गविदस्तत्तथाधीमहे"—इति साक्षात स्फुटम्।

तस्मादिद मेव युक्त मिवाभाति,— ऐतरेयादिग्रन्थाभिमतानि प्रायेण ब्राह्मणार्थवादेतिप्रभेदित्रयगतानि सर्वाण्येव वाक्यान्यत्र विकीर्णानि, तदनुमत्यैव कृत सूत्रलक्षणादय मापस्तम्बेन तत्र तत्रत्य विकीर्णानि तान्येव सङ्गृह्य यागकर्मणां पौर्वापर्य मनुसृत्येव ग्रन्थीकृतानि मद्दीदामदिमि; तत्तश्चश्यैव सर्वेषा मेव निर्वचना दीना ममवद् ब्राह्मणान्तर्गतत्व तथा तन्नाम्नैव व्यपदेशभाक्त्वञ्च,

तत एव जैमिनिर्विध्यर्थवादयोरुभयोरेव ब्राह्मणत्व मुररीकृत्य तथैव सूत्रयामास तच्चच इ मिति ॥

न चैष ब्राह्मणभागः शाखा भेदानुगतोऽपि विभिन्नत्व मागतः, प्रत्युतः द्वयोर्बहूनां वा शाखाना मेक मेव ब्राह्मणम्। एकस्या अपि शाखाय दृश्यते चैकं ब्राह्मणम्। एवञ्चेदानीं सर्व्वशाखा ब्राह्मणसङ्घातत्तन्नामानि च सुदुर्ज्ञेयानि साम्प्रतं हि ऋग्वेदस्य ऐतरेयकं कौषीतकञ्च द्वे एव ब्राह्मणे अस्माभि र्दृष्टे।

यजुर्वेदस्यतु शुक्लयजुषो काण्वमाध्यन्दिनयो र्द्वे शतपथब्राह्मणे दृष्टे। कृष्णयजुषः खलु तैत्तिरीय मेवैकं दृश्यते। आपस्तम्ब-ब्राह्मणस्यापि विद्यमानता गम्यते। चरकाध्वर्य्युषु मैत्रायण्या शाखायाय ब्राह्मण मस्तीति श्रुतम्।

सामवेदीयत्रयोदशशाखानान्तु दशैव ब्राह्मणग्रन्था इति गम्यते। अतएव तर्पणविध्यादौ तेषाम् प्रवक्तृणांनामान्येवमभिधीयन्ते—

शटि, भाल्लवी, काल्लवी, ताण्ड्यः, वृषाणकः, रुरुः, शमवाहु, अगस्त्यः, बष्कशिराः, हुहुः,—इत्येते मे प्रवचनकर्त्तारः स्वस्ति कुर्व्वन्तु तर्पिताः स्वस्ति कुर्व्वन्तु तर्पिताः इति। तत्र च कौथुमशाखिभिस्ताण्ड्य मेवाधीयते, ताण्ड्यशभूतानि ताण्ड्यपरिशिष्टभूतानि वा अनुब्राह्मणानि वा अपराण्यपि समाधीयन्ते च; तेषा नामानि यथा,—षड्विंशब्राह्मणम्, सामविधिब्राह्मणम्, आर्षेयब्राह्मणम् वंशब्राह्मणम्, देवताध्यायब्राह्मणम्, संहितोपनिषद्-ब्राह्मणम्, छान्दोग्यब्राह्मणञ्चेति। अत्र च षडविंशब्राह्मणस्यान्त्य-प्रपाठकः अद्भुतब्राह्मणोच्यते तथा छान्दोग्यब्राह्मणस्य आद्यप्रपाठक-द्वयम् मन्त्रब्राह्मणञ्चाभिधीयते। विशेषतस्तु मद्‌कृते "मन्त्रसञ्जीवनी" नाम मन्त्रब्राह्मणटीकाया द्रष्टव्यम्।

अथर्ववेदस्य त्वेक मेव गोपथ नाम ब्राह्मण मद्य यावदस्माभि र्दृष्ट मिति दिक् ॥

अथ दृश्यते चैको ग्रन्थो निदानसूत्राभिध सामवेदीयो दश प्रपाठक । तत्रादौ 'अथातश्छन्दसा विचय व्याख्यास्याम '-इत्या दिभि सामवेदच्छन्दोग्रन्थान्तर्गताना मृचा छन्दोविचया निर्णीता, तत 'अथात स्तोमान् व्याख्यास्याम (१ ८)'-इत्यारभ्य साम वेदीयस्तोभग्रन्थगतस्तोभा निर्णीता, तत 'अथात साम्नाम्नाना चत्वारो भागा (१ १२)'-इत्यारभ्य सामाम्नातपरपर्यायाणि सामनिधनानि निर्णीतानि, ततो द्वितीयाध्यायारम्भे सामवेदी योदृग्ग्रन्थादिविषया चर्च्चा चिन्तिता, तत्रैव पञ्चमखण्डादौ 'अथातो यज्ञस्थानानि (२ ५)'-इत्यारभ्य सामवेदीयकल्पग्रन्था ण्युक्तानि, ततस्तृतीये 'अथायऋमन्थिरन्तर्गाग भवति'-इति (३ ६) सामवेदीयमन्त्रेषु व्याकरणविषयश्च सूचिता, तत पुनरेव क्रतुविधयो महानाम्न्यादिविषयश्च प्रपञ्चिता, तत पञ्चमाध्यायान्तखण्डद्वये 'अथात सवत्सरवर्गाणां पञ्चसवत्सरवर्गा''-इति (५ ११-१२) ज्योतिषग्रन्थविषया कालादयोऽपि निर्णीता । ततश्च पुनरागमासि सामग्रन्थीयमाहन्द्रादिपर्वविषया, हृदद्य स्तरादिसामविषया, मखाहीनैकाहादिक्रतुसम्पादकविविधसामा दिविषयाश्च विषय प्रपञ्चिता । अत्रैव यथाप्रयोजन निरुक्त स्वरादिशिक्षाविधान च क्वचित् क्वचिदुपदिष्टश्च, पर न तथापि सर्वत तत् तत्तत्कथता प्रतिभाति । नापि निरुक्तोक्त स्थालशब्द निर्वचन सामशब्दनिर्वचनञ्चात्र यथाग पश्याम, अत इदानीं ममहमद्यचैट मपि ब्रूम ,— सर्वथा मैव वेदाना मिकैक निदान सूत्र मासीदैवेनर्हि तानि नुप्तानीव, मन्त्रेव सामदगौरराज्यौहि ।

तदेतेभ्य एव निरुक्तादीनि वेदाङ्गशास्त्राणि समुद्भूतानि ; इत्थमेव हि क्षुद्रतमन्यग्रोधबीजादिभ्यः प्ररोहन्तो न्यग्रोधादिमहामहीरुहा अपि ; अतएव चास्य शास्त्रस्य प्रथितं नाम निदानसूत्र मिति। निरुक्तकृताप्यसकृदेव प्रमाणत्वेनोपन्यस्तं ( ६. २. ६; ७. ३. ६. ) 'नैदाना.'–इति। एवं निदानसूत्रे बहुत्रैव अनुब्राह्मणनामकीर्त्तनं च श्रूयते। यथाष्टमप्रपाठकीयद्वितीयखण्डे— "षोडशिनोऽनु-

पञ्चेति। तत्र दैवताध्यायनामानुब्राह्मणे साम्नां देवताः सूक्ताः, आर्षेयनामानुब्राह्मणे ऋषयः, वंशनामानुब्राह्मणे सामवेदीयाचार्यवंशाः, संहितोपनिषन्नामानुब्राह्मणे संहितादिविषयाः, सामविधिनामानुब्राह्मणे नित्याग्निहोत्राणां रहस्यप्रायश्चित्तादिसाम्नां काम्येषु प्रयोज्यानां साम्नां च विधानानीति।

सायणाचार्येण तु दैवताध्यायादीना मपि ब्राह्मणत्व मेवाख्यातम्। तथाहि ताण्ड्यब्राह्मणादिभाष्यभूमिकादौ— "अष्टौ हि ब्राह्मणग्रन्थाः प्रौढ़ं ब्राह्मण मादिमम्। षड्विंशाख्यं द्वितीयं स्यात् ततः सामविधिर्भवेत्। आर्षेयं देवताध्यायं भवेदुपनिषत्ततः। संहितोपनिषद् वंशो ग्रन्था अष्टाविमीरिताः"–इति। अत्र यदुच्यते प्रौढ़ मिति, तदेव ताण्ड्य मिति सामगप्रसिद्धम्; यच्चोच्यते षड्विंश मिति, तस्यैवान्त्याध्यायोऽद्भुत मिति कथ्यते; यदुच्यते उपनिषदिति, तदेव छान्दोग्य मिति सामगैर्व्यपदिश्यते। तत्र चाद्यद्वितीयाध्याययोर्मन्त्र इति समाख्याविशेषः शेषीयाधाऽष्टमाध्याया मष्टानाञ्चाध्यायाना मुपनिषदिति चेति॥

यत्राप्यद्विशामस्त्वेवम्,— सायणाचार्यस्तु नासीद् गुरुमुखाद्धीतसामविद्यः, ततोऽत्र नैव तद्वचनं प्रमाणं भवितु मर्हतीति; यतुभूयत एव हि सामवेदे तत्प्रायपूर्णाधिकत्वं प्रतिपद मेव। तथाहि प्रथमं तावत्— सामवेदीयार्चिकग्रन्थमात्राणां व्याख्यानेनैव समग्रसामसंहिता व्याख्याता भविष्यतीति विचारयतैव तेनोक्त मेतत् सामभाष्यावतरणिकायामादावेव— "मन्त्रस्मिन् सामवेदे ऋग्ब्राह्मणस्य व्याख्यातं योग्यत्वेऽपि सामब्राह्मणस्य न व्याख्यानयोग्यताकि"–इत्यारभ्य "अतः संहितायामुक्ता छन्दोगार्चिकसमाम्नाताः सर्वा अत्र सामानुक्रमेणैव व्याख्यायन्ते"–

इत्यलम्। न च तदनुमोदन्ते सामगाः; पदवाक्यस्तोभादियुक्तानां हि साम्नां मवत्येवार्थान्तरता, तदर्थज्ञानाय च सामग्रन्थव्याख्यानस्यापितरां कर्त्तव्यत्वात्। सामातिरिक्ताश्च मन्त्रा न हि सर्व एव निःशेषेण छन्दोग्रन्थे श्रुताः, यत् तेषा मेव व्याख्यानेन भवेयुर्व्याख्याताः सर्व एव ते; गानग्रन्थेष्वप्यारण्यके भाक्रन्दयेत्यस्या ऋचः, स्तोभग्रन्थे आयुर्विश्वायुरित्यादीनां यजुषां च श्रूयमाणत्वात्। तदेतत्राच स्फुट मवगम्यते, नाधिगतास्तेन गानस्तोभादिसामग्रन्थाः; अपि तु मीमांसादिशास्त्रत एवावगता तेषां विद्यमानतेति द्वितीयम्। तत्रैवोक्त मपर मपि— "न च तासां (ऋचाम्) क्रतुषु स्वातन्त्र्येण विनियोगोऽस्ति"—इति। तदपि भ्रमविजृम्भित मेव; ऋक्षयाना मपि हृद्रदादिस्तोमानां क्रतुषु विनियोगदर्शनादिति तृतीयम्। यच्चोक्तम्— "तासा मृचां क्रमव्यत्यासेन बह्वृचैरप्यधीयमानत्वात्तदीयानुक्रमणिकोक्तानि ऋष्यादीन्येवात्रानुसन्धेयानि"—इति, तदपि तस्यैकदेशदर्शित्व मेवावेदयति; बह्वृगनधीताना मप्यृचा मिह विद्यमानत्वात्, सामवेदीयर्षा मृष्यादिवरिज्ञानाय नैगेयनामग्रन्थाना प्रामाण्यतरत्वाच्च; सन्ति चानेकत्र मतभेदाः अनुक्रमणीनैगेयशास्त्रयोरिति चतुर्थम्।

तत्रैवानुपद मुक्तम्— "काण्डत्रयात्मको योयं छन्दोनामकः संहिताग्रन्थः"—इति, तदप्यसङ्गत मेव; सामवेदे— सामसंहितासु, आर्चिकसंहितासु, ब्राह्मणेषु वा न क्वापि हि तैत्तिरीयादाविव काण्डविभागो दृश्यते; अपि तु सर्वास्वेव संहितासु पर्वेति, ब्राह्मणेषु तु पञ्चिकेति च। तदत्र पर्वत्रयात्मक इति वक्तव्ये यदुक्तं काण्डत्रयात्मक इति, तेन व्यज्यते तस्य तैत्तिरीयादावेव सततमुद्यमत्व मिति पञ्चमम्। एवं तत्रैवोत्तरत्र सर्वत्रैव 'प्रथमे

दर्शनि —इत्यादि वक्तव्ये "प्रथमे खण्डे"—इत्याद्युक्त मिति पश्यत ।

किं बहुना एतस्माच्च भाष्यसमालोचनादिद मेव प्रतीयते,— स ह्यात्मन खलु सर्ववेदभाष्यकर्तृत्वप्रतिपादनार्थैव अनधीताया अपि सामसंहिताया व्याख्याने प्रवृत्त प्राय स्वकृतात् ऋग्वेद भाष्यादेव यथायथ व्याख्यानान्युद्धृत्य प्रयत्नेनैव समस्त सम्पन्न सामभाष्यञ्चेति । वस्तुतो नैव तदेतद् बालक्रीडन मिव भाष्य साम भाष्य मिति मन्यते सामग कोऽपि । यच्च तस्माद् गम्यते, तत्तु लभ्यत एव हि ऋग्भाष्यत एव, यत्तु न लभ्यते ऋग्भाष्ये, तत्तावन्नास्ति च तत्रापीति किन्नृत मेतेन सामभाष्येणेति ।

[1] तत्त्वत खलु श्रीमान् सायणाचार्यो ह्यासीदधीततैत्तिरीय, ततस्तद्विषयकज्ञान मेव तस्य सञ्जात सुपदेशानुरूपम्, वर्द्धितञ्च, तत् ज्ञातिबुद्धगुरुगतविशेषपरिशीलनादिभि, अत एव तद्भाष्य नूनं मादरणीयतम सम्पन्नम्, अध्वर्युवेदविदा ऋग्वेदवित्त्व मपि न दुराप मिति ऋग्भाष्य मपि सम्यक् मेवादरणीयतरम्, ऋग्य जुषोर्व्याख्यातुस्तु ऋग्यजुर्मयस्यैवाथर्ववेदस्यापि व्याख्यान न सुदुष्कर मिति तस्यापि भाष्यस्य सम्यक्त्वेनादरणीयता, पर सामवेदस्तु गुरुमुखादनधीतो नैव भवेदुच्चार्योऽपि तद्बोधस्तु दूरपराहत एव। सामसंहिताया भाष्ये कर्त्तव्ये— 'हुप् हुप्', 'वि वि', 'थ थम्'—इत्यादिपदस्तोभयुक्ताना साम्ना व्याख्यानानि कर्त्तव्यानि, "आयुर्विश्वायुर्विश्वम्"—इत्यादियजुर्मात्राश्रिताना साम्नाञ्च व्याख्यानानि प्रदर्शयितव्यानि, सर्वत्रैव सामस्तु मूलत स्वरवर्णमात्रादिपरिवर्त्तनकारणानि यथायथ प्रदर्शयितव्यानि; कस्या योनौ कति सामानि किंस्वरूपाणि च तानि परिचाय्यानि, साम्ना मपेषा मेव यथायथ नामानि सप्रमाणानि दर्शयितव्यानि,

सद्योनीनाञ्च नामानि छन्दआदीनि चोपदेष्टव्यानि ; साम्नां देवता-दय यथायथं विज्ञाप्याः ; यत्र यत्र सामसु स्तोभोऽपि गीयते, तत्र तत्र ऋक्स्तोभयोः समावेशनियमादिकञ्च ग्राम्यं तत्तद्विधानानुसारतः ; प्रगाथग्रथन मपि यथास्थानं वर्णयितव्यम् ; ऋचाम् , स्तोमानाम् , स्तोभानाम् , साम्नाञ्च विनियोगादयः सर्वत्र ब्राह्मणं सूत्रञ्च प्रदर्श्यैव वक्तव्याः ; साम्ना प्रतिहारादिभागोपदेशाश्च सर्वंच वर्णयितव्याः ; तत्र स्तोत्रियानुरूपाणां निधनविचाराश्च विशेषतः प्रदर्शनीयाः ; १, २, ३, ४, ५, ६, ७, ८, र, उ, स्व, क, ॒, —, ऽ, इमानि च व्याख्येयानि ; मन्त्रमध्यगतानाञ्च २३४५, २३२, १२१, १११ २३४५ —इत्यादीनां मर्थाश्च बोधयितव्याः ; प्रतिसामान्ते च यदस्ति हु धू भ इत्यादयः, तेषा मर्थाश्च विज्ञाप्या एव ; अपरयोनिषु अपर-सामोत्पत्तिप्रभृतयश्चोदाहार्याः ; सामोपासनादयश्च ज्ञापितव्या इत्यलं प्रासङ्गिकेनेति ।

कामामित्यपि केचित्। तदेतत् सर्व मेव वेदानां मुमूर्षुदशात्व मेवावेदयति। हन्त। यदि ह्यत्र "स्वाध्यायोऽध्येतव्यः"-इत्यादि श्रुतेरादरः कार्यतो दृश्येत, यदि ह्यत्र "वेदः कृत्स्नोऽधिगन्तव्यः" -इत्यादिस्मृतेश्चादरः कार्यतो दृश्येत, तर्हि सर्वैरप्येत मेतत् ज्ञात मेव स्यादारण्यकं न व्याख्यात्मक मेव;— नापि ब्राह्मणान्त्यभागरूप मेव;— अपीच पाणिनीयतो बहुभागमयीति। तथाहि— बहूना मेवारण्यकग्रन्थाना मध्यायपरिगणनादेव ज्ञायते, नारण्यकग्रन्थोऽध्यायमात्र एवेति। यदि हि "पथ्यध्यायन्याय विहारमनुष्यहस्तिष्विति वक्तव्यम्"-इत्येतद्वार्त्तिकभाष्ये "आरण्यकोऽध्यायः"-इत्येकवचनान्तोदाहरणदर्शनादेवारण्यकग्रन्थाना मेकाध्यायात्मकत्व मेव मन्तव्य स्यात्, तर्हि तत्रैव "आरण्यकः पन्थाः "आरण्यको न्यायः, आरण्यको विहारः, आरण्यको मनुष्यः, आरण्यको हस्ती"-इत्येकवचनान्तोदाहरणानां दर्शनाच्च आरण्यक पथ न्याय-विहार मनुष्य हस्तिना मेकैकत्व मेवावधार्यं स्यात्; न च तथावधार्यते केनचिदपि प्रज्ञाविस्येन। तदेवं यथैव लोके पन्थानः, न्यायाः, विहाराः, मनुष्याः, हस्तिनश्च बहव एव सन्त्येव आरण्यकाः, तथैव वेदे अध्याया अपि बहवः सन्त्येमारण्यकाः; तथा सामवेदस्य छन्दोनामार्चिकमध्ये सामसंहिताग्रन्थेषु च सामारण्यकदर्शनादेव स्फुट मवगम्यते, नारण्यकग्रन्थो ब्राह्मणे एवोपनिबद्धो, नापि परिशिष्टरूप एवेति; सामारण्यकमन्त्राणां हि सामसंहितामध्यस्थत्वेन तत्र न कस्यापि विप्रतिपत्तिवाक्प्रवृत्तिमत्त्वं, नैषां परिशिष्टता माशङ्कितु मपि न भवेत् कोऽपि सक्षमः। "अरण्यान्मनुष्ये"-इति (४. २. १२९.) पाणिनीय एतेन आरण्यको मनुष्य इत्येव सिद्ध्यति; न तु आरण्यकं

पन्थाः, आरण्यकोऽध्यायः इत्यादीनि पदानि ; अतोऽत्र तेषां साधनाय "पथ्यध्याय"-इत्यादिकं वार्त्तिक मपाठि कात्यायनेन ; एवञ्चोपपद्यते नासीत् पाणिनिकाले आरण्यकोऽध्याय इति ; सति हि तस्मिन् कथं न साधितस्ताद्टगार्यवरेणापीदृश आर्यप्रयोगः ? —इति चेत्, अत्रेदं ब्रूमः— आसीत् तदाप्यारण्यकोऽवश्य मेव ; सामसंहिता मध्यभागीयत्वादिनारण्यकस्यापि मन्त्रब्राह्मणात्मकत्वादेवातिप्राचीनत्वावधारणात् ; परं पाणिनिकाले नासीत् तथाविधमन्त्राणां ब्राह्मणानाञ्चारण्यक मिति व्यवहारः ; अपि तु मन्त्रात्मकारण्यकानां मन्त्रत्वेनैव ब्राह्मणात्मकानान्तु ब्राह्मणत्वेनैत्येव सम्भाव्यते । भगवतः पाणिनेः ताद्टगप्रयोगासाधने तद्वाच्यपदार्थानां तात्कालिकोऽभाव एव कारण मिति तु वक्तु मैव युज्यते ; तद्वादिनां हि पाणिनिकाले आरण्यकाः पन्थानो ऽपि नासन्,— आरण्यका हस्तिनोऽपि नासन्— अरण्येषु गावः पुरीष मपि नोदसृजन्,—महद्विम मपि नासीत्,— महदरण्य मपि नासीदित्येवादीनि च गलिकुठारन्यायेन स्वीकार्याण्येव ; पथ्यध्यायेति वार्त्तिकेन न हि अध्यायवाचक एवैक आरण्यकः प्रयोगः साधितः, नापि कात्यायनेन तद्विध मेक मेव वार्त्तिकं विरचित मित्यपि स्मर्त्तव्य मेवेति ॥

केचित्तु "सामध्वनावृग्यजुषी नाधीयीत कदाचन । वेदस्याधीत्य वाप्यन्त मारण्यक मधीत्य च ( ४. १२३. )"-इत्यत्र मनुवचने ऋग्यजुषामभ्यः पृथगेवारण्यकोल्लेखदर्शनात् नास्त्यारण्यकस्य तयोरत्व मित्याहुः, तदपि न साधीयः ; ब्राह्मणात्मकारण्यकस्यापि बोधनार्थं मेव तत्र तयोल्लेखात् । तथाहि तस्य च मनुश्लोकस्यायं अर्थः,— 'सामध्वनौ' सामगानावसरम् 'ऋग्यजुषी'

ऋचः यजूंषि वा 'कदाचन न अधीयीत' ; न हि समस्तराधन्तिगानानन्तरं वैस्वर्यादिश्रुतिमधुरा भवेत्, नापि शूद्रादाख्यकप्लुतः समस्तराधवतीयं तदानी मेव वैस्वर्यं कश्चित् समर्थः स्यादिति तादृशयत्न एवासत्फलोऽतस्तथा यतन मेव प्रतिषिध्यते। किञ्च 'वेदस्य अन्तम् आरण्यकम् अधीत्य' अपि ऋचो यजूंषि वा मन्त्रान् न अधीयीत ; तादृगारण्यकाध्ययनत एवाध्येतुः श्रोतृणाञ्च मनसा ब्रह्मगतत्वेन परिकृप्तत्वात् ततोऽपि ऋङ्मन्त्रयजुर्मन्त्रयोः पाठो निषिद्ध' ; न हि पूर्णोदरस्याम्रतेऽपि रुचिसम्भवः। अत्र च वेदस्य अन्त मारण्यक मित्युक्त्या नून मैतरेयकतैत्तिरीयकबृहदारण्यकादीना मेव ग्रहणं बोध्यम्, तेषा मेव ब्राह्मणात्मकवेदस्यान्तावयवत्वात् ; सामारण्यकमन्त्राणान्तु मन्त्रभागमध्यस्थितत्वेन वेदस्यान्तरूपत्वाभावादिहाग्रहण मेव ; परं पूर्वार्द्धे साम ध्वनावित्युक्तत्वैव तद्ग्रहणं सम्भव मिति सामारण्यकाध्ययनात् पर मपि ऋग्यजुर्लक्षणान् मन्त्रान् नाधीयीतेत्यर्थः। एवञ्च वेदेषु श्रुताना मारण्यकानान्तु वेदत्वं तदनुगतप्राचीनतमत्वञ्चासत मेव, प्रत्यक्षस्य बाधाभावात्।

ऐतरेयकपञ्चमारण्यकादीनान्त्ववेदत्वं सर्ववादिसम्मत मेव। तथा ह्याह सर्ववेदभाष्यकार' सायणाचार्यः स्वयम्— "महाव्रतस्य पञ्चविंशति मित्यादि पञ्चमारण्यकं सूत्र मेव ; अरण्ये एवैतदध्येय मित्यभिप्रेत्याध्येतार आरण्यकाण्डेऽन्तर्भाव्याधीयते" —इत्येवमादि। तदिदं यथा मन्त्रभागे सन्त्येव खिलरूपाः सौक्ताख्यात्मकमन्त्राः, परं न च ते सम्मिलिता मन्त्रभागावयवत्वेन ; तथैव ब्राह्मणभागेऽपि सन्त्येव पञ्चमारण्यकादीनि च, परं नैव तानि सम्मिलितानि ब्राह्मणभागावयवत्वेनेति। तत् तादृशीना

मा भूत् वेदत्व प्राचीनतमत्वञ्चेति, तदन्याधान्तु वेदात्मकारण्यकोपनिषदां वेदत्वं तथा प्राचीनतमत्वञ्चापह्नोतुं न कोऽपि क्षमेतेति सर्वं स्वीकार्यम् ॥

एव पाणिनिसूत्रेषु क्वापि वेदांशवाचकत्वेन उपनिषच्छब्दस्य प्रयोगादर्शनात् पाणिनीयतः पूर्वं मुपनिषदो नासन्नित्यप्याहुः केचिदाधुनिकाः, तदप्यस्माकं मतिविस्मयकर मेव, संहितासु पञ्चस्वेव, ब्राह्मणेषु च बहुषु विकीर्णरूपत्वेन बह्वीनां मेवोपनिषल्लक्षणवचनानां मीशावास्य मित्येवमादीनाम्, उपनिषदिति ब्राह्मणग्रन्थेषु प्रसिद्धानाञ्च प्रत्यक्षदर्शनात्। भगवता पाणिनिना उपनिषत्पदसाधनाय विशेषः कश्चन प्रयत्नो नोद्भावित इत्येव उपनिषदां माधुनिकत्वे बीज मिति लक्षिमतां मस्यक्षिषु धूलिनिक्षेपणाय यत्न इव। न हि सर्वतामुखसूत्रकारेणाचार्येण प्रतिपदसाधनार्थैव विभिन्नं सूत्रं कार्यम्। तथाच साधारणनियमत एव सिद्धे ह्युपनिषच्छब्दे विशेषवक्तव्याभावादेव न कृतं सूत्रान्तरमिति सुवच मेवात्र समाधानम्।

"ऋगयनादिभ्य"-इति (४ ३ ७३) सूत्रीये ऋगयनादिगणे 'वेतनादिभ्यो जीवति'-इति (४ ४ १२) सूत्रीये च वेतनादिगणे उपनिषच्छब्दस्य पाठोऽपि दृश्यते। इदानीमदलितस्यास्य गणपाठस्यापाणिनीयत्वस्वीकारेऽपि भाषीय पूर्वं कथमेव गणपाठोऽप्यपीत्यवश्य स्वीकार्य मेव, अन्यथा हि "ऋगयनादिभ्य"-'वेतनादिभ्य "-इत्यादिषु सर्वत्रैव आदिशब्दव्यवहार एवाचार्यस्य व्यर्थता मापद्येत। स्वीकृते तु तस्मिन् प्राचीनगणपाठे भाषीयैवोपनिषच्छब्द इत्यत्र मानाभावादुपनिषदामाधुनिकत्वपक्ष स्वामूल मिवाश्रयः। ऋगयनादीनां माकृति

गणत्वस्वीकारेऽपि पाणिनेरुपनिषच्छब्दाज्ञानं न सिध्यति ; विनिगमनाविरहात् । सति हि पाणिनेरुपनिषज्ज्ञाने "चेतनादिभ्यः"-इत्येव नोक्त्वा "उपनिषदादिभ्यः"-इत्येव ब्रूयादिति तु कुतर्क एव ; तथोक्ते हि पाणिनेश्चेतनज्ञानं नासीदित्यपि उच्येतैवेति तुल्यो न्यायः ।

किञ्च वेदांगवाचकोपनिषच्छब्दोच्चारणं पाणिनिना न क्वचिदपि कृत मित्यत एवोपनिषदां पाणिनीयपरभवत्व मनुमीयेत चेत् ,— कात्यायनेनापि तथा नोच्चारितम् , पतञ्जलिनापि तथा नोच्चारित मिति वार्त्तिकपाठात् महाभाष्याच्च परभवत्वं तासा मबाध मेव ; किं बहुनाद्यतनीयेऽपि क्वचित् व्याकरणे न दृश्यते उपनिषत्साधनाय यत्नविशेष इति नाद्यापि काचिदुपनिषदाविर्भूतेत्यपि वक्तुं युज्येतैव । अथैतादृशेऽपि वचने यदि कश्चित् श्रद्दधीत, तर्हि तादृशवचनेऽपि ते श्रद्धा विधत्ता मित्येवास्माकम् ।

वस्तुतस्तु इदानीं यावत्य उपनिषदः प्रथिता दृश्यन्ते , न च ताः सर्वा एव वेदोपनिषदः ; प्रत्युत तत्र सन्त्येव कतिपया वेदविद्भिर्वेदार्थतत्त्वोपदेशायैव स्वशिष्येभ्य उपदिष्टाः , उपनिषत्तुल्या इति उपनिषदिति गृहीताश्च शिष्टैः ; रामतापन्यादयो अन्यास्तु कैश्चिदर्वाचीनैरेव स्वसम्प्रदायमर्यादावृद्धये प्रणीताः , तासा मप्युपनिषत्त्व तु मन्यन्ते तन्मतानुगता एव ; अल्लेत्यादयस्तु सर्वथा अग्राह्या एव ; परं यास्तु मन्त्ररूपा ब्राह्मणरूपाश्च, ताः खलु पाणिनेर्जन्मतो बहु प्रागपि स्थिता इति ध्रुवम् ; अपि वेदविदा मुपदेशरूपाश्च याः काश्चिदुपनिषत्तुल्या उपनिषदित्येव मभिहिताः, तासां बह्व्योऽप्यासन्नेव पाणिनीयतोऽपि पूर्वम् ; नास्त्यत्र सन्देहलेशोऽपि । इह युक्तीश्च तिस्रोऽवलोकयाम. । तथाहि—

(१) अस्त्येकं सूत्रं पाणिनीयम्— "जीविकोपनिषदावौ

पम्ये"—इति ( १. ४. ७८. )। अनेन च सूत्रेण औपम्ये गम्यमाने एव जीविकोपनिषच्छब्दयोर्गतिसञ्ज्ञा विधीयते, तस्याञ्च गति-सञ्ज्ञायां "कुगतिप्रादयः"—इति ( २. २. १८. ) समासो भवति, "समासेऽनञ्पूर्वे क्त्वो ल्यप्"—इति ( ७. १. ३७. ) ल्यब्भावश्च तादृशसमासफल मिति चोदाहृतम्— 'जीविकाम् इव कृत्वा'—इति विग्रहे 'जीविकाकृत्य'—इति, 'उपनिषदम् इव कृत्वा'—इति विग्रहे 'उपनिषत्कृत्य'—इति चेति पदद्वयं वैयाकरण-सिद्धान्तकौमुद्यां भट्टोजिदीक्षितेन। तदित्थम् 'उपनिषत्कृत्य' —इत्यस्य पदस्य 'उपनिषद्वदन्यतुल्यग्रन्थकरणानन्तरम्'—इत्येवार्थः सर्ववैयाकरणसम्मतः। तदेवं पाणिनेः प्राचीनतमोपनिष-द्विषयकं ज्ञान मासीत्र वेति विचारस्तु दूरे आस्ताम्,— रचनया विषयेण तात्पर्येण च ये ग्रन्था उपनिषत्तुल्याः कृताः प्राक्पाणिनि-पूर्वतनैर्वेदोपनिषद्विद्भिः, तेषा मुपपनिषत्तुल्याना मपि बोध आसीत्तस्येत्यपि स्फुटम्। सिद्ध मित्थं कासाञ्चित् कृत्रिमोपनिषदा मप्यस्तित्व पाणिनिकालात् पूर्वस्मिन्नपीति, तदत्र कः सन्देह-स्तदानीं प्रकृतोपनिषदा मस्तित्वे इति विचारयन्तु धीमन्त एव।

( २ ) अस्ति चैतत् सूत्रम्— "पाराशर्यशिलालिभ्यां भिक्षु-नटसूत्रयोः"—इति ( ४. ३. ११०. )। एतच्च पाणिनिनैव कृत मिति मन्तव्यं चेत्, अवश्य मेवैतत्कर्तुः पाणिनेः भिक्षुसूत्रा-स्तित्वज्ञाने सन्देहाभावः स्वीकार्य एव ; स च ग्रन्थो वेदान्त-दर्शनबीजभूतः, उपनिषद एव च सञ्चरणं मिलुपनिषद्विषयक-ज्ञान मपि पाणिनेरवश्य मेव स्थित मिति सुतरां प्रतीयत एव।

( ३ ) ये तु निरुक्तकारस्य यास्कस्य पाणिनिपूर्वकत्वं स्वीकु-र्वन्ति, तेषां प्रबोधायेद मपि स्मारयामः— "यदा सुपर्णा यम-

तस्य"-इति ( ऋ०सं० १. १६४. २१. ) मन्त्रस्याधिदैवतव्याख्यान-पर्वेऽब्रवीद्यास्कः— "इत्युपनिषद्वर्णो भवति"-इति ( ३. २. ६. )। "ज्ञान मुपगतस्य सतो गर्भजन्मजरामृत्यवो निश्चयेन सीदन्ति, सा रहस्यं विद्या उपनिषदित्युच्यते ; उपनिषद्भावेन वर्ण्यत इति उपनिषद्वर्ण इत्यधिदैवतम्"-इति च;तदीयं भाष्यं दुर्गाचार्यकृतम्। अथैतर्हि तेऽपि ब्रुवन्तु पाणिनिपूर्वजस्य यास्कस्याप्युपनिषज्ज्ञान मासीच्चेत्, कथन्न तत्परजस्य पाणिनेरुपनिषज्ज्ञान मिति ?

तदेव मेतत्समालोचने प्रवृत्ताना मस्माक मेव मेव बोधः सम्पद्यते— ये केचनौपनिषदां पाणिनीयतोऽप्यर्वाचीनत्वं निरनयन्, ते नूनं "जीविकोपनिषदावौपम्ये"-इति [पाणिनिसूत्रस्य प्रकृत मर्थं नाविदन्, भिक्षुसूत्रमप्योऽपि तेषां न कदापि दृग्गोचरतां गतः, मदर्शितं यास्कीयवचनञ्च तदानीं तन्मनःसु नोदित मित्येव ते तथा निर्णेतु मभवन् समर्था इति शम्॥

---

( १० )

अथेदानी मियोऽपि प्रश्नः स्वतः समुदेति नाम,— तस्येतस्य वेदस्योत्पत्तिकालनिर्णयः शक्योऽशक्यो वास्माक मिति। कथन्नाम शक्यः ? कथं वा अशक्यः ? तदेवेह समासतश्चिन्तयाम इति यावत्।

पश्याम एव तावत्,— प्राचीनानां कालिदासादिग्रन्थाना मपि कालाः सुनिर्णीता इव, अतिप्राचीनानां भूगर्भोत्थितानां

मपि शिलास्तम्भादीनां भवत्येव कालनिर्णयः; वेदकालनिर्णये च केचिद्धीमन्तोऽपि यतितवन्त एवेति; तत एवैव मुत्पद्यतेऽस्माक मप्येषाशा, शक्योऽस्य कालनिर्णय इति। यदा तु स्मरामः,— अपौरुषेयोऽय मिति सिद्धान्तो मीमांसकानाम्; यदा चाध्यापयामः,— "नित्या वागुत्सृष्टा स्वयम्भुवा"–इति, "अग्नि-वायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्। दुदोह यज्ञसिद्ध्यर्थ मृग्यजुः-सामलक्षणम्"–इति, "वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे" –इत्येवमादीनि च स्मृतिवचनानि, तदैव तत्र हताशाः सम्पद्यामहे; अप्रतकालादिवैतस्य। कृतकत्वेऽपि मनुष्यनिर्मितत्वाभावेन वाय्वादितुल्यत्वे नैव फल मनुसन्धानस्य। मनुष्यनिर्मितत्वेऽप्यनद्ययुगीयत्वेन प्रविवृत्यन्तिनिर्णयसम्भावनाविरहात् स्यादशक्य एवैतत्कालनिर्णय इति॥

एष खल्वार्याणा मादिधर्मग्रन्थः; धर्मग्रन्थानां प्रायः सर्वेषा मेवोत्पत्तौ कथनकथनालौकिकः प्रवादो विद्यत एव; अस्योत्पत्तिविषयेऽपि तथैवैषः,— 'न केनचिदपि पुरुषेण प्रणीतो वेदः'–इति। मीमांसकानां कर्मगतानुगतफललाभवादिना मीश्वरविचारोऽप्यप्रयोजनीयः, परं वेदानां सर्वथानादित्वप्रतिपादने एव महान् यत्नः। तथाहि— "वेदांश्चैके सन्निकर्षं पुरुषाख्याः, अनित्यदर्शनाच्च"–इति सूत्रद्वयाभ्यां पूर्वपक्षं निर्माय सिद्धान्तित मुत्तरसूत्रचतुष्टयेन— "उक्तन्तु शब्दपूर्वत्वम्, आख्या-प्रवचनात्, परन्तु श्रुतिसामान्यमात्रम्, कृते वा विनियोगः स्यात् कर्मणः सम्बन्धात्"–इति मी॰ द॰ जै॰ सू॰ १. १. २८—३२। एतान्येव सूत्राण्यवलम्ब्य बहु विचारितं शास्त्रदीपिकादौ, तथा निर्णीतन्तु वेदाना मप्रतकत्व मेव।

भगवता बादरायणेन तु वेदस्य ब्रह्मकार्यत्वं सूचितम्—"शास्त्रयोनित्वात्"—इति (१. १. ३.)। ऋग्वेदादिशास्त्रकारणत्वाद् ब्रह्म सर्वज्ञ मिति हि तत्सूत्राशयः। एतावताप्यपौरुषेयत्वं वाय्वादितुल्यत्वञ्च नापगतं वेदस्य; मनुष्यनिर्मितत्वाभावात्। फलञ्च तुल्य तत्कालनिर्णयाय अनुसन्धानानामनुसन्धानयोः; न हि मनुष्यनिर्मितातिरिक्तेषु कालनिर्णयसम्भवः, ततस्तत्र नैव वाचः प्रसरन्ति प्रेक्षावतां विपश्चिताम्। को नाम मर्त्त्यो निर्णेतुं सक्षमः, कदैषाभवत् सृष्टिः? आदिसृष्टेर्वर्णनन्तु स्वस्वकल्पनाशक्तेः परिचयदानमात्रम्। पृथिव्याः अन्तस्तरादिदर्शनात् पृथिवीसृष्टिकालकथन मपि धीशक्तेः परिचयदान मेव। पुराणोक्तसृष्टिकथाश्च नैकरूपाः सन्ति, अतस्ताः कल्पनाप्रसूता एव; अस्तु वा कल्पभेदेन तत्र विरुद्धभाषणमीमांसा, न तथापि सृष्टेरादिकालनिर्णय सम्भवेत्। ब्राह्मणादिष्वपि च सृष्टितत्त्वमीमांसा असम्भाव्यैव; वेदार्थमहायके मीमांसादर्शने हि तादृशसृष्टिप्रतिपादकानामप्यायिकानामाख्यानानां काम्यनिकत्वनिर्णयात्। तथाहि— "बबरः प्रावाहणिरकामयत"—इत्येवमादिषु श्रुतिषु बबरादीनां मनित्यार्थानां संयोगात् वेदस्याधुनिकत्व माशङ्का सिद्धान्तित मेतत्— "न तु तत्रानित्यो बबराख्यः कश्चित् पुरुषो विवक्षितः, किन्तु बबर इति शब्दानुकृतिः; तथा सति बबरेति शब्दं कुर्वन् वायुरभिधीयते; स च प्रावाहणिः, प्रकर्षेण वहनशीलः। एव मन्यत्राप्यूहनीयम्"—इति (मी॰ जै॰ सू॰ १. २. ५॰ शा॰ भा॰)। निरुक्तकारेण भगवता यास्केन तु "बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति"—इत्युक्त्या (७. ७ २.) तादृशानां निखिलब्राह्मणवचनाना मनादरः सूचितः। वस्तुतो वैदिकसृष्टिविवरणानि तु प्रायो

रूपकाण्येवेति नाल मैतिहासिकतोपायेति। तदेव मादिसृष्टि-कालनिर्णयो न कदापि भूतो भवति भविष्यति वेति सिद्धान्तः। अतएव श्रूयते ( ऋ० सं० १०. १७३. ४. )—

"ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे।

ध्रुवं विश्व मिदं जगद् ध्रुवो राजा विशा मयम्"–इति। आम्नातश्चेष मन्त्रस्तत्रैव दाशतय्याम् ( १. १६४. ४. )—

"को ददर्श प्रथमं जायमान मस्थन्वन्तं यदनस्था बिभर्त्ति। भूम्या असुरसृगात्मा क्वस्वित् को विद्वांस मुपगात् प्रष्टुमेतत्"–इति।

स्मर्यन्ते च— "सिद्धे शब्दार्थसम्बन्धे ( का० वा० १. )"–इत्यादयः, सिद्धा द्यौः सिद्धा पृथिवी, सिद्ध माकाशम् ( पा० भा० १. १. १. )"–इत्येवमादयश्च। सिद्धशब्दस्य चेह नित्यार्थता; तथा ह्याह पस्पशायां भगवान् पतञ्जलिः— "नित्यपर्यायवाची सिद्धशब्द"–इति। वेदस्यापि तथात्वे तत्कालनिर्णयमनोरथद्रुमो भयेनपलाहत एवेति।

यास्केन त्वत्रैव प्रदर्शितं पुरावाद— "साक्षात्कृतधर्माण ऋषयो बभूवुः, तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्सम्प्रादुः, उपदेशेन ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च"–इति ( १. ६. ५. )। इतस्तु वेदाना माम्नातत्वेऽप्यार्षत्व मेव सिध्यति। ऋषयश्च तेऽस्मत्पूर्वपुरुषा मनुष्या एवेति स्पष्ट मेवापौरुषेयत्वं वेदस्य। परन्त्वेव मप्यशक्यनिर्णयतैव वेदकालस्य; आम्नानकृतयोर्मिथो विभिन्नार्थत्वात्। आम्नात इत्युक्ते न ज्ञायते कृत इति, अपि तु श्रूयते अभ्यस्त इत्येव; अभ्यासे एव म्नातेरुपदेशात् ( धा० भा० प० ८२८. )। एवं ह्यभ्यासस्तु पूर्वस्थितानामेव भवति; न तु क्रियमाणानाम्। अतएव वाम-

ऐत्यादीनि सामानि वामदेवादिभिर्दृष्टान्येवोच्यन्ते, न तु कृता-नीति। तदेव मन्त्र पौरुषेयत्वेऽपि नाप्ताद्दगपुरुषकृतत्व मिति आप्तवाक्यत्व मभ्याहृतम्। अतएव वैशेषिक-न्याय-साङ्ख्य-पात-ञ्जलेषु वेदस्य प्रामाण्यं स्वीकृत मपि नोक्त मकर्तृक एव इति, नाप्युक्त मीश्वरकृत इति च; अपि त्वार्षै. ऋषिभिरेवैषः कृत इत्येव सर्वत्र। तथाहि— "बुद्धिपूर्वा वाक्यकृतिर्वेदे, ब्राह्मणे सञ्ज्ञा-कर्मसिद्धिलिङ्गम्"–इति (६. १. १, २.), "आर्षं सिद्धदर्शनञ्च धर्मेभ्यः"–इति (९. २. १३.), "तद्वचनादाम्नायस्य प्रामाण्यम् (१०. २१०)"–इत्येवमादि च वैशेषिके। एव मन्येषु च।

एवं "विश्वामित्र ऋषि. ०—० नदीस्तुष्टाव गाथा भवतीति" –इति (२. ७. २.), "ऋषिपुत्रा विलपितं वेदयन्ते"–इति (५. १ २.), "गृत्समद मर्थ मभ्युत्थितं ऋषिश्छन्दोऽभिववाशे, तदभिवादिन्येषर्गं भवति (९. १. ४.)"–इत्येवमादिषु यास्क-वचनेषु चोपलभ्यते तत्तन्मन्त्राणां ऋषिकृतत्व मेव। "सर्पं ऋषि-र्मन्त्रकृत् (ऐ० ब्रा० ६. १. १.)"–इत्यादिना ब्राह्मणवाक्येभ्यश्च तथै-वावगम्यते मन्त्राणां ऋषिकृतत्वम्।

वस्तुतो मन्त्रार्थालोचनतोऽपि व्यक्तं प्रतीयते ह्येषां धीमत्-पुरुषकृतत्वमेव; केषुचिन्मन्त्रेष्वप्येषां बहुपुरुषकृतत्वञ्च प्रत्यते। तद्यथा ऋ० म० १०. ७१. २—

"सक्तु मिव तितउना पुनन्तो यत्र धीरा मनसा वाच मक्रत।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि"–इति।
एवञ्चाम्नस्पूर्वपुरुषैर्ऋषिभिरेव कृत एव वेदमन्त्रभागोऽपीति ध्रुवम्।

एव मप्येषां कालनिर्णयस्त्वगम्य एव; अनवद्युगीयत्वात्। तथाहि— एतद्युगप्रथमसहस्राब्द्या मेव जात' पाणिनिराचार्य

इति तु सिद्धान्तितम् ( ११७ पृ० ) ; ततोऽपि पूर्वतनाः क्रमकारा बाभ्रव्यादयः ; ततोऽपि पूर्वतनाः पदकाराः शाकल्यादयः ; ततोऽपि पूर्वतना ऋक्तन्त्रादिप्रणेतारः शाकटायनादयः ; ततोऽपि पूर्वतना नवयुगारम्भजन्मानो लाट्यायनादयः कल्पसूत्रकाराः ( तदानी मेव नवकल्पारम्भ इत्येव तत्कालकृता ग्रन्थाः कल्पा इत्युच्यन्त इति च नासम्भवम् )। एतद्युगारम्भात् पुरैव प्रणीतानि कुसुरुविन्दादिभिः ऋषिभिः षड्विंशब्राह्मणादीनि ; ततः पूर्वस्मिन्नेव युगे कल्पे वा महीदासादिभिः श्लोकानुश्लोकगाथादीनि सङ्गृह्य तदनुसारेण कृतान्यैतरेयादीनि ब्राह्मणानि ; ततः पुर एव युगे कल्पे वा प्रवादानेवानुसृत्य प्रणीताः श्लोकानुश्लोकगाथादयः ; ततः पुरस्तादेव युगे कल्पे वा यूयन्ते स्म विकीर्णाः प्रवादास्तत एवाद्यापि ते श्रुतय इत्याख्यायन्ते च ; ततः पूर्वस्मिन्नेव युगे कल्पे वाभवत् यज्ञप्रयोगारम्भः ; तदेवाथर्वणा कृत एकेनैव यत्नेन चतु:-संहितासङ्ग्रहः (१५५ पृ०)। तत्पूर्वं मेव सम्पन्ना बभूवुः सूक्तमण्ड-लादिसङ्ग्रहा इत्यत्रापि नास्ति संशयः। ततः पुरा तु बहुकाल मभिव्याप्य बहुभिरार्षैर्ऋषिभिर्बहुभिरेवोच्चावचैरभिप्रायैरीश्वरशक्त्या दृष्टा बहवो मन्त्राः। तदेवं बहुयुगपूर्वं मेवारब्धा मन्त्ररचनेति कथ ङ्कार मद्यतनाः सुस्तत्कालविनिर्णये समर्थाः ? अनद्यतनीयानां तादृशातिप्राचीनतमाना कालनिर्णये हि न कि मपि लिङ्गं प्रति-भासेत बहुधीमता मप्यद्यतनानाम्। भवति हि व्यक्तिनिर्णय-पूर्वक एव कालनिर्णयः, न चात्र क्वापि व्यक्तिनिर्णयः सम्भाव्यते ; न ह्येतत्कृतोऽसौ मन्त्र इति क्वापि लिखितं दृश्यते। दृष्टशब्द एव कृतवाचक इति चेत्, तथापि न व्यक्तिनिर्णयः सुकरः ; अग्निना दृष्ट इत्यादौ अग्नीत्यादिसञ्ज्ञानां मन्त्रिशून्यत्वेन कल्पित-

सन्दिग्धत्वेनैव वा प्रायोऽवधारणीयत्वात्। यथा च खलु सूर्यवंशीयानां क्षत्रियाणा मादिपुरुषः सूर्य इति तु शब्दतः प्रतीयत एव, पर मुदीयमानस्यैतस्य दिनमणेरौरसजातः स वंश इति विश्वासस्तु कथं भवेन्नाम सर्वेषामुधीमताम्? अतस्तद्वंशादिपुरुषस्य प्रकृत नामाम्नानात् शौर्यत्वेन च कल्पितो नाम सूर्य इत्येव तत्र स्वीकार्यम्, तथैवात्रापि। "अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्। दुदोह यज्ञसिद्ध्यर्थ मृग्यजुःसामलक्षणम्"—इति मनुवचने (१. २३.) तु प्रधानतोऽग्निविज्ञानार्थं ऋग्वेदस्य वायुविज्ञानार्थं यजुषः, सूर्यविज्ञानार्थश्च सामवेदस्याम्नान मित्येवार्थः प्रतीयते। तस्मात् तत्त्वतः प्रर्षिव्यक्तिनिर्णयाभावादेव मन्त्रकालनिर्णयस्याशक्यतैव सम्पद्यते।

"भृगुर्वै भृगु सम्बभूव (निरु० ३. ३. ५.)"—इत्यादिनिर्वचनानि च विज्ञानावेदकान्येव। तदप्युपरिष्टात् वर्णयिष्याम समासतः। अथ यदि 'तुष्यतु दुर्जन'—इति न्यायेन स्वीकुर्याम,—तथैव समुत्पन्न कश्चित् भृगुर्नाम महर्षिरिति, कृतं तेनैव भृगुणा भार्गवं नाम सूक्त मिति च, तथापि न सम्भवेत् व्यक्तिनिर्णयः; को हि जानाति कोऽयं भृगुः कदेमां भुव मलङ्कारेति? एवं यत्र क्वचिन्मन्त्रे वसिष्ठ नाम श्रूयते, तस्यापि रचनाकालनिर्णयो ऽस्माकं मशक्य एव, यतो हि को जानाति आदिवसिष्ठः कदोत्पन्न इति? एवं यान्यपि इडादिभिर्भृगुभिरिन्द्रप्रमतिप्रभृतिभिर्वसिष्ठैश्च दृष्टानि सूक्तानि श्रूयन्ते, तेषां मप्युद्भवकालविज्ञेयता गाढतमोभिराच्छन्नैव; यतस्त्वेव हि तत्र तत्रापि कालनिर्णायकलिङ्गाभावः, नापि हि आदिभार्गवस्यैव भार्गव इति, आदिवासिष्ठस्यैव च वासिष्ठ इति व्यवहारनियमो विद्यते लोकेऽन्यत्र वा। तथैव वेदे काश्यपवचन मप्यस्ति सत्यम्। पर न स्वत्र पृथिव्या

नैक एव काश्यपः सञ्जातः ; अद्य मपि काश्यपः, मत्पुत्रोऽपि काश्यपः, मत्पौत्रोऽपि काश्यपः, मत्प्रपौत्रोऽपि भविष्यति काश्यप एव। एवं भारद्वाजादयोऽपि। तस्मादेतादृशनामपर्यालोचनया च मन्त्रप्रणयनकालनिर्णये यत्नः सर्वथा व्यर्थ एव।

एतच्च निर्णीत मेव विद्वद्भिः,— यद्य यावत् यावतां प्राचीनप्रबन्धाना मनुसन्धान सम्भवम्, तेषु सर्वेष्वेव मन्त्रभागः प्राचीनतम इति ध्रुवम्; अस्मादपि पुरातनः कश्चित् प्रबन्धो बभूव, इदानीं लुप्त इत्यपि वक्तुं न कस्यापि पुरातत्त्वानुसन्धित्सोरोष्ठाधरौ स्फुरिताविव दृश्येते। तदित्थं मनद्ययुगीयत्वात् व्यक्तिनिद्वानवाप्तेः रचयितृव्यक्तिनिर्णयाभावात् मन्त्रभागस्य कालनिर्णयम् सर्वथा अशक्य एवास्माक मद्ययुगीयाना मिति॥

ब्राह्मणग्रन्थाना मपि कालनिर्णये यत्नोऽप्येव मकिञ्चित्कर एव; न हि तेषु कस्याप्येकस्य कालनिर्णयसहायः संवादोऽवगम्यते क्वापि लोके शास्त्रे वा। ततः सर्वेषा मेव युगान्तरीयग्रन्थानां कालनिर्णये एतत्साङ्काब्देऽयं ग्रन्थ. प्रणीत इति निर्धारणे वय मसमर्था एव सर्वथा। मन्त्रब्राह्मणयोः सम्यक् पर्यालोचनया मन्त्रभागात् परभवो ब्राह्मणभाग इति तु वक्तुं युज्यते; एवम् मन्त्रब्राह्मणयोरुभयोरपि भागयोरन्तरे च एतस्मान्मन्त्रादेष मन्त्रः परभवः, एतस्माच्चेष प्राग्भवः, किञ्चैतस्मात् ब्राह्मणादेतत् ब्राह्मणं ब्राह्मणवाक्य वा परभवम्, एतस्माच्चैतद् प्राग्भव मित्यपि प्रायो निःशङ्क निर्णेतुं शक्यते, पर मेतद्युगीयैतत्साङ्केऽब्देऽयं मन्त्रग्रन्थो ब्राह्मणग्रन्थो वा प्रणीतो यथितः सङ्कलितो वेति नास्मादृशां बोधयोग्यम्। अतएव मन्त्रभागस्येव ब्राह्मणभागस्याप्यनादित्व मुपपद्यतेऽद्येति॥

यद्यप्यैतरेयभाष्यभूमिकायां सायणाचार्य्येणापि प्रकाशित एवं तराया पुत्रो महिदासाख्यो भूमिदेवताती वर मवाप्य भाषित यद् ब्राह्मणं, तदेव प्रथित मैतरेय मितीति प्रवादः। तथापि तस्यापि ब्राह्मणस्य न शक्य कालनिर्णयः, प्रदर्शितप्रवादात्किञ्चिदेव हि ज्ञायते,— इतरेतिप्रसिद्धाया कस्याश्चिदपि ऋषिरमण्याः पुत्रेणेद प्रोक्त मिति, पर तस्मान्नैव सभिव्यज्यते,— एतद्युगीये एतस्मिन्नब्दे किल सा ऋषिरमणी तद्ब्राह्मणग्रन्थ प्रणेयन्त कुमार प्रसूयेम जगतीतल मलङ्कृतवतीति। एवञ्चैतरेयादिग्रन्थानां कालनिर्णयाय तादृशप्रवादादीनां मवलम्बन मपि सुदूरपारसागर मुत्तितीर्षो र्मज्जमानकाशकुशावलम्बनकल्प मेवेति॥

यदस्त्यैतरेयके— "एतेन ह वा ऐन्द्रेण महाभिषेकेण तुर कावषेयो जनमेजय पारिक्षित मभिषिषेच, तस्माद् जनमेजय पारिक्षित समन्त सर्वत पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे। तदेषाभि यज्ञगाथा गीयते— 'आसन्दीवति धान्याद रुक्मिण हरितस्रजम्। अश्व बबन्ध सारङ्ग देवेभ्यो जनमेजय' -इति (८ ४ ७)"-इत्येवमादि, ताण्ड्यब्राह्मणे चैव श्रूयते — "जनमेजययावुदो याव"-इति (२५ १५)। एवमादि श्रुतेन यदि कश्चिदध्यवस्येत्,— अर्जुनपौत्रजनमेजयात परस्ता देवतानि प्रणीतान्यैतरेयकादीनि ब्राह्मणानीति, तथाच यौधिष्ठिरीयाया मन्यूनद्वितीयशताब्द्या मेवैषां सम्यक् प्रणयन मिती निर्णीत एवैतत्काल इति, तर्हि स स्यादवश्य भ्रमावर्त्तमग्न स्वातिवृद्धेव वञ्चित। ऐतरेयादीनां यौधिष्ठिरीयद्वितीयशताब्दीजत्वे हि पाणिनिसमकालत्व मेव प्रसज्येत, पाणिनेरपि यौधिष्ठिरीयद्वितीयशताब्दीजत्वनिर्णयात् (११८ पृ०)। न च

तवेष्टापत्तिः ; पाणिनीये व्याकरणे ब्राह्मणग्रन्थाना मतिप्राचीनत्वेन प्रोक्तत्वादिस्वीकारात् ; न हि समकालिकानां ग्रन्थानां प्रोक्तत्वेन व्यपदेशः सङ्गच्छते, नापि छन्दस्त्वादिक मुपपद्यत इति ।

अस्मन्मते तु बभूवैव क्वचन पुराकल्पेऽपि पारीक्षितो जनमेजयः, तत्तन्नामश्रुत्यनुसारत एवाभिमन्युपुत्रस्याभवन्नामकरणं परीक्षित इति, तथा तत्पुत्रस्य जनमेजय इति च। तद्यथा, दृश्यत एव हि भागवतादिषु सत्यव्रतो नाम, ततो मन्नामकरणं च सम्यक् सत्यव्रत इति ; न च सन्नामकरणतः पश्चात् प्रणीतानि भागवतादीनि। अथैवं वह्नकवेदक्किमस्य लेखनीजातानि मृणालिनीत्यादीनि च नामानीदानीं बहुष्वेव वङ्गाङ्गनेषु व्यवह्रियन्ते चेति। एव मेव समाधान सर्वत्रैवावश्य मुररीकर्त्तव्यम् ; अन्यथा वेदेषु भोजनामश्रवणात् भोजसमसामयिकस्य वेदभाष्यकृदुव्वटस्यापि वेदसमकालजत्वं प्रसज्येतैव, तत् कथङ्कारं वार्येतेति। तथा हि ऋक्संहितायां श्रूयते— "भोजस्येद पुष्करिणीव वेश्म"–इति (१. १०७. १०.), श्रूयते चैतरेयब्राह्मणे तत्रैवाभिषेकप्रकरणे— "भोज भोजपितरम्"–इति (८. ४. ३.), उक्तञ्चोव्वटेन— "मल्लभाथ मिदं कृतं भोजे पृथ्वीं प्रशासति"–इति। तदत्र कथयन्तु श्रीमन्तो यदि नाम नामदर्शनादेव कालनिर्णयः शक्यस्तर्हि तत्तद्वेदग्रन्थाविर्भावकाले एव किं माविरभूत् वेदभाष्यकार उव्वटो वज्रटात्मजः ? इह नैरुक्ते स्वीकार्य एवायं न्यायोऽन्यत्रापि सर्वत्रैवेति किमु वक्तव्य मस्तमन्तीति॥

यच्चोक्तम्,— शतपथं नाम ब्राह्मणं पाणिनीयतोऽप्युत्तरभवेन कात्यायनसमकालिकेन याज्ञवल्क्येन प्रणीतम् ; "पुराणप्रोक्तेषु ब्राह्मणकल्पेषु"–इति (४. ३. १०५.) हि पाणिनिसूत्रम्,

तत्सूत्रस्य वार्त्तिकादिक च तत्र मान मिति। तदप्यतीव विस्मय कर मस्माकम्, गम्यते हि तस्मादेव सूत्रात तत्सूत्रीयवार्त्तिकादिभ्यश्च शतपथस्यापि पाणिनीयत प्राचीनत्व मेवेति। तथाहि यदस्त्येतत् सूत्रं पाणिनीयम् — 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु"— इति (४ ३ १०५)। "तृतीयान्तात् प्रोक्तार्थे णिनि स्यात, यत्प्रोक्ताः पुराणप्रोक्ताश्चेद् ब्राह्मणकल्पास्ते भवन्ति। पुराणेन चिरन्तनेन मुनिना प्रोक्ताः। भल्लु — भाल्लविन। शाट्यायन — शाट्यायनिन। कल्पे — पिङ्गेन प्रोक्त पैङ्गी कल्प। पुराण इति किम्? याज्ञवल्क्यानि ब्राह्मणानि, आश्मरथ कल्प"— इति तत्रैव वैयाकरणसिद्धान्तकौमुदी। तदेतद् विचार्यम् — यदि नाम याज्ञवल्क्य ब्राह्मण शतपथ मिति यावत् पाणिनेर्नावगत स्यात, तर्हि कि प्रत्युदाहरण भवेत्? — क्वासिद्ध्याप्तिवारणाय सूत्रे पुराणविशेषण मुपपद्येत? न हि भविष्यमाणग्रन्थस्य शतपथादे प्रोक्तत्व पाणिनेरभिमत भवितु मर्हति, तत् किव्या वर्तक सूत्रस्य पुराणपद मिति। वस्तुतस्तु पाणिनिना यथा प्राचीनत्वेन ज्ञात पैङ्ग्यादिक कल्पशास्त्रम, तथैव ज्ञात मेव आश्मरथ्यादिक च, अतएव प्रोक्तत्वेन तेषा सर्वेषा मेव ग्रहणप्रसङ्गे ऽनिष्टप्रयोग प्रसज्येतेति प्राचीनेष्वपि कल्पेषु ये पुराणप्रोक्ता = प्राचीनतरा, तेभ्य एव णिनिर्विधाय आश्मरथ्यादिभ्यो णिनि प्रसङ्गो वारित, तथा सर्वेभ्य एव कल्पेभ्योऽपि प्राचीनेषु सुतरा प्राचीनतरेषु ब्राह्मणग्रन्थेषु सर्वत्रैव णिनिप्रसङ्गवारणाय तत्रापि पुराणविशेषण सार्थकम्, सति हि पुराणविशेषणे प्राचीनतरेभ्य सर्वेभ्य एव ब्राह्मणग्रन्थेभ्यो न भवति णिनि, अपि तु तत्रापि ये पुराणप्रोक्ता = प्राचीनतमा, तेभ्य एवेति सिद्ध शाट्यायनि

ब्राह्मण मित्यादि ; ये तु प्राचीनतरेष्वपि ब्राह्मणग्रन्थेषु शाट्या-यनादिपरभवप्रोक्ताः न तेभ्यो णिनिरिति सिद्धं याज्ञवल्क्यं ब्राह्मण मित्यादि च। एवञ्चातिप्राचीनेष्वेव पुराणप्रोक्तत्वं तदितरत्वं चेष्टं पाणिनेरिति याज्ञवल्क्यब्राह्मणादेरप्यतिप्राचीनत्वमुक्तमेव।

एव मेतत्सूत्रस्थं वार्त्तिक मप्यस्मन्मतपोषक मेव। तथाहि—"पुराणप्रोक्तेषु याज्ञवल्क्यादिभ्य प्रतिषेधस्तुल्यकालत्वात्"–इति वार्त्तिकम्। शाट्यायनादिप्रोक्ताना ब्राह्मणाना, पिङ्गादिप्रोक्तानां कल्पानाञ्च यथा पाणिनिपूर्वप्रोक्तत्वम्, तथैव याज्ञवल्क्यादिप्रोक्ताना ब्राह्मणाना सुलभादिप्रोक्तानाञ्च कल्पाना मिति सर्वेषा मेवैषा पाणिनिपूर्वप्रोक्तत्वेन तुल्यकालत्वात् पुराणप्रोक्तत्वं समान मिति सर्वेभ्य एवैतेभ्यो णिनि प्रसक्तः; तन्निवारणाय याज्ञवल्क्यादिभ्यः प्रतिषेधरूपो यत्नविशेषः कर्त्तव्य इति च तद्वार्त्तिकाशयः। एव-श्चैतद्वार्त्तिकारम्भात् भगवत कात्यायनस्य अतिप्राचीनेष्वेव ब्राह्म-णेषु कल्पेषु चासीत् पुराणप्रोक्तत्वापुराणप्रोक्तत्वनिर्णये संशयः, तन्निरासाय च यत्नोऽवश्य कर्त्तव्य इत्येव तदाशय फलितः। कात्या-यनसमकालिकस्यैव कस्यचित् याज्ञवल्क्यस्य तु सति शतपथनिर्मा-तृत्वे तत्र पुराणप्रोक्तेष्विति णिनिप्रसङ्ग एव कथम्? कथं वा तन्नि-रासाय वार्त्तिकारम्भो भवेत् प्रयोजनीयः? तस्वतो पाणिनि समकालिकाना पाणिनिसदृशानाञ्च धीमता प्राचीनतमेष्वपि ग्रन्थेषु पौर्वापर्यनिर्णयो यथा सुगम, न तथा तत्परकालिकाना कात्यायनादीना मपीति तदानी मेव याज्ञवल्क्यादीना परिगणनं सप्रयोजन जातम्, तत् किं मद्यतनाना स्वस्मादृशाम्।

एव मेतदीय भाष्यञ्चास्मन्मतसाधक मेव। तथाहि—"पुराण-प्रोक्तेषु ब्राह्मणकल्पेष्वित्यत्र याज्ञवल्क्यादिभ्य' प्रतिषेधो वक्तव्य।

याज्ञवल्क्यानि ब्राह्मणानि, सौलभानीति। किं कारणम्? तुल्यकालत्वात्, एतान्यपि हि तुल्यकालानीति"-इत्येव तद्भाष्यम्। "तुल्यकालत्वादिति— शाट्यायनादिप्रोक्तैर्ब्राह्मणैरेककालत्वादित्यर्थः"-इत्येव च तदीकावान् कैयटो जैयटात्मजः। यद्यपीह वार्त्तिकमत मेवानुमोदितं भाष्यकारेणेति गम्यते, तथापि नो न क्षति। श्रीनागेशभट्टस्य मते तु शाट्यायनादिसमकालत्वेव याज्ञवल्क्यादिप्रोक्तानां शतपथादीनाम्, अतस्तेभ्यो णिनि प्राप्त, कात्यायनवचनेन वारितोऽनुमोदितश्च तद्वचनं भाष्यकारेणेति। तथाहि— "याज्ञवल्क्यानीति। कण्वादिभ्य इत्यण्। ते हि पाणिन्यपेक्षया आधुनिका इत्यभिमानः, भाष्ये तु शाट्यायनादि तुल्यकालत्वाद् •—• वचन मेवारब्धम्"-इति (ल॰ श॰ शे॰)। वस्तुतो भाष्ये एतत्पूर्वं मेव "छन्दोब्राह्मणानि च तद्विषयाणि (पा॰ ४ २ ६६)"-इत्यत्रोक्तम्— "वक्तव्येतत् 'याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात्'-इति। तत्रैव वक्तव्यम्, तद्धि यथा च न भवतीति'-इति। "वक्तव्येतदिति। पुराणप्रोक्तेष्वित्यत्र"-इत्येव च तत्र कैयटः। तथा च अतिप्राचीनेष्वेव ब्राह्मणकल्पग्रन्थेषु ये पुराणप्रोक्ता, तत्रैव णिनि पाणिनिना विहितः, ये तु नूतनप्रोक्ताः, तत्र तु णिनिविषयतैव नास्तीति व्यर्थं वार्त्तिक मिति तद्भाष्याशयः। पाणिनिकालेऽपि ये ग्रन्था अतिप्राचीना इति प्रसिद्धा अतएव प्रोक्ता इत्येव व्यपदिष्टास्तदा नीत्लनै शिष्टे, तेत्वेव ते पुराणप्रोक्ता के वा नेति निर्णयार्थैव परिगणन मवश्यं कर्त्तव्य मिति वार्त्तिककारमतम्। "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्"-इति भाष्योक्त्या च तत्खण्डन योग्य मित्येवात्र मार्गम्। तदित्थं सूत्रकारवचनात्,

वार्त्तिककारवचनात् , भाष्यकारादिवचनाच्चेद मेव सिद्धम् ,— याज्ञवल्क्यादिप्रोक्तं शतपथादिकं शाख्यायनादिभ्योऽर्वाचीन मपि पाणिनीयत: प्राचीनतम मेवेति ।

वार्त्तिककारकात्यायनसमकालिक: कश्चन याज्ञवल्क्यो नासी-दासीद्वेति नास्मद्विचारविषय: ;— श्रपि तु शतपथप्रवक्ता याज्ञ-वल्क्यस्तु वार्त्तिककारकात्यायनसमकालिक: कथ मपि नैव ; पाणिनिसमकालिकोऽपि न स: कथ मपि , प्रत्युत पाणिन्यादयो यस्मिन् युगे जाता: , यस्मिन् कल्पे जाता: , ततोऽपि पूर्वतन एव ; किञ्च तस्य शाख्यायनादिसमकालिकत्वाभावेऽपि ब्राह्मणकालजल-न्त्ववितथ मेवेति तत्कालनिर्णयोऽस्माक मशक्य एवेति शम् ॥

---

( ११ )

श्रथेतर्हि समालोचयितव्य मस्ति, के विषयाश्चैतन्निरुक्तप्रति-पाद्या इति । सर्वेषा मेव वेदाङ्गानां साक्षात्परम्परया वा वेदार्थ-ज्ञान मेव प्रयोजनम् , तत्साधनतायोपदेश एवैक: प्रतिपाद्यविषय इति तु वेदविद्यसिद्ध मेव ; तदिह निरुक्ते वेदार्थज्ञानसाधनाय तत्सम्बद्धतया येऽखिलविषया: प्रतिपादिता: , तानेव व्याकर्त्तुं समग्र मेवेमं ग्रन्थं समासत: किञ्चिद्विस्तरतयालोचयाम इति यावत् ।

श्रथैतस्य च निरुक्तशास्त्रस्य बीजानि पुरासन् श्रुतिवारिधौ विकीर्णानि ; श्रतएवोच्यत इद मपि शास्त्र मानुश्रविक मिति । ततो ब्राह्मणग्रन्थेषु यथाप्रयोजन मेकैकं चीयमान मङ्कुरितम् ; तस्मादेव च तस्य सम्पन्न मालवालीभूतग्रन्थान्तर्गतत्वम् । ततो-ऽनुब्राह्मणेषु विशेषत: प्रोच्यमानं परिपुष्टम् । तत एव काले

निदानसूत्रेषु पल्लवितं सत् प्रकरणविशेषात्मकत्व मुपगतम् । तत-स्तेभ्य एव शाकपूण्यादिभिः शाखाप्रशाखादिभि. सज्जितं ग्रन्थाकारत. प्रणीतं निरुक्त मिति । तान्येव सर्वाण्यवलम्ब्य ह्यत मेतन्निरुक्तं भगवता यास्केन पुष्पितं फलितञ्चैव मेवेति हृद्यः ।

तस्यास्य प्रथमाध्यायस्तु ग्रन्थभूमिकारूपः ; तत्र निघण्टुशब्द निर्वचनादीनि च प्रतिपादितानि । द्वितीयतृतीयाध्याययोर्निर्वचन-प्रकारादिकथनपूर्वकं भाषितं नैघण्टुककाण्डव्याख्यानम् । चतुर्था-दिषु तु त्रिष्वध्यायेषु ऐकपदीकाख्यानपूर्वकं क्षतं नैगमकाण्ड-व्याख्यानम् । तत उत्तरं षट्स्वध्यायेषु देवतातत्त्वबोधनपूर्वक माख्यातं दैवतकाण्डव्याख्यानम् । इत ऊर्द्ध्वं त्रयोदशाध्यायरूपे प्रथमपरिशिष्टे ऋतिस्तुति मधिकृत्याम्नातत्त्वोपदेशादीनि प्रदर्शि-तानि । ततश्चतुर्दशाध्यायात्मको द्वितीयपरिशिष्टः, तत्रोर्द्ध्वमार्गगति मधिकृत्याख्यातानि च परमपुरुषार्थसाधनानीति सङ्क्षेपः ॥

किञ्चिद्विशदयामश्चेद मालोचनम् ;—

(१) यद्यप्येतन्निरुक्तं तत्त्वतो निघण्टुभाष्यरूप मेव, परं न ह्यत्र नैघण्टुकानां सर्वेषा मेव पदाना व्याख्यानान्युक्तानि । यथाहि— नैघण्टुकसमाम्नाये पृथिव्या नामधेयानि एकविंशतिसङ्ख्याकानि परिपठितानि यानि, तेषा मेक मेव गौरिति व्याख्यातं द्वितीया ध्यायीयेन समग्रद्वितीयपादेन ; अपरेषाम्पुनर्नाम्ना मुल्लेखोऽपि न कृतः । अत एवोक्तं तदन्ते हविकृता—"अनुक्रमण त्वधिकृतम् , तस्मिन् गोशब्द एको निरुक्तः प्रकारोपदर्शनार्थनार्थम्"–इत्यादि ।

( २ ) प्रसङ्गसङ्गत्या वैदिकगूढतत्त्वान्यपीह बहूनि प्रतिपादि-तानि । तद्यथा— "पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे ( १. १. २. )"–इत्येवमादीनि चिन्तनीयानि ।

( ३ ) व्याख्यातान्यपीह स्वप्रदर्शितनिगमस्थपदादीनि च प्राय. सर्वाण्येव । अतएवोक्त निघण्टुटीका भूमिकायाम्— "नैघण्टु-गतिष्वेव पदेष्वध्यर्द्धशतत्रयमात्राणि पदानि भाष्यकारेणैव तत्र तत्र निगमेषु प्रसङ्गान्निरुक्तानि"–इति ।

( ४ ) मन्त्रस्थपदान्येव चात्रोदाहरणत्वेन प्राय सर्वत्रोपात्तानि , ब्राह्मणीयानि तु न तथादृतानि ; तथाचेदानीं मन्त्रब्राह्मणयोर्वेदनामधेयत्वेऽपि मन्त्रगताना मेव पदाना व्याख्यानेन वेद-व्याख्याने कृतकृत्यम्मन्यो बभूव स इति चावगम्यते । प्रत्युदाहरणेऽपि कृतं मानान्तरोपादानेन ।

( ५ ) नात्र च मन्त्रगताना मेव पदानां निर्वचनानि समुपदिष्टानि , अपि तु तत्सन्नियोगात् लौकिकानाञ्च बहूनाम् । तद्यथा निर्वचनारम्भे एव— गोशब्दनिर्वचनप्रसङ्गात् पय. शब्दस्य कृत निर्वचनम् , तत्प्रसङ्गात् क्षीरशब्दस्यापि ( २. २. १. ) । एव मेवोत्तरत्रापि बहुल ।

( ६ ) लोकवेदसाधारणा अपि विषया इह बहव उपन्यस्ता' । तद्यथा— "चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च" --इत्यादय' ( १. १. १ ) । "अणीयस्त्वाच्च शब्देन सञ्ज्ञाकरणं व्यवहारार्थं लोके , तेषा मनुष्यवद् देवताभिधानम्"–इति च तत्रैव तत उत्तरम् ( १. १. २. ) ।

( ७ ) स्वप्रदर्शितेषु नैगमेषु समुपात्ताना पदनिर्वचनादीना स्वकपोलकल्पितत्वदोषपरिहाराय मतभेदप्रकाशाय च पूर्वाचार्याणां बहूना मेव नामादीन्यपीह कीर्त्तितानि । तद्यथा— आग्रयण , आग्रायण', आचार्या , एके, ऐतिहासिकाः , औदुम्बरायण. , औपमन्यव , और्णवाभ , कात्थक्य. , क्रौष्टुकि. , गार्ग्य. ,

गालव', चर्मशिराः, तैटिकिः, नैदानाः, नैरुक्ताः, परिव्राजकाः, पार्षदानि, मनु', याज्ञिकाः, पूर्वे याज्ञिकाः, वार्ष्यायणिः, वैयाकरणाः, शाकटायन, शाकपूणि', शाकल्य, स्थौलाष्ठीवि., हारिद्रवकम्, इत्यादि।

(८) निर्वचनमात्रेण प्रदर्श्य न मेने यास्कः स्वकृतकृत्यताम्; अपि तु मन्त्रार्थज्ञानाय यथा यथा यतितव्यम्, तदर्थं मेवेहोपदिष्टम्। द्वितीयाध्यायस्य प्रथमपादस्थ सर्वं एवैतदर्थक। ते च उपदेशा वेदतत्त्वार्थव्याख्यातॄणा पथप्रदर्शिकाः। तद्यथा—

"अथ निर्वचनम्। तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याता तथा तानि निर्ब्रूयादथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयान्न त्वेव न निर्ब्रूयात्।

न संस्कार माद्रियेत विषयवत्यो हि वृत्तयो भवन्ति। यथार्थं विभक्तीः सन्नमयेत्।

प्रत्त मवत्त मिति धात्वादी एव शिष्येते, अथाप्यस्तेर्निर्वृत्तिस्थानेष्वादिलोपो भवति स्तः सन्तीति, अथाप्यन्तलोपो भवति गत्वा-गत मिति, अथाप्युपधालोपो भवति जग्मतुर्जग्मुरिति, अथाप्युपधा विकारो भवति राजा दण्डीति, अथापि वर्णलोपो भवति तत्त्वा यामीति अथापि द्विवर्णलोपस्तृच इति, अथाप्यादिविपर्ययो भवति ज्योतिर्घनो बिन्दुर्वाट्य इति, अथाप्याद्यन्तविपर्ययो भवति स्तोका रज्जुः सिकतास्तर्कुरिति, अथाप्यन्तव्यापत्तिर्भवति ओघो मेघो नाधो गाधो वधूर्मध्विति, अथापि वर्णोपजन आस्थद् द्वारो भरूजेति।

तद्यत्र स्वरादनन्तरान्तस्थान्तर्धातु भवति तद् द्विप्रकृतीनां स्थान मिति प्रदिशन्ति; तत्र सिद्धाया मनुपपद्यमानाया मितरयो-

पविपादविपेत्तस्ताप्येकेऽल्पनिष्पत्तयो भवन्ति तद्यथैतदूतिर्मृदुः पृथुः पृषतः कुणारु मिति ।

अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते दमूनाः क्षेत्रसाधा इति, अथापि नैगमेभ्यो भाषिका उष्णं घृत मिति, अथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु ,— शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते [ कम्बोजाः कम्बलभोजाः कमनीयभोजा वा, कम्बलः कमनीयो भवति ], विकार मस्यार्येषु भाषन्ते शव इति ; दातिर्लवनार्थे प्राच्येषु दात्र मुदीच्येषु । एवमेकपदानि निर्ब्रूयात् ॥

अथ तद्धितसमासेष्वेकपर्वसु च पूर्वं पूर्व मपरं मपरं प्रविभज्य निर्ब्रूयाद्, दण्ड्यः पुरुषो दण्डयपुरुषः, दण्डमर्हतीति वा दण्डेन सम्पद्यत इति वा, दण्डो ददतेर्धारयतिकर्मणोऽक्रूरो •ददते मणि मित्यभिभाषन्ते , दमनादित्यौपमन्यवः , दण्ड मस्याकर्षतेति गर्हायाम् ; कक्ष्या रज्जुरश्वस्य कक्षं सेवते , कक्षो गाहतेः क्स इति नामकरणः , ख्यातेर्वानर्थकोऽभ्यासः किमस्मिन् ख्यान मिति, कषतेर्वा ; तत्सामान्यान्मनुष्यकक्षो बाहुमूलसामान्यादश्वस्य । राज्ञः पुरुष', राजपुरुषो राजा राजतेः , पुरुषः पुरिषादः पुरिशयः, पूरयतेर्वा पूरयत्यन्तरित्यन्तरपुरुष मभिप्रेत्य—

'यस्मात्परं नापर मस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥'

—इत्यपि निगमो भवति । 'विश्वकद्राकर्षे' वीति चकद्र इति श्वगती भाष्यते ; द्रातीति गतिकुत्सना , कद्रातीति द्रातिकुत्सना, चकद्राति कद्रातीति सतोऽनर्थकोऽभ्यासस्तदस्मिन्नस्तीति विश्वकद्रः । कल्याणवर्णरूपः कल्याणवर्णस्येवास्य रूप ; कल्याणं कमनीयं भवति, वर्णो वृणोतेः, रूपं रोचतेः । एवं तद्धितसमासान्निर्ब्रूयात् ॥

नैकपदानि निर्ब्रूयान्नावैयाकरणाय नानुपसन्नायानिदंविदे वा [नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया] उपसन्नाय तु निर्ब्रूयाद्यो वालं विज्ञातुं स्यान्मेधाविने तपस्विने वा ।—

'विद्या ह वै ब्राह्मण मा जगाम गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् ॥
य आतृणत्त्यवितथेन कर्णावदुःखं कुर्वन्नमृतं सम्प्रयच्छन् ।
तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत्कतमच्च नाह ॥
अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा ।
यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत् ॥
यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्ते न द्रुह्येत्कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥'

--इति । निधिः शेवधिरिति"--इति ॥ एवमन्यत्रापीह बहुत्र ।

( ९ ) विरुद्धार्थानामपि मन्त्राणां सामान्यविशेषन्यायेन प्रामाण्यं स्वीकार्यमित्यपि प्रादर्शि तेन । तद्यथा— 'ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीरित्याह हिंसन् ? •—• आम्नायवचनादहिंसा प्रतीयेत"-इति ( १:५. १, २. ) ।

( १० ) आगमकल्पनीयेषु भेदार्थेषु सिद्धान्तीकरणप्रकारोऽपि प्रदर्शितस्तेन । तद्यथा— "यददवसं गाव पद्यदन सवतैर्गत्वर्थस्यासौ नामकरणस्तस्मान्नावगच्छन्ति ( १. ६. १. )"-इत्यादिः ।

( ११ ) पूर्वतनैराचार्यैरपि प्रणीतेषु ग्रन्थादिषु न तस्यासीद् भ्रमशून्यत्वविश्वासः, प्रत्युत सर्वत्रैवास्ति भ्रमसम्भवः, अतोऽतिविश्वासः सर्वस्यैव दूषणीयः, परीक्षणीयाश्च सर्व एव सिद्धान्ताः, परीक्षया प्रमाणितं च तत्र कुत्रचिद् भ्रमे कस्यचित् एव तत्त्वमादरं इत्येव तस्य भगवतः स्वकीयं मतम् । तथेद

ध्वनित मिह। यथा— बभूव शाकल्यो नामाचार्यः ऋक्-संहितायाः पदकारः, पाञ्चाला बाभ्रव्याचार्यश्च ऋषिश्च तदवलम्ब-नेनैवाभवत् क्रमप्रवक्ता। इहैकत्रैव तयोरुभयोरपि भ्रमः प्रद-र्शितः— "वायः, वे पुत्रः। ०—०। वेति च य इति च चकार शाकल्यः। उदात्तं त्वेव माख्यात मभविष्यत्, असु समाप्तश्चार्थः"-इति ( ६. ५. ५. )।

( १२ ) उणादिसूत्राणा मपि बहुत्रानादरः सूचित । उक्तं हि एकादशे 'व्योम'-इत्यस्यार्थो 'व्यवने'-इति ( ११. ४. ६. ); तथा च विपूर्वकादमतेरेव व्योम नाम इति व्यक्तस्तदभिप्रायः। पदकारादीनां मप्ययमेवार्थः सम्मत एव; तत्र 'वि॒ऽओमन'-अव-ग्रहादिदर्शनात् ( ऋ० मं० प० २. ३. २२. १. )। उणादिसूत्रेण तु 'व्येञ् संवरणे'-इत्यत एव मनिनि निष्पद्यते व्योमेति ( उ० सू० ४. १५०. )। एव मन्यत्रान्यत्रापि बहुत्र द्रष्टव्यम्।

( १३ ) यत्र यत्र संहितामेदतोऽवग्रहे मतभेदो विद्यते, तादृश-पदानां तथा निर्वचनवैविध्य मपि प्रकटितं बहुत्रैव। तद्यथा— अस्ति सूर्यशब्दस्यावग्रहे पदकारादीनां मतभेदः; बह्वृचां पदक्रम-पाठयोः किल न क्वाप्यवग्रहीतः पठ्यते सूर्यशब्दः, छन्दोगानान्तु क्वचित् क्वचिदवगृह्यीतोऽपि 'सु। ऊर्यः'-इत्यादि ( सा० छ० प० ६. १. ५, ६. )। अतएवाच क्षतं तेन तथा निर्वचनवैवि-ध्यम्— "सूर्यः, सर्त्तेर्वा सुवतेर्वा स्वीर्यतेर्वा"-इति (१२. २. ३.)। इतएव गम्यते— बह्वृक्पदकारमते सर्त्तेरेव सर्त्तेः सुवतेर्वा निष्पद्यते सूर्य इति न तेन तत्रावग्रहः कृतः क्वापि; सामपदकारनये तु पर्यायतोऽधतः क्वचित् सर्त्तेः सुवतेर्वा क्वचित् स्वीर्यतेः ( सूपसर्ग पूर्वादीर्यतेः ) स्वीकार्य सूर्यनामेति क्वचिदवग्रहः कृतः क्वचि

चेति च। तथाहि— छन्द पदसंहितायां पञ्चप्रपाठकीयप्रथमा ईस्य पञ्चमे दशति द्वितीये मन्त्रे 'सूर्यम्'-इत्यनवगृहीत मेव पठितम्, पर तत्रैवानुपद षष्ठे अवगृहीत 'सु। जर्यस्य'-इति। एव मित्रशब्दोऽपि द्वाभ्या मेकतय निरुक्त — "मित्र, प्रमीते स्त्रायते सम्मिन्वानो द्रवतीति वा मेदयतेर्वा"-इति (१०. २. ८)। अतएव बह्वृचा "प्रेष्ठं वो अतिथि स्तुषे (ऋ॰ सं॰ ६ ६ ५ १)" -इत्यस्य पदपाठे 'मित्रम्'-इत्यनवगृहीत श्रूयते, छन्द पद संहितायान्तु तत्रैव मन्त्रेऽवगृहीत मेव 'मि। त्रम्'-इति (सा॰ छ॰ प॰ १.१ १ ५)। पुत्रशब्दोऽप्येव मेव द्वाभ्या मेकतय निरुक्त — "पुत्र, पुरु त्रायते निपरणाद्वा पु नरक ततस्त्रायत इति वा"-इति (२ ३ २)। अतएव बह्वृचाम् "इन्द्र क्रतु न आभर (ऋ॰ सं॰ ५ १ २१ ६)"-इत्यस्य पदपाठे 'पुत्रेभ्य'-इत्यनवगृहीत श्रूयते, छन्द पदसंहिताया तु तत्रैव मन्त्रेऽव गृहीत मेव 'पु। त्रेभ्य'-इति (सा॰ छ॰ प॰ ३ २ २ ७)। सखिशब्दस्तु यास्केन द्विर्निरुक्त, परिशिष्टेऽप्येकत्र (७ ७ ८, १३ १ १२, २ ११) पर समाननामोपपदात् ख्यातेरित्येकविध एव सर्वत्र, तथा च तत्पदपाठे खल्ववग्रहेणैव भवितव्यम्, न च तथा दृश्यते बहुग्रन्थेषु। तथाहि— "इम स्तोम सक्रतो (ऋ॰ सं॰ १ ६ ३० १)"-इत्यस्य पदपाठे 'सख्ये'-इत्यनवगृहीत मेव श्रूयते,—छन्द पदसंहितायान्तु तत्रैव मन्त्रे ऽवगृहीत 'स। ख्ये'-इति (सा॰ छ॰ प॰ १ १ २ २ ४)। वस्तुत सर्वत्र पदकाराभिप्रायबोधोऽस्माक दुरूह एव, क्रमकारास्तु तदनुगता, जटादिपाठाश्च तन्मूलका एव। बहुत्र तु सामपदसंहितायामनव गृहीत मपि बह्वृचा पदपाठेऽवगृहीत मेवाधीयते। तद्यथा—

"अग्ने मृड महाएं असि ( ऋ० सं० ३, ५, ८, १. )"–इत्यस्य ऋक्पदपाठे 'देव ऽयुम्'–इत्यवग्रहीतम् ; छन्दःपदपाठे तु 'देवयुम्'–इत्यनवग्रहीत मेव ( सा० छ० प० १. १. ३. ४. )। एवम् "इन्द्र मिद्देवतातये ( ऋ० मं० ५. ७, २५ ५. )"–इत्यस्य ऋक्पदपाठे 'देव ऽतातये'–इत्यवग्रहीतम् ; छन्दःपदपाठे तु 'देवतातये'–इत्यनवग्रहीत मेव ( सा०छ०प० ३,२,१,७, ) स्थित मिति।

( १४ ) यदि क्वचिद् वेदव्याख्याने प्रामाणिकानां व्याख्यातॄणा मतान्तरता लक्ष्येत, तत्र विनिगमनाविरहात् सर्वेषा मेव मताना मादरोऽस्माकं कर्त्तव्य एवेत्यपि निदर्शितम्। तद्यथा— ऋक्संहितायाः पदकारः शाकल्यो नाम ऋषिः ; सामवेदीयायाश्छन्दोनामसंहितायाः पदकार ऋषिर्गार्ग्यो नाम च ; तदेतावुभावेव प्रामाणिकौ वेदव्याख्यातारौ ;— एतयोरनुगताः क्रमादिकारायातुर्द्धनादिग्रन्थकारायावश्यं प्रामाणिका एवेत्यत्र च नैवास्ति संशयः। अस्ति चैको मन्त्रो "यदिन्द्र चित्र मेहनास्ति" –इति ऋक्संहितायाम्, छन्दःसंहितायाञ्च। तत्र ऋक्पदग्रन्थे, तदनुसृतेषु क्रमग्रन्थादिषु च यदवगम्यते 'मेहनास्ति'– इति पदद्वयम् ; तदेव छन्दःपदग्रन्थे, तदनुसृतेषु सामग्रन्थादिषु क्रमग्रन्थादिषु चावगम्यते पदचतुष्टयत्वेन ; तदेव द्विविध एव पदच्छेदोऽभ्युपेयोऽस्माभिर्विनिगमनाविरहादिति बोधयितु मुक्तम्, —"मेहनास्ति ०—० मंहनीयं धनम् अस्ति यत्, म इह नास्तीति वा त्रीणि मध्यमानि पदानि"–इति (४. १. ४.)। अथैतदपि परिव्यक्तम्— संहिताभेदकृतः पाठभेदोऽप्यवश्य मभ्युपेय इति। यथा — "यदिन्द्र चित्र मेहनास्ति"–इति ऋक्पाठ. (४, १, १०,१,) ; "यदिन्द्र चित्र म इह नास्ति"–इति तु सामपाठः (४.२.१.४.)।

इव वरोऽभिप्रेतः"–इति च ( ६. २. ६. )। "गर्त्तारोहिण्येव धन-लाभाय दाक्षिणाजी ( ३. १. ५. )"–इत्येवमादीनि च।

(१८) मन्त्राणामुत्पत्तिबीजान्यपि बोधितान्येतेन। तथाहि—

"अथापि स्तुतिरेव भवति नाशीर्वादः,— 'इन्द्रस्य नु वीर्याणि प्र वोचम्'–इति, यथैतस्मिन् सूक्ते ( ऋ० सं० १. ३२. )।

"अथाप्याशीरेव न स्तुतिः,–'सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासम्'–इति,तदेतद्बहुलमाध्वर्यवे याज्ञेषु च मन्त्रेषु।

"अथापि शपथाभिशापौ,— 'अद्या मुरीय यदि यातुधानो अस्मि ०—० अधा स वीरैर्दशभिर्वि यूयाः'–इति (७. १०४. १५.)।

"अथापि कस्यचिद् भावस्याचिख्यासा,— 'न मृत्युरासीदमृतं न तर्हि', 'तम आसीत्तमसा गूळ्ह मग्रे"–इति (१०.१२८.२,३.)।

"अथापि परिदेवना कस्माचिद् भावात्,— 'सुदेवो अद्य प्रपतेदना-वृत्', 'न वि जानामि यदि वेद मस्मि'–इति (१० .८५; १.१६५.)।

अथापि निन्दाप्रशंसे — 'केवलाघो भवति केवलादी', 'भोज-स्येदं पुष्करिणीव वेश्म'–इति ( १०. ११७. ६ ; १०७. १०. )।

एव मक्षसूक्ते (१०. ३४. १३.) द्यूतनिन्दा च कृषिप्रशंसा च।

एव मुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति॥"–इति (७.१.३.)

( २० ) अपि मनुष्याणा मेवाध्ययनादितप प्रभावाद्दृषित्व माप्य मिति चाख्यातम्। "तद् यदेनांस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्या-नर्षत्, तदृषीणा मृषीत्वम्"–इत्येवमादिभिः ( २. ३. २. )।

परिशिष्टेऽपि तथा "मनुष्या वा०—० यदेव किञ्चानूचानोऽभ्यूहत्यार्षं तद् भवति"–इति ( १३. १ १२. )।

(२१) मन्त्राणा मुत्पत्तौ हि बहुत्र सांसारिकघटनादीना मपि हेतुत्वं निरूपितम्। तद्यथा— "त्रितं कूपेऽवहित मेतत् सूक्तं

प्रतिश्रुभौ (४. १. ६.)"-इति, "इदञ्च मेऽदादिदञ्च मेऽदादि-त्यृषिः प्रसङ्ख्यायाह (४. २. ७.)"-इति, "ऋषिपुत्रा विमथितं वेदयन्ते (५. १. २.)"-इति च। तथाच यद्यपि सायणादिमते सर्व एव मन्त्रा यज्ञसम्पादनायैव दृष्टाः, परं यास्कमते तु नैव सर्वेषां यज्ञसम्पादनायैवोत्पत्तिरित्यपि सुव्यक्तम्।

(२२) वेदार्थबोधस्यातिदुरूहत्व मपि वर्णितम्। तद्यथा— "अप्येकः पश्यन्न पश्यति"-इत्यादि (१. ६. २.); एवमन्यत्रान्यत्रापि। परिशिष्टेऽपि "यस्तन्न वेद किमृचा करिष्यति (१३. १. १०.)"-इति, "अयं मन्त्रार्थचिन्ताभ्यूहः"-इत्यादि, "तस्यास्तपसा पार मीप्सितव्यम्"-इत्यादि च (१३. १. १२, १३.)।

(२३) अयोग्यपात्रायोपदेशदान मपि निषिद्धं यास्केन। तथाहि— "नैकपदानि निर्ब्रूयान्नावैयाकरणाय नानुपसन्नाया-निदंविदे वा नित्यं ह्यविज्ञातुर्विज्ञानेऽसूयोपसन्नाय तु निर्ब्रूयाद् यो वालं विज्ञातुं स्यान्मेधाविने तपस्विने वा"-इति (२. १. ६.)।

(२४) मन्त्राणां दैवतनिर्णयस्य दुरूहत्वं वेदार्थबोधगर्भस्या-कर्षीव्यास्यवेत्येतदस्य मपि दृष्टान्तप्रदर्शनेन दृढीकृतम्। तद्यथा— "शाकपूणिः सङ्कल्पयाञ्चक्रे सर्वा देवता जानामीति। तस्यै देवतोभयलिङ्गा प्रादुर्बभूव। तां न जज्ञे। तां पप्रच्छ विविदिषाणि त्वेति। साऽस्मा एतामृचमादिदेशैषा मद्देवतेति"-इति (२. २. ४.)।

इह हि निरुक्तवचने यदस्ति 'देवतोभयलिङ्गा'-इति, तस्य उभयविधलिङ्गयुक्तं यस्या मन्त्रदेवताया, तादृशी उभयलिङ्गा मन्त्रदेवता 'प्रादुर्बभूव' तन्मन्त्रमुद्दिश्याभवदित्यर्थः। तस्य मन्त्रस्य देवतानिर्देशे निरुक्तव्यहेतुकः सन्देहो भवेदेव, तादृशं सन्देहं च समाश्रित्यैवेदमभिप्राय। श्रूयते च तथा तत्र तद्दाहरणे,

पूर्वार्द्धर्चारम्भे 'स.' इति कर्तृपदम्, उत्तरार्द्धर्चारम्भे 'सा'-इति कर्तृपदञ्चेतीत्थं तन्मन्त्रदेवता पुंस्त्वस्त्रीत्वोभयविधलिङ्गयुक्तेत्यतः तस्य मन्त्रस्य का देवता ? इत्येवं संशयः सम्भवेदेव। एता-दृशसंशयस्यापाकरणन्तु तत्तन्मन्त्रार्थालोचनयैव भवितव्य मित्यभि-प्रायेणोक्तं 'ता पप्रच्छ'-इत्यादि। सम्यगालोचिता सती तादृशी ऋगेव स्वयं स्वदेवता मभिव्यनक्तीति तात्पर्यम्। तदुदाहृता ऋगेषा ऋ० सं० १. १६४. २९ (निरु० २. २. ५.)। अपि वा 'देवतोभयलिङ्गा' इत्येकं पदम्, ऋगेव तस्य वाच्योऽर्थः; तादृशी ऋक् तत्स्मृतिपथ मारूढेति भावः। 'सा' ऋक् 'एता मध मादिदेश' स्वात्मानं प्रकाशितवती; पुनः पुनः चिन्ता न्दोलनेन तादृगर्थस्तन्मनसि स्फुटं प्रतिबभाविति भावः। सत्येवं सैव ऋक् कथितवतीव 'एषा' स्त्रीपुंस्वरूपा उभयात्मिका वस्तुत एकैव 'मद्देवता' मम देवतेति यावत्।

(२५) वेदार्थविषये बहुत्र संशयस्यावश्यम्भाविता च दर्शिता तेन। तद्यथा— "पूषा त्वेतश्च्यावयतु (ऋ० सं० ७. ६. २३. ३.)"-इत्येतस्या ऋचो व्याख्यानावसरे स्वकण्ठरवेणैवोक्तम्— "स त्वेतेभ्य. परि ददत् पितृभ्य इति सांशयिकस्तृतीयः पादः। पूषा पुरस्तात् तस्यान्वादेश इत्येकम्, अग्निरुपरिष्टात् तस्य प्रकीर्त्तनेत्यपरम्"-इति (७. ३. २.)।

(२६) वैदिकोपाख्यानाना मुपमादिमूलकत्ववर्णनेनावाम्त-विकत्व मपीह प्रतिपादितं बहुत्र। तद्यथा— "तत् को वृत्रः ? मेघ इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहासिकाः; अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति" -इति (२. ५. २.)। तदेवमादीतिहासाख्यानानामवास्तविकत्वं स्फुटम्।

प्रतिब्रूमो ( ४. १. ६. )"-इति, "इदश्च मेऽदादिदश्च मेऽदादि-त्यृषिः प्रसङ्ख्यायाह ( ४. २. ७ )"-इति, "ऋषिपुत्रा विलपितं वेदयन्ते ( ५. १. २. )"-इति च। तथाच यद्यपि सायणादिमते सर्व एव मन्त्रा यज्ञसम्पादनार्थैव दृष्टाः, परं यास्कमते तु नैव सर्वेषां यज्ञसम्पादनार्थैवोत्पत्तिरित्यपि सुव्यक्तम्।

( २२ ) वेदार्थबोधस्यातिदुरूहत्वमपि वर्णितम्। तद्यथा— "अप्येकः पश्यन्न पश्यति"-इत्यादि ( १. ६. ३. ); एवमन्यत्रान्यत्रापि। परिशिष्टेऽपि "यस्तन्न वेद किमृचा करिष्यति ( १३. १. १०. )"-इति, "अयं मन्त्रार्थचिन्ताभ्यूहः"-इत्यादि, "तस्मात्तपसा पारमीप्सितव्यम्"-इत्यादि च ( १३. १. १२, १३. )।

( २३ ) अयोग्यपात्रायोपदेशदानमपि निषिद्धं यास्केन। तथाहि— "नैकपदानि निर्ब्रूयान्नावैयाकरणाय नानुपसन्नायानिदंविदे वा नित्यं ह्यविज्ञातुर्विज्ञानेऽसूयोपसन्नाय तु निर्ब्रूयाद् यो वालं विज्ञातुं स्यान्मेधाविने तपस्विने वा"-इति (२.१.६)।

( २४ ) मन्त्राणां दैवतनिर्णयस्य दुरूहत्वं वेदार्थबोधगर्वस्य कार्श्यत्वं चेत्येतद्द्वयमपि दृष्टान्तप्रदर्शनेन दृढीकृतम्। तद्यथा— "शाकपूणिः सङ्कल्पयाञ्चक्रे सर्वा देवता जानामीति। तस्मै देवतोभयलिङ्गा प्रादुर्बभूव। तां न जज्ञे। तां पप्रच्छ विविदिषाणि त्वेति। सास्मा एतामृचमादिदेशैषा मद्देवतेति"-इति (२.२.४)।

अत्र हि निरुक्तवचने यदस्ति 'देवतोभयलिङ्गा'-इति, तत्र उभयविधलिङ्गयुक्तत्वं यस्या मन्त्रदेवतायाः, तादृशी उभयलिङ्गा मन्त्रदेवता 'प्रादुर्बभूव' मन्त्ररूपेणोदिताभवदित्यर्थः। अस्य मन्त्रस्य दैवतनिर्णये लिङ्गद्वयहेतुकः संशयो भवेदेव, तादृशं मन्त्रेषु च मन्त्रार्थेष्वेवेत्यभिप्रायः। श्रूयते च तथा तत्र तदुदाहृते,

( ३१ ) वेदानां प्रामाण्यं तु हृदयेनैवाङ्गीकृतं मासीत्तस्य खलु भगवतो यास्कस्य । अतएवोक्तम् — "आम्नायवचनादहिंसा प्रतीयेत"–इति ( १. ५. २. ), "आम्नायवचनादेतद् भवति ( ७. ७. १. )"–इत्यादि च ।

( ३२ ) एवं वैदिकवचनेषु तस्य श्रद्धातिशयश्च मन्यते । तदुक्तम्— "यथो एतदविस्पष्टार्था भवन्तीति, नैष स्थाणोरपराधो यदेनमन्धो न पश्यति, पुरुषापराधः स भवति"–इति ( १. ५. २. ) ।

(३३) परलोकास्वीकारकारिणा निन्दाप्यत्र वर्णिता । तद्यथा— "किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् । आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धया नः । ( ३. ३. २१. ४. )"–इत्येतन्मन्त्रव्याख्याने ह्युक्तम्— 'किं ते कुर्वन्ति कीकटेषु गावः, कीकटा नाम देशोऽनार्यनिवासः; कीकटाः किं कृताः किं क्रियाभिरिति प्रेप्सा वा । नैव चाशिरं, दुह्रे न तपन्ति घर्मं हर्म्यं आहर नः प्रमगन्दस्य धनानि । मगन्दः कुसीदी माङ्गदो मा मागमिष्यतीति च ददाति तदपत्यं प्रमगन्दोऽत्यन्तकुसीदिकुलीनः, प्रमदको वा, योऽय मेवास्ति लोको न पर इति प्रेप्सुः, पण्डको वा, पण्डक. पण्डगः प्राद्दको वा प्राद्दयत्याण्डावाण्डावाणी इव व्रीडयति तत्स्तम्भे ; नैचाशाखं नीचाशाखो नीचैःशाखः ; शाखाः शक्नोतेराणिरशनात् तन्नो मघवन् रन्धयेति रध्यतिर्वशगमने'–इति ( ६. ६. ४ ) ।

( ३४ ) मन्त्रकाल-प्रचलिताः सामाजिकव्यवहारकथायाख्याता इह प्रतीयन्ते क्वचित् क्वचित् प्रसङ्गतः । तद्यथा— "स्त्रीणा दानविक्रयातिसर्गा विद्यन्ते , न पुंसः ; पुंसोऽपीत्येके"–इति । एव मौरसमित्राना पुत्राणां सपत्रयं चाह — "अन्योदर्यो मनसापि

(२७) मन्त्रेषु श्रुताः स्वस्रादिसम्बन्धिशब्दा यदि माहचर्यादिमूलका गौणार्था एव, न तु मुख्यार्था इति चेह बहुत्वावेदितं तेन । तद्यथा— "उपस मस्य (आदित्यस्य) स्वसार माह,— माहचर्याद्रसहरणाद्वा (३. ३. ४.)"—इति, "पिता दुहितुर्गर्भ माधात् (ऋ० सं० १. १६४. ३३.) ०—० पिता = पालयिता ०—० पर्जन्यः पृथिव्याः"—इत्यादि च (४. ३. ५.)।

(२८) मीमांसाग्रन्थेषु यथा ब्राह्मणग्रन्थप्रोक्ताना मपि ग्रावा छगिरित्येवमादीना सर्वेषा मेव मन्त्रापदानां यौगिकत्व तथा *कल्पितव्यक्तिवाचकत्वञ्च सिद्धान्तितम्, नात्र तथा ;* इह तु प्रकृतव्यक्तिनामानि वस्तुनामान्यपि श्रूयन्ते मन्त्रेष्वपीति सूचितम्, तत् किं मन्त्रभाष्यकरेषु ब्राह्मणवाक्येष्विति स्फुटम् । तद्यथा— "स्थूरं राध शताश्वं कुरुङ्गस्य दिविष्टिषु"—इति मन्त्रस्य (ऋ०सं० ८. ४. २१.) व्याख्यानायोक्तम्— "कुरुङ्गो राजा बभूव, कुरुगमनाद् वा कुलगमनाद्वा"—इति (६. ४. ८.), एवं "यतो यतासि यस"—इति मन्त्रस्य (ऋ० सं० ६. ७ ८. १) व्याख्याने सूक्तम्— "लिबुजा व्रततिर्भवति (६. ५. ५.)"—इत्यादि ।

(२९) वस्तुतत्त्वनिर्णयाय ब्राह्मणवचनान्यपीह बहून्युद्धृतानि, तद्यथा— "षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च ब्राह्मणं समासेन", "सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च ब्राह्मणं विभागेन (४. ४. ६.)" —इत्येवमादीनि ।

(३०) प्रसङ्गसङ्ख्या बहूनां ब्राह्मणवचनाना मेकदेशशुद्धितया प्रामाण्यमेवेह दर्शितम् । तद्यथा— "बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति"—इत्यादि (७. ७. १) द्रष्टव्यम् ।

( ३१ ) वेदानां प्रामाण्यं तु हृदयेनैवाङ्गीकृतमासीत्तस्य खलु भगवतो यास्कस्य। अतएवोक्तम् — "आम्नायवचनादहिंसा प्रतीयेत"–इति ( १. ५. २. ), "आम्नायवचनादेतद् भवति ( ७. ३. १. )"–इत्यादि च।

( ३२ ) एवं वैदिकवचनेषु तस्य अशातिशय्यश्च गम्यते। तदुक्तम्— "यथो एतदविस्पष्टार्था भवन्तीति, नैष स्थाणोरपराधो यदेनमन्धो न पश्यति, पुरुषापराधः स भवति"–इति ( १. ५. २. )।

(३३) परलोकास्वीकारकारिणा निन्दाप्यत्र वर्णिता। तद्यथा— "किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम्। आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धया नः। ( ३. ३. २१. ४. )"–इत्येतन्मन्त्रव्याख्याने ह्युक्तम्— 'किं ते कुर्वन्ति कीकटेषु गावः, कीकटा नाम देशोऽनार्यनिवासः; कीकटाः किं कृताः किं क्रियाभिरिति प्रेप्सा वा। नैव चाशिरं दुह्रे न तपन्ति घर्मं हर्म्यं माहर नः प्रमगन्दस्य धनानि। मगन्दः कुसीदी माङ्गदो मा मागमिष्यतीति च ददाति तदपत्यं प्रमगन्दोऽत्यन्तकुसीदिकुलीनः, प्रमदको वा, योऽय मेवास्ति लोको न पर इति प्रेप्सुः, पण्डको वा, पण्डकः पण्डगः प्राईको वा प्राईयत्याण्डावाण्डावाणी इव व्रीडयति तस्तम्भे; नैचाशाखं नीचाशाखो नीचैःशाखः; शाखाः शक्नोतेराणिररणात् तन्नो मघवन् रन्धयेति रध्यतिर्वशगमने'–इति ( ६. ६. ४ )।

( ३४ ) मन्त्रकाल प्रचलिताः सामाजिकव्यवहारकथाश्चात्र इह प्रतीयन्ते क्वचित् क्वचित् प्रसङ्गतः। तद्यथा— "स्त्रीणा दानविक्रयातिसर्गा विद्यन्ते, न पुंसः; पुंसोऽपीत्येके"–इति। एव मौरसमित्राणां पुत्राणां सप्रायस्य चाह — "अन्योदर्यो मनसापि

न मन्त्रो ममाय मिति"–इति ( ३. १. ३. ) । "रामा रमणायो-पेयते न धर्माय ; कृष्णजातीया"–इति च ( १२. २. २. ) ।

अत्र यदुदाहृतं पूर्वसंस्करणे—"देवरः कस्मात् ? द्वितीयो वर उच्यते"–इति, तद् भ्रान्त्यैव ; प्राचीनतमपुस्तके तथापाठानुपलब्धेः, विधवेतिपूर्वपदनिर्वचन मन्तरेव देवरपदनिर्वचनस्यायुक्तत्व-प्रतीतेः, किञ्च तत्रैव ततः किञ्चिदुत्तरम् "देवरो दीव्यतिकर्मा"–इति देवरनिर्वचनश्रुतेः, 'कुहस्विद् दोषा'–इत्येतन्निगमस्य पान्थ-विधायार्थविभाषाच्च । तथाहि 'कनीयसा ज्यायांस मुपमिमीते'–इति स्त्रीक्तस्योदाहरणभूतैषा ऋगुद्धृता यास्केन ( ३. ३. ३. )—

"कुहस्विद् दोषा ? कुह वस्तोरश्विना ?
कुहाभिपित्वं करतः ? कुहोषतुः ? ।
को वां शयुत्रा विधवेव देवरम् ?
मर्यं न योषा कृणुते सधस्थ आ ? ॥"( १०. ४१. २. )

अस्या यास्कसम्मतोऽर्थ एषः ;— हे 'अश्विना' अश्विनौ सूर्या-चन्द्रमसौ ! उपलक्षणञ्चैतत् पान्थयोः, हे पान्थौ ! दीर्घाध्वभ्रमण-कारिणोर्युवयोः, 'दोषा' रात्रिः 'कुहस्विद्' क्वातीता ? अपि वा 'दोषा' रात्रौ क्व भवथः ? एवं 'वस्तोः' दिवा 'कुहस्विद्' ? 'कुहाभिपित्वं करतः' क्व अभिप्राप्तिं भोजनस्य कुरुथः ? 'कुहोषतुः' क्व वसथः विश्रामाय ? किञ्च 'वां' युवयोः 'शयुत्रा' शयने 'देवरं' चालकं पतिभ्रातरं प्रति 'विधवा' पतिहीना भ्रातृजाया इव 'कः' पुरुषः सस्नेहं शुश्रूषेत ? अपि 'योषा' स्त्री 'मर्यं' युवानं स्वपतिम् 'न' इव 'सधस्थे' सहस्थाने 'आ कृणुते' आकुरुते, को जन इति शेषः । तदेव मत्र, किञ्चिदुद्देश्यं साधयितुं बहुदूर-गामिनः पान्थस्य अहर्निशयोर्गमनागमने प्रति दृष्टिर्न युज्यते,

नापि भोजनविश्रामयोः, न च स्नापस्नपूपयोरित्युपदेशो व्यक्त । कुमारं देवरं प्रति भ्रातृजायायाः स्नेहातिशयप्रयुक्त. पालनभाव , पतिं प्रति स्त्रियाश्च प्रेमप्रणोदिताभावश्चेत्येतावपि नैसर्गिकाविति चेद् द्योतितम् । न हि विवाहितपतिम्भ्रातृका विधवेत्युच्येत, नापि विवाहितभ्रातृजायोऽपि स्याद् देवर'। मिथोऽविवाहितयोरेव विधवादेवरयोरेवात्र मन्त्रे प्रयनस्थितिर्वर्णितेति चेत् , तत् किं प्रेम्णा, वात्सल्येन वा ? आद्ये चेदस्य व्यभिचारवर्णनदोष. स्यादनिवार्य. , अन्त्ये तु स्त्रोऽत्रति "देवरः कस्मात् ? द्वितीयो वर उच्यते"-इत्येतन्निर्वचनस्यावोल्लेखः कुतो न प्रमत्तगीतता मैयादिति पक्षपातशून्यैः सुधीभिर्विचार्य्यं राकलयता मिति ।

(३५) पापपुण्ययोरत्र निदर्शनान्युपदिष्टानि दिङ्मदर्शनेन । तद्यथा— "न पापा मन्यामहे ;— नाधना , न ज्वलनेन हीनाः, अस्त्यस्मासु ब्रह्मचर्य मध्ययन तपो दानकर्म इत्यृषिरवोचत्"-इति ( ६. ५. २. ), "सप्त मर्यादा. कवयश्चक्रु. । तासा मेका मभ्यधिगच्छन्नहस्वान् भवति ,— स्तेयम् , तल्पारोहणम् , ब्रह्महत्याम् , भ्रूणहत्याम् , सुरापानम् , दुष्कृतस्य कर्मण. पुन. पुन. सेवाम् , पातके नृतोद्य मिति"-इति ( ६. ५. ४. ), "ब्राह्मणाय बुभुक्षितायौदन देहि, स्नातायानुलेपनम् , पिपासते पानीयम् ( ७. ३. १०. )"-इत्येवमादि च ।

( ३६ ) आब्रह्मस्तम्बपर्यन्तानां सर्वेषा मेव पदार्थाना मिह देवत्वघोररीकृतम् । तथाहि— "यत्काम ऋषिर्यस्या देवताया मार्थपत्य मिच्छन् स्तुतिं प्रयुङ्क्ते , तद्दैवतः स मन्त्रो भवति"-इति ( निरु० ७. १. १. ), "यो देवः सा देवता"-इति च ( ७. ४.२ )। "देवो दानाद्वा, दीपनाद्वा , द्योतनाद्वा , द्युस्थाना

भवतीति वा"-इति देवशब्दनिर्वचनञ्च तत्रैव । द्युशब्दश्चात्र नभोमण्डलमात्रस्योपलक्षकः, एवं हि अन्तरिक्षस्थानां, सौरजगद्वहिर्भूतानां ध्रुवादीनाञ्च ग्रहण मिह सिध्यति । तदेव मिन्द्रवाय्वादीना मचेतनानां धनादिदानहेतुकम्, याजकवरराजादीनां चेतनानां चार्थादिदानहेतुकं देवत्वम् ; अश्वादिजीवानां अजीवानाञ्च पाषादीनां दीप्तिहेतुकं देवत्वम् ; अग्निचन्द्रपर्जन्यादीनां ब्रह्मवर्चस्विनां विद्युतश्च द्योतनहेतुकं देवत्वम् ; सूर्यसूर्यकरादीनां तद्-परिस्थानां तारकादीनाञ्च द्युस्थत्वनिबन्धनं देवत्वम् ; यत्र त्वीश्वरे सर्व एवैते गुणा उपपद्यन्ते, तस्य देवत्वस्य तु कैव कथा । तदेव मानवात्स्तम्बपर्यन्तानां सर्वेषा मेव पदार्थानां देवत्व मुपगम्यते । द्युस्थत्वे सति दानादिगुणवत्त्व मिद मेक मेव देवलक्षणं स्वीकार्य मिति मते तु सूर्येन्द्राग्न्यनिलेन्दुप्रभृतीनां मूलतो भमण्डलस्थाना मेव पदार्थानां मुख्यं देवत्वम्, तत्तत्स्थानभक्तिसाहचर्यसम्बन्धेषां भूरादिलोकानां तत्स्थानां मनुष्यौषध्यादीनां गणीत्येव विशेषः ।

तथाचोक्तं यास्केन—"तिस्र एव देवता इति नैरुक्ताः । अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः"-इति (७. २. १.), "तासा [तिसृणां देवतानां] भक्तिसाहचर्यं व्याख्यास्यामः । अथैतान्यग्निभक्तीनि—अयं लोकः ०—० ये च देवगणाः समाम्नाताः प्रथमे स्थाने"-इत्यादि (७. ८. १.) च । तानि च प्रथमे स्थाने समाम्नातानां देवानां नामानि निघण्टावाम्नातानि—"अश्वः शकुनिः मण्डूकाः"-इत्यादीनि (५. ३. १-३६.) षट्त्रिंशत् द्रष्टव्यानि । व्याख्यातश्च ता देवता निरुक्ते समस्तोदाहरणम्—"अथ यानि पृथिव्यायतनानि स्तुतिं लभन्ते, तान्यतोऽनुक्रमिष्यामः । तेषा मश्वः प्रथमागामी भवति"-इत्यादिना (८. १-४३.) । एवम्

"अथैतानीन्द्रभक्तीनि अन्तरिक्षलोकः ०—० ये च देवगणाः समाम्नाता मध्यमे स्थाने"-इत्यादि चोक्तं तत्र तदुत्तरम् ( ७. ३. २. )। मध्यमे स्थाने समाम्नातानां देवानां नामानि च तत्रैव निघण्टौ— "श्येनः सोमः चन्द्रमाः"-इत्यादीनि षट्त्रिंशत् ( ५. ५. १—३६. )। व्याख्यातास्ता अपि देवता निरुक्ते ससन्दोदाहरणम्— "श्येनो व्याख्यातस्तस्यैषा भवति"-इत्यादिना ( ११. १—५०. )। एवम् "अथैतान्यादित्यभक्तीनि असौ लोकः ०—० ये च देवगणाः समाम्नाता उत्तमे स्थाने"-इत्यादि चोक्तं तत्र उत्तरम् ( ७. ३. ४. )। उत्तमे स्थाने समाम्नातानां देवानां नामान्यपि तत्रैव निघण्टौ— "अश्विनौ उषाः सूर्या"-इत्यादीनि एकत्रिंशदाम्नातानि ( ५ ६ १—३१. )। व्याख्याताश्च ता अपि देवता निरुक्ते ससन्दोदाहरणमेव— "अथातो द्युस्थाना देवतास्तासामश्विनौ प्रथमागामिनौ भवतः"-इत्यादिना ( १२. १—४६. )। तदेवं प्रधानतो देवतात्रित्वेऽपि स्थानभक्त्यादितो तद्बहुत्वं च न विरुद्धम्। तत्र एवेद सुक्तं तत्र तेनैव— "तासां ( तिसृणां देवतानां ) माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि"-इति ( ७. २. १. )। भागो विभागो भक्तिरित्येकार्थाः। महाभागस्य भावो माहाभाग्यम्। तच्च माहाभाग्यम् एकस्थानभाक्त्वेन, एकस्मिन् मन्त्रे साहचर्येणाम्नातत्वेन, एककर्मभाक्त्वेन, एकवाच्यभाक्त्वेन च भवति। तस्मान्माहाभाग्यादेव देवबहुत्वं स्वीकार्यमिति तदर्थः। तस्मात् वैदिकमन्त्रेषु स्तुता एव पदार्थाः सम्प्रत्नतः स्तुतिकाले एव च देवत्वेन स्तुत्या भवन्ति; नान्ये नाम्न्यन्यत्रेत्येव वैदिकसिद्धान्तः। अत एव ते मन्त्रमयी देवतेत्येव स्वीकुर्वन्तीति च प्रवदन्ति याज्ञिकाः।

तदेवं देवाना मसङ्ख्येयत्वेऽपि दाशतय्या प्रधानतया अग्नि-वाय्विन्द्रसूर्याणा स्तुत्यादिदर्शनात् त एव चत्वारो देवा मुख्या गण्यन्ते, तत्रापीन्द्रस्य वाय्वादिविशेषत्वेनैवाभ्युपगमात् देवतात्रित्व मेव सम्पद्यते। तदेव मत्र पृथिव्या मग्निरेव मुख्यो देव, जला-दयस्तदेकस्थानास्त्वप्रधानाः, अश्वादयश्चेतना वृक्षादयोऽचेतनाश्च पारिभाषिकाः। अन्तरिक्षे वायुर्वेन्द्रो वा मुख्यो देव, पर्जन्या-दयस्तदेकस्थानास्त्वप्रधाना, श्येनादयोऽन्तरिक्षचराश्चेतना ग्रावा-दयोऽचेतनाश्च पारिभाषिका। द्युलोकेऽप्येवं सूर्यो मुख्य, अश्विप्रभृतयस्तदेकस्थानास्त्वप्रधाना, पारिभाषिकदेवास्तु तत्र नैव सन्तीति गम्यते, ब्राह्मणग्रन्थेषु तत्रत्याना तथाविधाना मनुल्लेखादिति॥

(३०) देवताना पुरुषाकारादिचिन्तनस्यातात्त्विकत्वेऽप्युपन्यस्तम् "अथाकारचिन्तन देवतानाम्"–इत्येवमादिभि (७, २, २, २.)। —तदत्र पारिभाषिकदेवत्व मापन्नाना मश्वगकुन्यादीनाचेतना-नाम्, पर्णीधवाणादीना मचेतनानाञ्च दैवशरीरवत्त्व कलत्रा-पत्यादिमत्त्व रागद्वेषादियुक्तत्वञ्च नास्तीति तु लाङ्गलस्कन्ध पाद्गुन पादुकेर्हालिकैरप्यभिगन्तु शक्यते, मुख्यदेवाना मग्न्यादीना तु तत्तदस्ति नास्ति वेति सशय स्यादवेदविदुषा बालानाम्; पौरा-णिका एव ह्रीदृगमशयस्योत्पादकाः। वस्तुतो यथा पारिभा-षिकदेवाना मलक्षदृश्याना सर्वत्र सर्वैर्व्यवहार्याणा मिषादीना देवशरीराद्यभाववत्त्वेऽपि देवत्व मवश्यमेवाङ्गीकार्यम्, मुख्याना मग्न्यादीना मपि देवाना नूम तथैव; यास्कोक्ततन्नामनिर्वचन-स्थाननिर्देश कर्मनिरूपणोत्पत्तिवर्णनेभ्यस्तथैव प्रतीतेः, ब्राह्मण विहिताग्निप्रणयनादीना मत्रैवोपपत्ते, तथामन्त्रेष्वपि तादृगार्थ-

प्रतिपादकवर्णनश्रुतेः, सोदाहरणदेवलक्षणान्यतमस्मृतितोऽपि तथैवा-वगतेः, इष्टैरेवैतैरुपपन्ने यज्ञादौ यज्ञादिफले चैषां मदृष्टविग्रहादि-मत्त्वकल्पनानौचित्याच्चेति। तदेतत्पञ्चहेतुवर्णनं मस्मत्कृताद्वैतरे-यालोचनादवगन्तव्यम् ( ऐ० आलो० २सं० १६२—१७८पृ० ) ॥

( ३८ ) पितृणाञ्च त्रैविध्य मेवेष्टं यास्कस्येति गम्यते। तथाहि —"पितरो व्याख्यातास्तेषा मेषा भवति"–इत्युक्त्वैव,

"उदीरता मवर उत् परास

उन्मध्यमाः पितरः सोम्यासः।

असु य ईयुरवृका ऋतज्ञास्

ते नोऽवन्तु पितरो हवेषु"–इति ( १०.१५.१. ),

एषा ऋगिह उदाहृता तेन, व्याख्याता च सा एवम्—"उदीरता मवर उदीरता पर उदीरतां मध्यमाः पितरः सोम्याः सोमसम्पा-दिनस्तेऽसु' ये प्राण मन्वीयुरवृका अनमित्राः सत्यज्ञा वा यज्ञज्ञा वा ते न आगच्छन्तु पितरो ह्वानेषु"–इति ( ११. २. ६. )।

तथाच तस्या ऋच एषोऽर्थः सम्पद्यते— "हवेषु" 'ह्वानेषु' अस्मदाह्वानेषु सत्सु "ते" 'पितरः" पितृगणाः "नः" अस्मान् "अवन्तु" 'आगच्छन्तु'। ते कीदृशाः ? इत्याह— "ये" "असु" 'प्राणम्' "ईयुः" 'अन्वीयु' प्राप्तवन्त', पूर्वं प्राणान्विता आसन्निति यावत्। तत्र जीवितकाले "अवृका" 'अनमित्राः' सर्वत्र सर्व-दैव साधुव्यवहारत' अमित्रशून्याः, "ऋतज्ञाः" 'सत्यज्ञा वा यज्ञज्ञा वा' कर्त्तृतया कारयितृतया वा यज्ञानुष्ठानविदः, "सोम्यासः" 'सोम्याः = सोमसम्पादिनः' च आसन्निति। ते च कतिविधाः ? इत्याह—"अवरे", "परासः" 'परे, "मध्यमा" चेति त्रिविधाः। तत्र, 'परे' द्युस्थानविचारिणः, "ये चेमेऽरण्ये श्रद्धा तप इत्युपा

सते"–इत्यादिना छान्दोग्ये ( ५, १०. १, २. ) वर्णिताः देवयानमार्गेण सूर्य्यलोकं गताः ; 'मध्यमा' द्यावापृथिव्योरन्तरेण स्थायिनः, "य इमे ग्राम इष्टापूर्त्ते दत्त मित्युपासते"–इत्यादिना छान्दोग्ये ( ५, १०. ३–६. ) वर्णिताः पितृयानमार्गेण चन्द्रलोक गताः ; 'अवरे' भूपृष्ठस्यान्तरिक्षचारिणः, "अथैतयोः पथोर्न कतरेण च"–इत्यादिना छान्दोग्ये ( ५. १०. ८. ) वर्णिताः पृथिव्यामेव निरन्तरावर्त्तिनः। तदेषां त्रिविधानां पितॄणां मध्ये येऽवरास्तेषां समासमार्गाणां सततावर्त्तित्वेन क्वचिदपि दीर्घकालस्थिति सम्भावनाभावात् न पितृलोकस्थत्वम् ; ये परास्तेषां सत्यनावर्त्तित्व-श्रुतेस्तथात्व मेव ; ये तु मध्यमाश्चन्द्रलोकं पितृलोकं वा गता, तेषा मेव स्वस्थानस्थत्वेन प्राधान्य मिष्टम् । अतएव अन्तरिक्षस्थानेष्वेव पठित पितर इति पदम् । यास्केनाप्युक्तम्— "माध्यमिको यम इत्याहुस्तस्मान्माध्यमिकान् पितॄन् मन्यन्ते"–इति ( ११. २. ५, ६. )। 'स हि तेषां राजेति'–इति च तत्र दोर्गी वृत्तिः। "परेयिवांसं प्रवतो महीरनु'–इत्यादिसूक्तद्वये ( ऋ०मं०१०.१४, १५ ) यमस्य पितृराट्त्व पितॄणां स्वरूपञ्च सुव्यक्त मिति दिक् । विशिष्टविशेषतोऽप्युक्त मैतरेयालोचने ८८पृ० १८पङ्क्तित' ८१पृष्ठ यावत् ।

( ९८ ) ईश्वरशब्दार्थस्त्वदैकत्वेन मन्त्रे द्विविध उपलभ्यते । तद्यथा— "ईश्वरः सर्वेषां भूतानां गोपायिताऽऽदित्य "–इत्यादि , "ईश्वरः सर्वेषा मिन्द्रियाणां गोपायिताऽऽत्मा"–इत्यादिच (१. २. ६. )। तदत्र यद्यपि जडात्मकस्य आदित्यस्य , चैतन्यात्मकस्य जीवात्मनश्चेश्वरत्व मुपात्तम् , तथापि तयोर्जडाजडयोराश्रयतया जीवकतया शक्तिप्रदत्वेन चैतदितरयोऽप्यस्ति कश्चिदिति चाकथित मपि गम्यत एव । स एव परमेश्वर इति, परमात्मा इति, पर-

ब्रह्मेति च सर्वैर्गीयते। एवञ्चेह जगति जड., आत्मा, परमात्मा चेति त्रय एव मूलपदार्था इत्येव निष्पन्नम्। वस्तुतो ऽस्य हि परमात्मनो विशेषनामरूपाभावात् सर्वाश्रयत्वात् सर्वव्यापकत्वात् सर्वान्तर्यामित्वाच्च सर्वरूपैः सर्वनामभिर्योगास्तत्त्व मेवार्थसम्पतम्। 'अत एव यथाप्रयोजनं जडस्याजडस्य च स्तुतिरुपपद्यते। अत एवैवं न्रूयते (ऋ० सं० १. १६४. ४६.)—

"इन्द्रं मित्रं वरुण मग्नि माहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वान माहुः"-इति।

तद्व्याख्याने चाचार्यमपि— "एक मात्मानं बहुधा मेधाविनो वदन्तीन्द्रं मित्रं वरुण मग्निं दिव्यं च गरुत्मन्तम्"-इति (७. ४. ५.)। पुनरप्युक्त मूर्ध्वमार्गगतिप्रकरणे— "अथैतं महान्त मात्मान मेषगेणः प्रवदन्तीन्द्रं मित्रं वरुणमग्नि माहुरिति"-इति (१४.२.१.)।

(४०) पुरुषशब्दनिर्वचनावसरे औपनिषदं ब्रह्मज्ञान मपि प्रदर्शित किञ्चित्। तथाहि (२. १. ५.)— "पुरुषः = पुरिषादः, पुरिशयः ; पूरयतेर्वा पूरयत्यन्तरित्यन्तरपुरुष मभिप्रेत्य,

"यस्मात् परं नापर मस्ति किञ्चिद्,
यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चिद्।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकम्,
तेनेदं पूर्णं पुरुषेण सर्वम्"-इत्यपि निगमो भवति"-इति।

एष मन्त्रः श्वेताश्वतरोपनिषदि (३. ८.) दृश्यते, वस्तुतः श्वेताश्वतरसंहितातस्तत्र समुद्धृत एवाय मित्येव यास्केन निगम इतीह प्रदर्शितः ; न हि मन्त्रातिरिक्तस्य निगमत्वेनाख्यानं तस्य भगवतः क्वचिदपीत्युक्तं पुरस्तादिति।

(४१) विज्ञानान्यपीह प्रसङ्गतो बहूनि प्रदर्शितानि। तानि यथा—

(ञ) "षड् भावविकारा भवन्तीति वार्ष्यायणिः;—जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते विनश्यतीति । जायत इति पूर्वभावस्यादि माचष्टे, नापरभाव माचष्टे, न प्रतिषेधति । अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम् । विपरिणमतइत्यप्रच्यवमानस्य तत्त्वाद्विकारम् । वर्द्धत इति स्वाङ्गाभ्युच्चयं सांयौगिकानां वार्थानां वर्द्धते विजयेनेति वा वर्द्धते शरीरेणेति वा । अपक्षीयतइत्येतेनैव व्याख्यातः प्रतिलोमम् । विनश्यतीत्यपरभावस्यादिमाचष्टे, न पूर्वभावमाचष्टे न प्रतिषेधति । अतोऽन्ये भावविकारा एतेषा मेव विकारा भवन्तीति ह स्माह ; ते यथावचन मभ्यूहितव्याः"—इति भावविज्ञानम् १. १. ३, ४ ।

(ट) "अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते दमूनाः क्षेत्रसाधा इति; अथापि नैगमेभ्यो भाषिका उष्णं घृत मिति ; अथापि प्रकृत एवैकेषु भाष्यन्ते विकृतय एकेषु , शवतिर्गतिकर्म्मा कम्बोजेष्वेव भाष्यते ०—०, विकार मस्यार्येषु शव इति ; दातिर्लवनार्थे प्राच्येषु दात्र मुदीच्येषु"—इति भाषाविज्ञानम् २. १. ३, ४ ।

(ठ) "साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्सम्प्रादुरुपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च"—इति वेदवेदाङ्गाद्युत्पत्तिविज्ञानम् १. ६. ५ ।

(ड) "पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे"—इति प्रसङ्गतः समासतो वेदफलविज्ञानम् १. १. २ ।

(ढ) "नाकः = क मिति सुखनाम , तत्प्रतिषिद्धं प्रतिषिध्येत । 'न वा अमुं लोकं जग्मुषे किञ्च नाकम्' (तुग्रगाथीयमन्त्रः)। न वा अमुं लोकं जग्मुषे किञ्च नासुखम् ; पुण्यकृतो ह्येव तत्र गच्छन्ति"—इति स्वर्गविज्ञानम् २. ४. २ ।

( ऐ ) "नरकं = न्यरकं, नीचैर्गमनं, नास्मिन् रमणं स्थान मस्य मस्यस्तीति वा"–इति नरकविज्ञानम् १. ३. ६ ।

( ओ ) "एकः इता सङ्ख्या, द्वौ द्रुततरा सङ्ख्या, त्रयस्तीर्णतमा सङ्ख्या, चत्वारश्चलिततमा सङ्ख्या, अष्टावश्नोतेः, नव न वननीया नावाप्ता वा, दश दस्ता दृष्टार्था वा, विंशतिर्द्विदशतः, शतं दशदशतः, सहस्रं सहस्वद्, अयुतं नियुतं प्रयुतं तत्तदभ्यस्तम्, अर्बुदो मेघो भवत्यरण मम्बु तद्दोऽम्बुमद्भातीति वाम्बुमद्भवतीति वा, स यथा महान् बहुर्भवति वर्षंस्तदिवार्बुदम्"–इति ( ३. ३. ४ ), "पञ्च पृक्ता सङ्ख्या"–इति ( ३. २. २. ), "सप्त सृप्ता सङ्ख्या"–इति ( ४. ४. ५. ) च सङ्ख्याविज्ञानम् ।

( औ ) द्वादशादित्यवर्णनतोऽहोरात्रकालांशविज्ञानं यथा— "सविता ०—० तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति"–इत्याद्युक्तः प्रथम आदित्यः ( १२. २. १. ) ।

"भगः, तस्य कालः प्रागुत्सर्पणात्"–इत्याद्युक्तो द्वितीयः ।

"सूर्यः, सर्त्तेर्वा सुवतेर्वा स्वीर्यतेर्वा"–इत्याद्युक्तस्तृतीयः ।

'स पुनरयं भगकालात् सृतः सूर्यो भवति'–इति तत्र दौर्गो वृत्तिः।

"अथ यद्रश्मिपोषं पुष्यति, तत् पूषा भवति"–इत्याद्युक्तश्चतुर्थः ।

"अथ यद् विषितो भवति, तद् विष्णुर्भवति"–इत्याद्युक्तः पञ्चमः ।

"विश्वानरः [प्रत्यृतः सर्वाणि भूतानि ७. ६. १.]"–इत्याद्युक्तः षष्ठः ।

"वरुणः [वृणोतीति सतः १०. १, ३]"–इत्याद्युक्तः सप्तमः ।

"केशी, केशा रश्मयस्तद्वान्"–इत्याद्युक्तोऽष्टमः ।

"अथ यद्रश्मिभिरभिकम्पयन्नेति"–इत्याद्युक्तो वृषाकपिर्नवमः ।

'वर्षिता चावग्रायाणां कम्पनश्च भूतानाम्'–इति तद्वृत्तिः ।

"यमः [यच्छतीति सतः १०. २. ६.]"–इत्याद्युक्तो दशमः ।

"अजएकपाद्, अजन एकः पादः ; एकेन पादेन पातीति पैकेन पादेन पिबतीति वैकोऽस्य पाद इति वा"-इत्याद्युक्त एकादशः। 'समुद्र [समोदन्तेऽस्मिन् भूतानि २.३.१.]"- इत्याद्युक्तो द्वादशः। तदेव मेकस्यैव सूर्यस्य अहोरात्रकालविभाजकत्वेन सवित्रादीनि द्वादश नामानीत्युक्तं कालविज्ञानम्।

( क ) "थिर आदित्यो भवति, यदनुशीते सर्वाणि भूतानि मध्ये चैषा तिष्ठति। इद मपीतरच्छिर एतस्मादेव ; समाश्रिता-न्येतदिन्द्रियाणि भवन्ति"-इति आदित्यस्थितिविज्ञानम् ४. २. ५।

( ख, ग ) "तत् सूर्यस्य देवत्वं तन्महित्वम्, मध्ये यत् कर्म्मणा क्रियमाणानां विततं संह्रियते। यदासायुक्त हरणानादित्यरश्मीन् हरितो ऽश्वानिति वा। अथ रात्री वासस्तनुते सिमस्मै, वेसर शड़-रवयुवती सर्वस्मादपि योपमार्थे स्याद्रात्रीव वासस्तनुत इति"-इति सौराकर्षणविज्ञानम्, रात्रिविज्ञानञ्च ४. २. ३।

( घ ) "यद् वर्षन् पातयत्युदकं रश्मिभिस्तत् प्रत्यादत्ते"-इति, "रश्मियमनात्"-इति च रश्मिविज्ञानम् ५. ३. ७; २. ५. १।

( ङ ) "अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते। तदेतेनो-पेक्षितव्यम्। आदित्यतोऽस्य दीप्तिर्भवतीति। 'सुषुम्णः सूर्य-रश्मिश्चन्द्रमा गन्धर्वः'-इत्यपि निगमो भवति ( वा० सं० १८, ४०. ) ; सोऽपि गौरुच्यते, 'अत्राह गोरमन्वत'-इति ( ऋ० स० १८४, १५. )। अत्र ह गो' सममंसतादित्यरश्मयः स्व भामा पोथ्य मर्पचित मपगत मपिहित मन्तर्हितं वामुत्र चन्द्रमसो गृहे"-इति (२. २. २ ; ४. ४. ४. ) ज्योत्स्नाविज्ञानम्।

( च ) "नाक आदित्यो भवति ; नेता भासां, ज्योतिषां प्रणयः"-इति अहन्यन्यज्योतिरदर्शनहेतुविज्ञानम् २. ४. २।

( छ ) "सप्त युञ्जन्ति रथ मेकचक्रम्
एको अश्वो वहति सप्तनामा ।
त्रिनाभि चक्र मजर मनर्व
यत्रेमा विश्वा भुवनानि तस्थुः."

–इति ऋ० सं० १. १६४. २ । अत्रोचैव यास्कः — "सप्त युञ्जन्ति रथम् 'एकचक्रम्' एकचारिणम् ०—०, 'एको अश्वो वहति सप्तनामा' आदित्यः, सप्तास्मै रश्मयो रसानभिसन्नामयन्ति, ०—० । संवत्सरप्रधान उत्तरोऽर्द्धर्चः । 'त्रिनाभि चक्र' त्र्यृतु संवत्सरो ग्रीष्मो वर्षा हेमन्त इति ०—० । 'अजरम्' अजरणधर्माणम्, 'अनर्वम्' अप्रत्यृत मन्यस्मिन् । यत्रेमानि सर्वाणि भूतान्यभि सन्तिष्ठन्ते"–इत्यादि सौरजगद्विज्ञानम् ४. ४. ६ ।

( ज ) "अन्तरिक्ष कस्मात् ? अन्तरा क्षान्त भवति, अन्तरेमे इति वा, शरीरेष्वन्तरक्षय मिति वा"–इति ( २. ३ १. ), "पुष्कर मन्तरिक्ष पोषति भूतानि"–इति चान्तरिक्षविज्ञानम् ५. ३. ७ ।

( झ ) "ऋचीस मपगतभास मपहृतभास मन्तर्हितभास गतभास वा"–इति ( ६. ६ ७ ), "प्रथनात् पृथिवीत्याहुः क एना मप्रथयिष्यत् किमाधारश्चेति, अथ वै दर्शनेन पृथुरप्रथिता चेद प्यन्यै "–इति च ( १. ४. १ ) पृथिवीविज्ञानम् ।

( ञ ) "आप आप्नोतेः ( ८. ३ ५ )"–इति, "आपोऽपि काष्ठा उच्यन्ते क्रान्त्वा स्थिता भवन्तीति स्थावराणाम्; अस्थावराणां काष्ठानां मध्ये निहितं शरीरं मेघ "–इति चाब्विज्ञानम् २. ५ १, २ ।

( ट ) "तत्र समुद्र इत्येतत् पार्थिवेन समुद्रेण सन्दिह्यते । समुद्रः कस्मात् ? समुद्द्रवन्त्यस्मादापः, समभिद्रवन्त्येन ...–

समोदन्तेऽस्मिन् भूतानि , समुदको भवति , समुनत्तीति वा तयोविंभाग' । तत्रेतिहास माचक्षते ,— देवापियार्ष्टिषेण: शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतु "-इत्याद्युदधिविज्ञानम् २. ३. १ ।

( ठ ) "उर्वश्यप्सरा । उर्वभ्यश्नुते ०—० अप्सरा अप्सारिणी, अपि वाप्स इति रूपनाम । 'द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वेदेवाः पुष्करे त्वाददन्त ( ऋ०सं०७.३३.११ )"-इत्यादि विद्युद्विज्ञानम् ।

( ड ) "विद्युन्न या पतन्ती ०—० प्रोर्वशी तिरते दीर्घ मायु."-इति ऋ० सं० १०. ९५. १० । अस्या ऋचो व्याख्याने उक्तम्— "अथोर्वशी प्रवर्द्धते दीर्घ मायु."-इति ११. ४. २ । 'उर्वशी' मेघोत्था 'विद्युन्न' विद्युदिव , शारीर-वैद्युतिकशक्ति. - ( जीवनी शक्ति ) 'प्रतिरते' प्रवर्द्धयते 'दीर्घमायु' इति तदर्थः । तदिदं शारीरविद्युद्विज्ञानम् ।

( ढ ) "विकर्त्तनेन मेघाना मुदकं जायते०—० हाह्ववूकं वहतः पुरीषम् वाय्वादित्या उदकम्"-इति वृष्टिविज्ञानम् २. ६. ५ ।

( ण ) "क्व स्विदस्याः (माध्यमिकाया वाच ) परमं जगाम ? ( ऋ० मं० ८. १००. १०. ) इति । यत् पृथिवीं गच्छतीति वा यदादित्यरश्मयो हरन्तीति वा"-इति ११. ३. ७ । एतद्वेदोदकमानसाम्यहेतुविज्ञानम् ।

( त ) "तत्र स्नपन्ति पृथिवी मनूपा' ( ऋ० मं० १०. २७. २३. )। पर्जन्यो वायुरादित्य , शीतोष्णवर्षैरोषधी पाचयन्ति । 'अनूपा.' अनुवपन्ति लोकान्स्वेन स्वेन कर्मणा" -इत्यन्नोत्पत्तिविज्ञानम् २. ६. ५ ।

(थ) "अथ मन्थ्यग्निरोजसा बलेन मथ्यमानो जायते ; तस्मादेन माह सहसस्पुत्रं सहसो यहुम्"- इति पार्थिवाग्निविज्ञानम् ८.१.७ ।

( द ) "सर्पं न पक्व मविदत्क्षुधन्तम् ( ऋ०सं०१०.३६.३. ) । स्वपन मेतवाध्यमिक ज्योतिरनित्यदर्शनं नदिवाविद्त्वाक्षुध मानम्। 'दिता च सत्ता स्वधया च शम्भु.' ( ऋ० सं० ३. १७. ५. ) । द्वेध सत्ता मध्यमे च स्थाने उत्तमे च । 'शम्भु' सुखभू" –इति माध्यमिकाग्निविज्ञानम् ५. १. ३ ।

( ध ) "हिमेनाग्नि घ्रंस मवारयेथाम्,
पितुमतीं मूर्ज मस्मा अधत्तम् ।
ऋबीसे अत्रि मश्विनावनीतम्,
उन्निन्यथुः सर्वगण स्वस्ति"
–इति ऋ०सं० १. ११६. ८ ।

हे 'अश्विनौ।' युवां ग्रीष्मान्ते 'हिमेन' वर्षणेन, 'घ्रंसम्' अहो-नुभूतम् 'अग्निं' तापम् 'अवारयेथाम्', 'पितुमतीम्' अन्नवतीं च 'ऊर्जम्' 'अस्मै' अग्नये 'अधत्तम्', योऽयम् 'ऋबीसे' पृथिव्याम् अग्नि, अन्तरोषधिवनस्पतिष्वपु तम् 'सर्वगणं' सर्वनामान 'अत्रिम्' अग्निम् 'उन्निन्यथुः'। 'स्वस्ति' स्वस्त्ययनायास्य जगत । "यद् वृष्ट्या पावय उदयन्ति प्राणिनश्च पृथिव्याम्, तदश्विनो रूपम्, तेनैतौ स्तौति"–इत्यश्विनामाहोरात्रहेतुसौराग्निविज्ञानम् ६. ६. ८ ।

( न ) "अय मेवाग्निर्वैश्वानर इति शाकपूणि । विश्वानरा विन्त्येते उत्तरे ज्योतिषी । वैश्वानरो ऽयं यत्ताभ्यां जायते । कथं त्वय मेताभ्यां जायते ? इति । यत्र वैद्युत: शरण मभि हन्ति, यावदनुपात्तो भवति मध्यमधर्मैव तावद्भवति, उदकेन्धन शरीरोप-शमन ; उपादीयमान एवाय सम्पद्यते। उदकोपशमन शरीर-दीप्ति. । अथादित्यात् । उदीचि प्रथमसमावृत्त आदित्ये कंस वा मणि वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमय मसस्पर्शयन् धारयति,

तत्प्रदीप्यते, सोऽयं मेव मग्नयते। अग्येते उत्तरे ज्योतिषी अग्नी उच्येते ७ ४ ३ )'-इति वैश्वानराग्निविज्ञानम् ७ ६ ६, ७।

( प ) "योऽनिध्मो दीप्यतेऽभ्यन्तरं मप्सु"-इति अपांनपादाम जलान्तर्वर्त्तिवाय्वीभूताग्निविज्ञानम् १० २ ७।

( फ ) "अथास्य कर्म,— वहनञ्च हविषां मावाहनञ्च देवतानां यच्च किञ्चिद् दार्ष्टिविषयकं सग्निकर्मैव तत्"-इति पार्थिवाग्नि कर्मविज्ञानम् ७ ३ १।

( ब ) "अथास्य कर्म — रसानुप्रदानं वृत्रवधो या च का च बलकृतिरिन्द्रकर्मैव तत"-इतीन्द्र (वायु) कर्मविज्ञानम् ७ ३ ३।

( भ ) "अथास्य कर्म — रसादानं रश्मिभिश्च रसधारणं यच्च किञ्चित प्रवह्लितं मादित्यकर्मैव तत'-इत्यादित्यकर्मविज्ञानम् ७ ३ ४।

( म ) "अदिति रदीना, देवमाता"-इति ४ ४ १। तत —

'दत्तस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवासमि।
अतूर्तपन्था पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु'-इति अदितिशब्दस्य निगमं (ऋ०मं०१० ६४ ५) प्रदश्ये तद्‌व्याख्यायाम् आह-"अथो 'अर्यमा' आदित्योऽरीन् नियच्छति 'सप्तहोता' सप्तास्मै रश्मयो रसानभिसन्नामयन्ति सप्तैनं मृषय स्तुवन्तीति वा, 'विषुरूपेषु' विषमरूपेषु 'जन्मसु' कर्मसु उदयेषु। आदित्यो दक्ष इत्याहु, आदित्यमध्ये च स्तुतोऽदितिर्दाक्षायणी'-इति, पुन "अदितेर्दक्षो ऽजायत दक्षाद्दितिः परि ( ऋ० मं० १० ७२ ४ )-इति च। तत् कथं मुपपद्यते? समानजन्मानौ स्यातां मिति, अपिवा देव धर्मेणेतरेतरजन्मानौ स्याताम्, इतरेतरप्रकृती"-इति ११ ३२।
तदिदं मेव बीजाङ्कुरन्यायतः सृष्टिविज्ञानम्।

(य) "हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां (ऋ०मं० १०. १२१. १.)। हिरण्यगर्भो हिरण्यमयो गर्भोऽस्येति वा [ "हिरण्यं कस्मात् ? ह्रियत आयम्यमान मिति वा, ह्रियते जनाज्जन मिति वा, हित-रमणं भवतीति वा, हर्य्यतेर्वा स्यात् प्रेप्साकर्मणः" – इति २. ३. १.] ०—० समभवदग्रे भूतस्य जातः पतिरेको बभूव। स धारयति पृथिवीं च दिवं च" – इति सौराकर्षणविज्ञानम् १०. २. १०।

(र) "सविता यन्त्रैः पृथिवीमरम्णा दस्कम्भने सविता द्यामदृंहत्। अश्व मिवाधुक्षद्धुनि मन्तरिक्ष मतूर्ते बद्धं सविता समुद्रम्" (ऋ०मं० १०.१४९.१)। सविता यन्त्रैः पृथिवीमरमयदनारम्भणे अन्तरिक्षे सविता द्यामदृंहदश्व मिवाधुक्षद्धुनि मन्तरिक्षे मेघं बद्ध मतूर्ते बद्ध मतूर्ण इति वात्वरमाण इति वा सविता समुदितार मिति क मन्यं मध्यमादेव मवक्ष्यत्। आदित्योऽपि सवितोच्यते" – इति पृथिव्यादिभ्रमणविज्ञानम् १०. ३. ८।

(ल) "देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा, यो देवः सा देवता" – इति (७. ४. २.), "देवा न आयुः प्रवर्द्धयन्तु चिरञ्जीवनाय (ऋ० मं १. ८९. २.)। "विश्वेदेवाः= सर्वे देवाः" – इत्यादि (१२. ४. ५.), "इत्यथोत्र देवा उच्यन्ते य एतस्मिन्नधिनिपणा इत्यधिदेवतम्, अथाध्यात्मम्०—० इन्द्रि-याण्यत्र देवा उच्यन्ते" – इति च (१३. १. ११.) देवविज्ञानम्।

(व) "अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः (वा० मं १९. ५०.)। ०—० माध्यमिको देवगण इति नैरुक्ताः, पितर इत्याख्यानम्" – इति पितृविज्ञानम् ११. २. ९

( ञ ) सप्त ऋषयः प्रतिहिताः शरीरे
सप्त रक्षन्ति सद मप्रमादम् ।
सप्तापः स्वपतो लोक मीयुस्तत्र जाग्रतो
अस्वप्नजौ सत्रसदौ च देवौ"–इति वा॰सं॰ ३४.५५ ।

अत्र "सप्त ऋषयः प्रतिहिताः शरीरे, रश्मय आदित्ये; सप्त रक्षन्ति सद मप्रमादं, संवत्सर मप्रमाद्यन्तः; सप्तापनास्त एव स्वपतो लोक मस्तमित मादित्यं यन्ति ; तत्र जाग्रतोऽस्वप्नजौ सत्रसदौ च देवौ, वाय्वादित्यावित्यधिदैवतम्"–इति व्याख्याय, पुनरन्यविधं व्याख्यातम्—"अथाध्यात्मम्। सप्त ऋषयः प्रतिहिता शरीरे, षडिन्द्रियाणि विद्या सप्तम्यात्मनि ; सप्त रक्षन्ति सद मप्रमाद, शरीर मप्रमाद्यन्ति ; सप्तापनानीमान्येव स्वपतो लोक मस्तमित मात्मानं यन्ति , तत्र जाग्रतोऽस्वप्नजौ सत्रसदौ च देवौ, प्राज्ञश्चात्मा तैजसश्च इत्यात्मगति माचष्टे"–इति १२. ४. ३ । वाय्वादित्यशक्तिविज्ञानं द्विविधात्मविज्ञानञ्च ।

( ट ) "सैषा सैषापरा भवति ( अथ॰ सं॰ १०. ४. ८ )—
'तिर्यग्बिलश्चमस ऊर्ध्वबुध्नो यस्मिन्यशो निहित विश्वरूपम् ।
अत्रासत् ऋषय. सप्त साकं ये अस्य गोपा महतो बभूवुः'"–इति ।
अत्रापि "तिर्यग्बिलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा यस्मिन् यशो निहितं सर्वरूप मत्रासत ऋषयः सप्त सहादित्यरश्मयः, ये अस्य गोपा महतो बभूवुरित्यधिदैवतम्"–इत्युक्ता , ततोऽन्यथाऽप्याह—"अथाध्यात्मम् । तिर्यग्बिलश्चमस ऊर्ध्वबन्धन ऊर्ध्वबोधनो वा यस्मिन् यशो निहितं सर्वरूप मत्रासत ऋषयः सप्त सहेन्द्रियाणि, यान्यस्य गोप्तृणि महतो बभूवुरित्यात्मगति माचष्टे"–इति । सप्तमहत्त्वस्याद्रश्मीनां सप्तत्वम् , चन्द्राणा मुपयद्दत्वाद्द् यद्वयद्दयंनैव

ग्रहणं च सिध्यति। तदिदं सूर्यस्य सप्तग्रहबन्धनतत्त्वविज्ञान मात्मनश्च सप्तेन्द्रियबन्धनतत्त्वविज्ञानम्।

(स) "द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति"
-इति ऋ०सं०१. १६४. २०। अत्रैतन्निरुक्तम्—"द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्त्तारौ, दुष्कृतं पापं परिसारक मित्याचक्षते; सुपर्णा सयुजा सखायेत्यात्मानं परमात्मानं प्रत्युत्तिष्ठति शरीर एव तज्जायते वृक्षं त्वशरीरं वृक्षं पक्षौ प्रतिष्ठापयति; तयोरन्यद् भुक्तान्न मन्नमन्यत्याम् सरूपता सलोकता मश्नुते य एवं विद्वाननश्नन्नन्यो-ऽभिचाकशीतीत्यात्मगति माचष्टे"-इत्यात्मद्वयविज्ञानम् १३.४.२.।

(ह) "हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संयजन्ते सखायः।
अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो वि चरन्त्यु त्वे"-
इति ऋ० सं० १० ७१. ८। अत्रैतन्निरुक्तम्— "हृदा तष्टेषु मनसां प्रजवेषु यद् ब्राह्मणाः संयजन्ते समानाख्याना ऋत्विजोऽत्राह त्वं विजहुर्वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिरोहब्रह्माण ऊहब्रह्माण ऊह एषा ब्रह्मेति वा"-इति ब्रह्मविज्ञानम् १३. १. १३.।

वस्तुतो निरुक्तप्रणयनकालेऽपि तदानीन्तनविपश्चितां हृदयेष्वेवं वैज्ञानिकभावा देदीप्यमाना आसन्, यत्—

"समान मैतदुदक मुच्चैत्यव चाहभिः।
भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नय."-इति,

ऋगेषा( १. १६४. ५१.) न व्याख्याता यास्केन, अपितु 'निगद-व्याख्याता'-इति (७. ६. ८.)। निगदेनोच्चारणकालेनैव व्याख्याता अधिगतेति किं सदीयविशेषव्याख्यानेनेति तद्भावः।

(४२) 'यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम्'-इति च प्रज्ञापितं तेन भगवता यास्केन निगमैकप्रदर्शनेन। तद्यथा—

'ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते"

-इति ऋ० सं० १. १६४. ३९। "ऋचो अक्षरे परमे व्यवने यस्मिन् देवा अधिनिषण्णाः सर्वे, यस्तन्न वेद किं स ऋचा करिष्यति, य इत्तद्विदुस्त इमे समासत इति विदुष उपदिशति। कतमत्तदेतदक्षरम्? ओमित्येषा वागिति शाकपूणिर्ऋचश्च ह्यक्षरे परमे व्यवने धीयन्ते नानादेवतेषु च मन्त्रेषु। एतद्ध वा एतदक्षरं यत्सर्वां त्रयीं विद्यां प्रतिप्रतीति च ब्राह्मणम्"-इति १३. १. १०।

(४३) मन्त्रेषु श्रुतानां रूपकाख्यानानां प्रकृतार्थप्रदर्शनानि चेह बहून्याख्यातानि। तद्यथा (ऋ० म० १०. १७. २)—

"अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामददुर्विवस्वते।
उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः॥"

अपागूहन्नमृतां मर्त्येभ्यः, कृत्वी सवर्णामददुर्विवस्वतेऽप्यश्विनावभरद्यदासीदजहाद् द्वौ मिथुनौ सरण्यूः। मध्यमं च माध्यमिकां च वाचमिति नैरुक्ताः, यमं च यमीं चेत्यैतिहासिकाः। तत्रेतिहासमाचक्षते,— त्वाष्ट्री सरण्यूर्विवस्वत आदित्याद्यमौ मिथुनौ जनयाञ्चकार, सा सवर्णामन्यां प्रतिनिधायाश्वं रूपं कृत्वा प्रदुद्राव, स विवस्वानादित्य आश्वमेव रूपं कृत्वा तामनुसृत्य संबभूव, ततोऽश्विनौ जज्ञाते, सवर्णायां मनुः। तदभिवादिन्येषर्ग्भवति (ऋ० म० १०. १७. १)—

"त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति।
यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश" इति।

मन्त्रद्वयघुतस्यास्य कल्पितोपाख्यानस्य बीजश्चाहैतत् – 'रात्रि-रादित्यस्य ; आदित्योदयेऽन्तर्धीयते”–इति १२. १. १०, ११ ।

( ४४ ) सामाजिककर्त्तव्योपदेशायाम्नातस्य 'कल्पितोपाख्या-नस्य तत्त्वनिर्णयाय तत्तन्निगूढव्याख्याप्रकाशे यत्नो यद्यपि न दृश्यते यास्कस्य , परं तत्कृतात् तत्तत्कल्पनाबीजनिर्देशादेव प्रतीयते तत्त-न्निगूढार्थोऽपि स्फुटम् । तादृशकल्पितोपाख्यानस्य कल्पितत्व-बोधने यत्नो धीमतां अप्रयोजनीय इत्येव तत्र तदुपेक्षाबीजम् । एवञ्च यास्ककालं यावदपि नैतादृग् बुद्धिमान्द्यं सञ्जातं मार्याणां यत् तत्तत्कल्पितोपाख्यानानां कल्पितत्वबोधनेऽपि यत्न. कर्त्तव्यः स्यात् कस्यापीति तत्तद्बीजमात्राख्यानेनैवाभवत् कृतकृत्यम्मन्यो भगवान् यास्क. । तद्यथा, अस्त्येकं सूक्तं चतुर्दशवर्गात्मकं दाशतय्या दशमे मण्डले दशमम् ; तत् सर्वं मेव सायणाचार्येण यमयमी-संवादपरं व्याख्यातम् , अत एव तथामतः प्रसिद्धञ्च तत् सम्प्रति । अध्यक्षतो तु तत्सूक्तीयाः कतिचिदेवर्चो यमयमीसंवादपराः , नैव सर्वाः । तस्यैतस्य सूक्तस्य तिस्र ऋच उद्धृता इह निरुक्ते विवु ( ४. ३. ४ ; ६. ५. ५ ; ११. ३. १२. ) । ता इमाः—

“आ घा ता गच्छानुत्तरा युगानि , यत्र जामयः कृणवन्नजामि ।
उप बर्बृहि वृषभाय बाहुम् , अन्य मिच्छस्व सुभगे पतिं मत् ॥
नतो वतासि यम नैव ते मनो हृदयञ्चाविदाम ।
अन्या किल त्वां कक्ष्येव युक्तं परिष्वजाते लिबुजेव वृक्षम् ॥
अन्य मू षु त्वं यम्यन्य उ त्वां परिष्वजाते लिबुजेव वृक्षम् ।
तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम्”

अस्योपसंहारवचन मेव माह यास्कः— “यमी यमं चकमे तां प्रत्याचचक्षेत्याख्यानम्”–इति ( ११. ३. १३ ) । यमपदार्थनिर्णये

वृत्तम्— "यमो यच्छतीति सत: •—• अग्निरपि यम उच्यते" –इति (१०, २, ६, ७.)। "अग्निर्वाव यमः इयं (पृथिवी) यमी"–इति तै० सं० २, ३, ८, ३। शतपथे चैव मैत्र ६, २, १, १०। एवञ्चेह पृथिव्या अग्नेः सर्वदा सर्वत्र विद्यमानत्वेन भ्रातृभगिनीभावस्तनयोर्मन्तव्यो न तु दाम्पत्य-भाव.; सति हि दाम्पत्यभावे अग्नेरालिङ्गनेन सर्वा पृथिवी विदग्धैव। अतोऽग्निना प्रत्याख्याता पृथिवी पर्जन्येन विवाहिता, तदेव श्रूयते— "पिता दुहितुर्गर्भं माधात्"–इति ऋ० सं० १, १६४, ३३। उक्तञ्च तत्र यास्केन 'पर्जन्यः पृथिव्या'–इति (४.३.५.)। पिता =पालयिता, दुहिता =दूरे हिता, पर्जन्य-कर्तृकं इष्टं रेत: =उदकं, पृथिवीकर्तृकं तस्य धारणं, ततश्चौषध्या-द्युत्पत्तिः प्रत्यक्ष मेव। यच्च श्रूयते ऽत्र 'उत्तरा युगानि'–इति, तत् प्रलीनकालीनानि बोध्यानि। प्रलीनकालस्य चैतत्कालसाम्यं मन्तव्यम्; अहोरात्रयोः कालसाम्यादिदर्शनात्। तत एवाह मनुः (१. ७३.)— 'तद्वै युगसहस्रान्तं ब्राह्मं पुण्य मह-र्विदुः। रात्रिञ्च तावती मेव तेऽहोरात्रविदो जनाः।'–इति।

(४५) एतद्दितीयपरिशिष्टे बहवो दार्शनिकभावाश्च विद्यन्ते। तद्यथा— "आकाशगुणः शब्द "–इत्येवमादय. (१२, २, ४.)।

(४६) तत्रापि साङ्ख्याना मादरातिशयो गम्यते। "अथैष महानात्मा त्रिविधो भवति— सत्त्वं रजस्तम इति (१३, २, ३.)" –इत्येवमादयो द्रष्टव्या.।

(४७) पुनर्जन्मविवेकश्चाख्यातः, तत्र च साङ्ख्ययोग स्थिति स्पष्ट मभिहितम्। "मृतश्चाहं पुनर्जातः"–इत्यादि, "शुभाशुभं कर्मैतच्छरीरस्य प्रमाणम्"–इत्यन्तञ्च द्रष्टव्यम् (१३, २, ६.)।

(४८) तत्रैव शारीरिकतत्त्वानि च कानिचिदभ्युक्तानि। "अष्टोत्तरं सन्धिशतमष्टाकपालं शिरः सम्पद्यते षोडश कपालानि नव स्नायुशतानि (१३. २. ७)"–इत्येवमादीनि।

(४९) "ब्रह्मा देवानां, पदवीः कवीनाम्, ऋषिर्विप्राणां, महिषो मृगाणाम्। श्येनो गृध्राणां, स्वधितिर्वनानां, सोमः पवित्रमत्येति रेभन्"–इति ऋ० सं० ९. ९६. ७।

अस्य मन्त्रस्य द्विविधं व्याख्यानमकारि परिशिष्टकृता यथा— "एष हि 'ब्रह्मा' भवति 'देवानां' देवनकर्मणामादित्यरश्मीनाम् ०—० इत्यधिदैवतम्। अथाध्यात्मम्,— एष अपि 'ब्रह्मा' भवति 'देवानां' देवनकर्मणामिन्द्रियाणाम् ०—०। आत्मगतिमाचष्टे"–इति (१३, २, १३)।

(५०) ब्रह्मवर्णनस्यात्रैकत्र कृतं निगमप्रदर्शनेन यथा (ऋ० १०. ८२. ७.)

"न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति॥

न तं विदथ विदुषो य एवं विद्वांसो वदन्त्यक्षरं ब्राह्मणस्पतिमन्यद् युष्माकमन्तरमन्यदेषामन्तरं बभूवेति। नीहारेण प्रावृतास्तमसा जल्प्या चासुतृप उक्थशास. प्राणं सूर्यं यत्पथगामिनश्चरन्ति। अविद्वांसः दैवम मनुपवदन्ति। अथाहो विद्वांसः चेतसोऽनुकल्पते। तस्य तपसा सहाप्रमाद मेत्यथामध्यो भवति। तेनासक्त मिच्छेत्तेन सख्य मिच्छेदेष हि सखा श्रेष्ठः सन्धानाति भूत भवद्भविष्यदिति। ज्ञाता कस्माज्ज्ञायतेः सखा कस्मात्सख्यतेः सह भूतेन्द्रियैः शेरते महाभूतानि सेन्द्रियाणि प्रज्ञया कर्म कारयतीति। तस्य यदाप. प्रतिष्ठाशील सुपथम आत्मा ब्रह्मेति स ब्रह्मभूतो भवति साक्षिमात्रो व्यवतिष्ठतेऽबन्धो ज्ञानकृतः"–इति १३, २, १०।

(५१) परिशिष्टग्रन्थेनदुपसंहृतं मोक्षविज्ञानात्मपरमपुरुषार्थ्या ख्यानेनातिमधुरेण। तद्यथा— "देवाना तु वय जाता"–इति, "नासदासीन्नो सदासीत् तदानीम्"–इति च (ऋ० सं० १० ७२ १—८, १२८ १—७)। "सैषात्मजिज्ञासा, सैषा सर्वं भूतजिज्ञासा, ब्रह्मणः सार्ष्टि सरूपता सलोकतां गमयति य एवं वेद"–इति (१३ ४ ८.)।

अथात्र किञ्चिद् ब्रूमः।— यदुक्तं पुरस्तात् (२५५ पृ०) "सरूपता सलोकता मश्नुते य एवं विद्वान्"–इति, तत्तात्पर्यं त्वेवं स्यात्— 'य' पुरुषः 'एवं विद्वान्' "द्वा सुपर्णा सयुजा (ऋ०सं० १ १६४ २०)"–इत्यस्य मन्त्रस्यार्थविद् भवति, स नूनं जीवात्मपर-मात्मनोरुभयोरेव चैतन्यत्वेनैकरूपत्वमवगम्य 'सरूपताम्' चात्मनो ब्रह्मसमानरूपत्वम् 'अश्नुते' लभते, किञ्चोभयोरेवैकवृक्षस्थत्व मवगम्य 'सलोकता' एकलोकस्थायित्व मपि 'अश्नुते' लभते। लाभोऽत्र बुद्धिभ्रमाद् क्षितपदार्थे पुनर्दृष्टिचेपज इव, यथा स्वस्कन्धस्था गात्रमार्जनी मनवेक्षमाणस्य कालान्तरे भवत्येवेति। अथातोपसंहारवचने यदस्ति सार्ष्टि मित्यधिकं पदम्, तस्यास्ति सार्ष्टिं मिति पाठान्तरञ्च। सार्ष्टिपदस्य निर्वाण मिति व्याख्यान मकारि भागवतटीकायां श्रीधरस्वामिना। निर्वाणन्तु न युज्यते नित्यस्यात्मनः कदापि, नापि वेदेषु क्वचिदपि श्रुत मस्ति, बौद्धैरेव प्रथम मुपात्तं जीवस्य निर्वाणम्, तत एव तद् गृहीतं तत्परजैं भागवतप्रभृतिपुराणप्रणेतृभिः। तदिदं मिह यद् दृश्यते तदर्थक सार्ष्टिपदम्, तदेतन्नून परतनैः कैश्चित् निवेशितम्, अथ वैतद् द्वितीयपरिशिष्ट मेव स्यादनतिप्राचीनं मित्यस्माकम्, 'जातवेदसे सुनवाम'–इति (ऋ०सं०१ ९९ १) मन्त्रस्य पूर्वोक्ताद्

( ७ ५. २. ) व्याख्यानात् द्वयस्य, व्याख्यानस्य ( १२. ४ ५ ) सर्वथा पार्थक्यप्रतीतेः, पौनरुक्तदोषापत्तेः, अन्यत्रान्यत्र चेह भाषा-व्याख्यानभेदादिभिदावगमादिभ्यश्च ।

वस्तुतस्तु "द्वा सुपर्णा सयुजा सखाया"—इति मन्त्रतो यदधिगतं 'दशमस्त्वमसि'—इत्यभियुक्तोक्तिजन्य भ्रमापनोदनत' समुत्पन्न मिव जीवात्मपरमात्मनोः सायुज्यादिकम् , तदेवान्यथोपबृंहितं पुराणादौ । एवं हि यदस्ति पुराणेषु क्वचित् पञ्चविधस्य क्वचिच्चतुर्विधस्य मोक्षस्य वर्णनम् , तत् सर्व मेव बालबोधार्थैव । तद्यथा भागवते—

"सार्ष्टिसारूप्यसालोक्यसामीप्यैकत्व मप्युत ।

दीयमान न गृह्णन्ति विना मत्सेवनं जनाः"—इति ।

अस्मिन् श्लोके सार्ष्टीति बौद्धशास्त्रप्रसिद्धं निर्वाणम् । तच्च नित्यस्यात्मनो नैव सम्भाव्य मस्ति , न च सुखाभिलाषिणा सम्यक प्रार्थनायोग्यम् , नापि वेदबोधित मित्यश्रद्धेयम् । एकत्व मपि तथैव । सर्वव्यापिनोऽस्य परमेश्वरस्य सर्वलोके सर्वसमीपे च सर्वदा विद्यमानत्वात् सालोक्य सामीप्ये स्वप्राप्तिते अपि स्त एव सर्वत्र सर्वेषा मस्माक मिति किं तयोः प्रार्थनया । सारूप्यवादस्तूम्मत्तप्रलाप' ब्रह्मणो रूपाभावात् , ब्रह्मद्वैयत्वप्रसङ्गाच्चेति ।

तदित्थं सर्वेषा मेव वेदवेदाङ्गाना परमपुरुषार्थोपदेश एव चरम उद्देश्य इति सिद्धम् ॥

———

( १२ )

"यथार्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्"—इति सायणीयप्रथमलक्षणलक्षितस्य, मूलात्मनिरुक्तस्य, वस्तुतो निघण्टुसमाम्नायस्य टीकाकृतो देवराजयज्वनः, "एकैकस्य पदस्य सम्भाविता अवयवार्था यत्र निःशेषेणोच्यन्ते तन्निरुक्तम्"—इति सायणीयद्वितीयलक्षणलक्षितस्य, भाष्यात्मनिरुक्तस्य, वस्तुतो निघण्टुसमाम्नायभाष्यस्य टीकाकृतो दुर्गाचार्यस्य, प्रसङ्गतः सर्ववेदभाष्यकारस्य सायणाचार्यस्य च जीवितकालनिर्णयाय, पाण्डित्यादिवर्णनाय च किञ्चिद् यतामहे ।

तदत्र, निघण्टुटीकाकारस्यास्य देवराजइतिसमाख्यादर्शनादुपलभ्यते रामानुजस्वामिपरभवत्वम्; प्रपन्नामृतादिरामानुजसम्प्रदायीयग्रन्थालोचनतः स्फुटं ह्यवगम्यते प्रथमं रामानुजस्वामिन एवासन्नुपनामानि देवराजो देवमन्नाथो मन्नाथश्चेति त्रीणि; ततः प्रभृत्येव लोके प्रचलिता देवराज इत्यादयः समाख्या इति ।

श्रीवैष्णवसम्प्रदायप्रवर्त्तकस्य तस्य रामानुजस्वामिन आविर्भावसमयस्त्वेवं प्रपन्नामृते ( ११५ अ० २७ श्लो० )—

"शालिवाहशकाब्दानां नवाष्टविंशदुत्तरे ।
गते नवशते श्रीमान् यतिराजोऽजनि क्षितौ ॥"—इति ।

रामानुजस्वामिकर्तृकं यादवाद्रौ नारायणपुरनिर्माणं नारायणप्रतिष्ठापनं च द्वादशाधिकसहस्रशकाब्दातीतेऽभवदिति च ४०अ०—

"शकाब्दे वर्षसाहस्रे गते तद्द्वादशाधिके ।
ततोऽब्दे बहुधान्याख्ये पुष्ये माघि शुभे तदा ॥
शुक्लपक्षे चतुर्दश्यां सुप्रभावपुनर्वसौ ।
आविर्बभूव भगवान् तत्र नारायणो हरिः ॥"—इति ।

तदन्तर्द्धानप्रकारसमयौ च तत्रैव सूक्तौ [२५, २६ श्लो०]—

"गोविन्दाङ्के निधायाथ शिरः शेते महामनाः ।
धान्यपूर्णस्य चोत्सङ्गे सम्प्रसार्याङ्घ्रिपङ्कजे ॥
शिष्येषु तेषु सर्वेषु यतीन्द्रस्य जगद्गुरोः ।
भृगुवल्लीं ब्रह्मवल्लीं पठत्स्वपि महात्मसु ॥
पराङ्कुश-प्रबन्धादीन् प्रबन्ध मखिलं च तम् ।
वादकैर्वाद्यमानेषु वाद्येषु निखिलेषु च ॥
संस्थाप्य पुरतः पश्यन् महापूर्णस्य पादुके ।
ध्यायन् हृदि सदा धीमान् यामुनार्याङ्घ्रिपङ्कजम् ॥
शिरःकपाल निर्भिद्य ब्रह्मरन्ध्रेण योगिराट् ।
रामानुजो जगामाशु तद्विष्णोः परमं पदम् ॥"—इति,
"स विंशत्युत्तरशतं वत्सराणां भुवस्थले ।
× × × × । ॥
वैकुण्ठ मगमच्छेषो लीलामानुषविग्रहः ।
माघशुक्लदशम्यान्तु मध्याह्ने मन्दवासरे ॥"—इति च
( ६८, ११६श्लो० २०—२४, ६२—६७ श्लो० ) ।

यच्चोक्तं रामानुजसम्प्रदायीयदेवराजाख्याप्रचलनात् पर मेव चलितं देवराजनामेत्यनुमानं नानृतं स्यात्, तर्हि सम्भाव्येत नाम— शालिवाहनशकाब्दानां मन्यूनत्रपाददशशताब्दीगते, विक्रमाब्दानां सार्द्धैकादशशताब्दीगते, खीष्टाब्दानां चैकादशशताब्दी गते च जातोऽयं देवराज इति ।

तथैह नैघण्टुकनिर्वचने प्रमाणत्वेनोपन्यस्त मुवटकृतं च वेदभाष्यं दृश्यते बहुवैव । उवटेन तु स्वकृतमन्त्रभाष्यावसाने स्फुटं ज्ञापितस्तद्रचनाकालः— "मन्त्रभाष्य मिदं कृत्स्न भोजे पृथ्वीं

प्रयामसि"-इति। राजस्थानीतिहासलेखकेन टड् महोदयेन त्रयो भोजाः परिचायिताः। तत्र प्रथमस्य सवत् ६१४=५५७खी०, द्वितीयस्य सवत् ७२२=६६५ खी०, अन्तिमस्य तु भोजस्य सवत् १०८२=१०३५ खी० राज्यारम्भकालो निर्णीतः। तेषां मन्तिम भोजराज्यकाले एव प्रणीत तत् मन्त्रभाष्य मिति स्वीक्रतेऽपि न हि तद्राज्यारम्भकाले एव प्रणयन मुपगम्यते, नाप्यन्यूनार्द्धशताब्दी मन्तरा तदानीं कस्यचिदपि ग्रन्थस्य सर्वत्र प्रसृतिसम्भव, प्रामाख तया यद्ग्रहश्च भवेदिति ततान्यूनाष्टपञ्चाशदब्दा अपि योजनीयाः। तदेवं ११५०-सवत्समात पर मेव प्रणीत मिद नैघण्टुकव्याख्यानं देवराजेनेति च प्रतीयते॥

निघण्टुभाष्यरूपस्य यास्कीयस्यास्य निरुक्तस्य ऋज्वर्थाभिधाया टीकाया प्रणेता दुर्गाचार्यस्तु अस्मात् देवराजयज्वनो नून परभव, देवराजकृताया नैघण्टुकव्याख्याननामटीकायां क्वापि दुर्गाचार्यस्य तद्ग्रन्थस्य वा नामोल्लेखादर्शनात्। अस्ति च नैघण्टुकव्याख्यान भूमिकाया 'इदश्च समनीषिकया न क्रियते'-इत्यादि, 'अतो ऽस्माभिर्यथामति प्रदर्शितो प्रतिपदनिर्वचननिगमौ विद्वांसो बुद्धा निरूप्य शुकभावितवन्मनसि कुर्वन्तु'-इत्यन्त, प्रमाणपारायण ग्रन्थसन्दर्भ, यदि नाम दुर्गाचार्यकृता मतसम्पादिता 'ऋज्वर्था' निरुक्तवृत्तिरपि तस्य देवराजयज्वन परिचिता स्यात्, तर्ह्यवश्य तत्र तस्यापि स्मरण गम्येत। ततो ग्रन्थमध्येऽपि बहूना व्याख्यातॄ ग्रन्थकाराणा च समुल्लेखो विद्यते, विशेषत स्कन्दस्वामिकृतस्य निरुक्तभाष्यस्य प्रमाणत्वेनोपन्यास परिदृश्यते प्राय प्रतिपदम्, पर नैकत्रापि निन्दामुखेन च नैव स्मृतो लक्ष्यते दुर्गाचार्यस्तदीय एव ग्रन्थो वा। अतो नि संशय मेवावगम्यते निघण्टुव्याख्याकारो

यज्वर्वंशप्रदीपो देवराजो नूनं यज्ज्वर्यारचयितुर्दुर्गाचार्यस्याग्रजन्मेति । किञ्च निघण्टुटीकायाम् ,—'नैगमदैवतकाण्डगतानाञ्च पदानां भाष्यकारेण (यास्केन) निरुक्तानां स्कन्दस्वामिना च तद्व्याख्यातानां प्रक्रिययोन्मीलितत्वम् ; यद्यपि नैघण्टुककाण्डनिर्वचनानन्तरं तदुन्मीलयितुमध्यवसायः प्रयत्नः प्रयतामहे.'—इति लेखात् , 'निगमदेवताकाण्डयोः निर्वचनं भाष्यस्कन्दस्वामिभ्यां प्रदर्शितं विशदप्रत्ययाभावात् प्रक्रियां विशदीकृत्य क्रमेण व्याख्यायते । तत्र, निगमव्याख्यानानि यद्यस्माननुसंहितं तत् तत्रैव द्रष्टव्यम्'—इति नैगमकाण्डीयव्याख्यानोपक्रमवचनाच्च स्फुटं प्रतीयते देवराजीयैतट्टीकाप्रणयनकाले स्कन्दस्वामिकृता निरुक्तटीकैवासीत् सुप्रचलिता ; न तु दुर्गाचार्यकृता मत्सम्पादिता ऋज्वर्थेति ।

अप्ययं दुर्गाचार्यः स्यात् सर्ववेदभाष्यकृतः सायणतः प्राग्भवः ; न हि सायणीयविस्पष्टभाष्यदर्शिनस्तथाविधं जटिलं निरुक्तोदाहृतमन्त्रव्याख्यानं युज्यते । दृश्यते चात्रैकत्र सायणीयरीत्या समुत्कृष्टतरकृतं व्याख्यानम् , यथाप्युद्धृतञ्च तत् सायणेन स्वकीये ऋग्वेदार्थप्रकाशे (ऋ॰ सं॰ ७। २६। १। मा॰ भा॰) ; उपरीकृतञ्च तत् तत्रैव— 'एतस्या व्याख्यानं निरुक्तटीकायां उद्धृतम्'—इति । अतोऽस्य निःसंशय मैव वक्तु प्रयते, सायणीयादृग्संहिताभाष्यात् प्राक् प्रणीतैषा दौर्गी निरुक्तवृत्तिरिति ।

सायणाचार्यस्य तस्य परिचयस्तु तदीयग्रन्थसुधानिधिप्रभृतिग्रन्थभूमिकादिभ्योऽभ्युपैयते एवम्— "वंशे यान्द्रमसे तदन्वयनिधिः श्रीसङ्गमोऽभूत् । तस्मात् प्रादुरभूदभीष्टसुरभिः श्रीबुक्कपृथ्वीपतिः ॥ हरिहरनिभो भूमौ कामदोहो जगत्याम् , हरिहरनरपालस्तस्य चाभूत् कनिष्ठः । •—• । तस्याभूदन्यगुरुः सत्य-

सिद्धान्तदेशिकः। सर्वज्ञः सायणाचार्यो मायणार्यतनूद्भवः॥ उपेन्द्रस्येव तस्यासीदिन्द्रः सुमनसां प्रियः। महाक्रतुना माधवो माधवार्यसहोदरः॥"-इत्यादि। माधवार्यो माधवाचार्य इत्यभिधः। तेन स्वकृतव्यवहारमाधवादिग्रन्थभूमिकादौ स्वस्य मुख्यामात्यत्वं स्वकुलवर्णनं चोक्तं विशेषतः। तद्यथा व्यवहारमाधवे— "सप्तैकग्रनपाम्भको द्विगुणधीस्फार्यो चतुर्वेदिता, पञ्चस्कन्धकृती षडन्वयदृढः सप्ताङ्गसर्वंसहः। अष्टव्यक्तिकलाधरो नवनिधिः पुष्यद्दिगन्तस्थितः, प्रासीत्कीर्तिपुरन्ध्रिगो विजयते श्रीबुक्कणः क्ष्मापतिः॥ इन्द्रस्याङ्गिरसो नलस्य सुमतिः शैव्यस्य मेधातिथिर्धौम्यो धर्मसुतस्य वैन्यनृपतेः स्वौजा निमेर्गौतमः। प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनो यद्वत्तस्य विभोरभूत् कुलगुरुर्मन्त्री तथा माधवः॥ •—• ॥ श्रीमती जननी यस्य सुकीर्तिर्मायणः पिता। सायणो भोगनाथश्च मनोबुद्धी सहोदरौ॥ यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी। भारद्वाजं कुलं यस्य सर्वज्ञः स हि माधवः॥"-इति।

मालादयो ग्रन्थाः प्रणीताः, स्वानुजेन सायणेन च कारितानि वेदभाष्याणि सर्वाणि। सायणाचार्येण तु हरिहरराजसाहाय्यात् यज्ञतन्त्रसुधानिध्यादयः प्रणीताः। यद्यपि शुक्लयजुस्संहिताभाष्यं मथर्वसंहिताभाष्यञ्च हरिहरनरपतेः राज्यकाले एव प्रणीतवान् स सायणः, तथापि स्वाग्रजसोदरस्य आदेशत एव ते अपि प्रणीते इति मन्वानेन तेन न तयोरपि माधवीयत्वमनङ्गीकृतम्।

तदनयोर्माधवसायणयोराश्रयौ यौ बुक्कहरिहरौ राजानौ; तयोस्तु खी० १३४४ समाया मभूच्छासनारम्भ इति निर्णीतं मद्यतनीयैरैतिहासिकैः प्राय ऐकमत्येव। तथाच १४०० संवत्समात् परस्तादेव माधवाग्रजो सायणेन प्रणीतानि वेदभाष्याणीति च गम्यते स्फुटम्। दुर्गाचार्येण तु सायणीयभाष्यतः प्रागेव निरुक्तवृत्तिर्निरमायीति च प्रतिपादितं पुरस्तात्। नैघण्टुकनिर्वचनरचयितारं देवराजस्तु ततोऽपि पूर्वतन इत्यपि निरूपितं प्राक्। तदेवं मत्यधिकसार्द्धत्रयोदशसवच्छताब्दीमध्ये एव समुत्पन्नोऽयं देवराज इत्यपि वक्तुं युज्यते।

तथा शुक्लयजुर्भाष्यप्रणेता महीधरमिश्रः खलु सायणमाधवयोरप्यग्रज इत्यपि स्याद् युक्तम्; महाराजजयचन्द्रप्रदत्तदानपत्रतो महीधरपौत्रस्य १२१२-संवत्समाया मवस्थित्युपलब्धेः। तथाहि तत्ताम्रशासनत एवेदं किञ्चिदुद्ध्रियते।— "यथोपरिलिखितग्रामो सजलस्थलो सलोहलवणाकरौ समत्स्याकरो मगर्तोषरौ सगिरिगहननिधानौ समधूकाम्रवनवाटिकाविटपतृण + तिगोचरपर्यन्तौ सोर्द्धाधश्चतुराघाटविशुद्धौ स्वसीमापर्यन्तौ द्वात्रिंशदधिकद्वादशशतसंवत्सरे भाद्रे मासि शुक्लपक्षे त्रयोदश्यां तिथौ रविदिने अङ्कतो-

ऽपि संवत् १२३२ भाद्रसुदि १३ रवौ अद्येह श्रीमद्विजयवाराणस्यां गङ्गायां स्नात्वा ०—० महापण्डितश्रीमहीधरपौत्राय महामिश्रपण्डितश्रीहालिपुत्राय महापण्डितश्रीहृषिकेशशर्मणे ब्राह्मणाय ०—० प्रदत्तो मया"-इत्यादि। मुद्रितचैतत्ताम्रफलकतः काशीविद्यासुधानिधौ ( September, 1869. )। नन्वेवं माहीधरभाष्यस्य पूर्वपीठिकावाक्यत एव यदवगम्यते माधवीयभाष्यस्य च ततः प्राचीनत्वं "भाष्यं विलोक्यौवटमाधवीयम्"-इति ; अस्य का गतिरिति चेत्, अत्र ब्रूमः— देवराजेनापि दृष्टं प्राचीनतर मेव माधवीयभाष्यं तत्र प्रामाणिकत्वेनोपन्यस्तं महीधरेणेति। इह हि नैघण्टुकनिर्वचने उद्धृतानां माधवीयभाष्यवचनाना मेक मपि नोपलभ्यते सायणमाधवीयेऽस्मद्दृष्टभाष्ये ; अत आसीदेव तदानीं तद्व्याख्यान्तरं माधवीयं नामेत्यत्रास्ति को विचार्यः। वाजसनेयिसंहिताभाष्ये यदवोचन्महीधरेण माधवस्त्वित्यादि ( १३. ४५. ), तदपि न सायणमाधवीयवचन मिति च ध्येयम्।

तदेवं १२३२-संवत्समायां स्थितस्य हृषीकेशस्य पितामहो महीधरः प्रायो द्वादशशताब्दीचतुर्थपादे (सं०११७६—१२००) प्रणिनाय वेददीपं नाम शुक्लयजुर्भाष्य मित्यनुमानञ्च भवेत्सङ्गतम्। तदेतस्मात् शुक्लयजुर्भाष्यात् प्राचीन मिदं नैघण्टुककाण्डनिर्वचन मिति प्रतीयते; अत्रोल्लिखितभाष्यनामादिषु माहीधरस्यादर्शनात्। तथाच विक्रमाब्दाना मन्यूनसार्द्धैकादशशताब्द्यतीते द्वादशशताब्दीचतुर्थपादारम्भाच्च पूर्वं ( सं०११५१—११७५ ) प्रणीत मिदं देवराजेन नैघण्टुककाण्डनिर्वचन मित्यस्माकम्॥

अथैतन्नैघण्टुककाण्डनिर्वचनभूमिकायाश्चतुर्थपद्यमङ्गीकृतः प्रतीयतेऽस्य देवराजस्य पितामहोऽप्यासीद् देवराजनामैव, पिता

च यज्ञेश्वरार्य इति । ततोऽनुमीयते,— बभूव य एको यज्ववंशीयो विद्वान् यज्ञमूर्त्तिः, काले रामानुजशिष्यत्व मुपगतो देवराज इति प्रसिद्ध, स एवास्य स्यात् पितामहः । तद्यथा— "ततो विद्वान् महान् कश्चित् यज्ञमूर्त्तिरिति श्रुतः । •—• शिष्यविद्यादिसम्पद्भिः संयुक्तोऽप्रतिवैभवः । •—• आसाद्य रङ्ग-नगरं लक्ष्मणाय त मब्रवीत् । रामानुज ! मया सार्द्धं शास्त्रवादं कुरु न्ययन्॥ •—• प्रणम्य लक्ष्मणार्यं च बद्धाञ्जलिपुटोऽब्रवीत् । त्वया जितोऽहं योगीन्द्र ! रक्ष मां शरणागतम् •—• ज्ञानपुत्रस्य मे चास्य यज्ञमूर्त्तेरिदं मुदा । •—• देवराजमुनिश्चेति नामा-न्तर मथाकरीत्॥"–इति प्रपन्नामृते पञ्चविंशषड्विंशाध्याययोर्द्रष्ट-व्यम् । किञ्च तत्रैव प्रपन्नग्रन्थे यज्ञेश्वरसंवादोऽप्यस्ति ( २६ अ॰ १० श्लो॰ ), स एव चास्य पितेति । पितामहपौत्रयोर्नामैक्यं यद्यपि भवितु मर्हत्येव विचारणीयम् : पर मेव मन्यत्रापि दृश्यत इति नासङ्गतम् । तद्यथा— षस्त्येको ग्रन्थो गुणरहस्याख्यः, तत्र न्यायमतानुसृतषट्पदार्थाना मन्यतमो गुणो बोधितः सम्यक् । तस्य चैका टीका विश्रूयते गुणसारमञ्जरीति । तत्प्रणेता किल माधवदेव-पौत्रो माधवदेव एव । तथाहि तद्ग्रन्थीय मिदं पुष्पिकावाक्यम्— "इति श्रीगोदावरीतटविराजमानधारापुरनिवासिमाधवदेवात्मज-लक्ष्मीदेवसूनुकाशीनिवासिमाधवदेवेन गुणरहस्यप्रकाश गुणसार-मञ्जरी विश्वेश्वरप्रीतये कृता"–इति ।

एवं मङ्गलाचरणपञ्चमश्लोके 'रङ्गेशपुरीपर्यन्तग्रामवास्तव्यः'–इति लेखदर्शनादवगम्यतेऽयं देवराजो दाक्षिणात्यः ; अस्ति हि रङ्गेशपुरी त्रिशिरपल्लीप्रदेशे कावेर्याः शाखाद्वयेन वेष्टिता प्रसिद्धा ; तस्या एवोपकण्ठे स वसति स्मेति । इय मेव रङ्गेशपुरी पुरा

बभूव रामानुजादीनां श्रीवैष्णवानां प्रधानतो रङ्गभूमिः, तदन्तराविर्भूतो देवराजो यज्ववंशजातोऽपि कथं न स्यात् विष्णुपदाश्रित ? अत एव मूल मिह प्रसङ्गतस्तेन— 'यथं शौरिकथालापप्रसङ्गे पुनीमहे-इत्युक्तं. ( १. ११. १५ )'-इति ।

किञ्च निरुक्त मिति प्रसिद्धे यास्कीये निघण्टुभाष्ये, स्कन्दस्वामिकृतायां तट्टीकायाञ्च यथा नैगमदैवतकाण्डपठितानि पदानि प्रत्येकं मुपादाय निरुक्तानि दर्शितनिगमानि च, न तथा नैघण्टुकानि, अतो देवराजयज्वना नैगमदैवतपदानां व्याख्याने न तथा श्रम कृतो यथा नैघण्टुकव्याख्याने, एतदेव प्रकटयितुं कृत स्वग्रन्थनामकरणं 'नैघण्टुककाण्डनिर्वचनम्'-इति । ध्वनि तच्चैतदेतद्भूमिकायां स्फुट मिति ।

इह भूमिकायां 'स्कन्दस्वामि-भवस्वामि-गुहदेव-श्रीनिवास माधवदेव-उवटभट्ट-भास्करमिश्र-भरतस्वाम्यादिविरचितानि वेदभाष्याणि'-इत्युक्तम् । तत्रादिपदात् हरदत्तमिश्रकृतस्य च वेदभाष्यस्य प्रामाण्यतयात्र ग्रहण मनुमीयते ; ग्रन्थमध्येऽष्टसु स्थानेषु तद्व्याख्यानोद्धृतिदर्शनात् । अय मेव हरदत्तः पाणिनिसूत्रेः काशिकाया' टीकाकारोऽपि स्यात् । एतत्कृता वेदव्याख्या त्वस्माभिर्नाद्यापि दृष्टा, परं मापस्तम्बसूत्रवृत्तिस्तु दृश्यते तत्कृतैवेति ।

( १ ) स्कन्दस्वामी । अनेन वेदभाष्यं प्रणीतम्, निरुक्तस्यापि टीका कृता । तावुभावेव ग्रन्थौ नैघण्टुकनिर्वचनप्रणयनकालेऽपि स्याताम् ; नान्यथा तत्र तयोस्तत्र प्रतिपद मेव संस्मरणं युज्येत । कल्पवर्षप्रणयनसमये तु स्कन्दस्वामिकृत वेदभाष्यं मासीत् वेति को वदेत्, परं निरुक्तव्याख्यानं दुर्लभ मपि लभ्येतैवेति सम्भाव्यते, न हि कि मप्यानम्प्य मस्तदेव निरुक्तव्याख्यानं कृत-

कार्यता दुर्गाचार्यस्य गम्यते। इदानीन्तु तदेवोपलभ्यते। अथ माचार्यः खलु रामानुजात् बहुपूर्वज एव स्यात्; रामानुजाभ्युदयात् बहुपूर्वं मेवेह भारते स्कन्ददेवनामादिप्रचारश्रुतेः। प्रपन्नामृतेऽपि हि षट्त्रिंशाध्याये जगन्नाथचैवतः सुदूरे वेङ्कटाद्रौ कूर्मक्षेत्रम्, तत्र च 'स्वामिपुष्करणीतीरे स्कन्दं मत्वा तदाक्रमन्। स्कन्द मित्येव शैवास्ते वैष्णवा वेङ्कटेश्वरम्॥'–इति वर्णितम्। ६२०–शाकीयताम्रशासनतोऽपि गम्यते, भवेत्तच्छताब्दीज एवाय मिति। तदिदं ताम्रफलकवृत्तान्तं Bombay Branch R. A S. प्रकाशिते पत्रे ( III. 208—1851 ) विशेषतो द्रष्टव्यम्।

( २ ) भवस्वामी। एतत्कृतभाष्यस्य किञ्चिदंशस्यापि दर्शनं नून' सम्भवं देवराजस्येति तु गम्यते तद्भूमिकोक्तिपाठतः, परं ग्रन्थमध्ये न क्वापि भवस्वामिवचन मुद्धृतं दृश्यते; ततस्तदानी मेव तद्भाष्यं विरलप्रचारता मुपगत मिति प्रतीयते; इदानीन्तु तद्भाष्यलाभस्य का कथा। तत्कृतोऽग्निष्टोमप्रयोगस्त्वद्यापि क्वचित् क्वचिदस्त्येव। भट्टभास्करकृते आपस्तम्बसंहिताभाष्येऽप्यस्य नामस्मरणं लक्ष्यते। Burnell-महोदयेन त्वस्य भवस्वामिनो ख्रिष्टीयाष्टमशताब्द्या मिह विद्यमानता अनुमिता ( Catalogue pp· 24—30. )।

( ३ ) गुहदेवः। अयं हि रामानुजस्वामितोऽप्यतीवपूर्वतनः, किं मधिकेन वेदान्ताचार्यसम्प्रदायगुरुषु तृतीयः। तथाहि रामानुजशिष्यवरेण श्रीनिवासदासेन यतीन्द्रमतदीपिकारम्भे एव मुक्तम् — 'व्यास-बोधायन-गुहदेव-भारुचि-ब्रह्मानन्दि-द्रविडाचार्य-श्रीपराङ्कुशनाथ-यामुनमुनि-यतीश्वर-प्रभृतीनां मतानुसारेण'–इत्यादि। यतीश्वर इति रामानुजस्यैव समाख्यान्तरम्; प्रपन्नामृतप्रभृतिग्रन्थस्तथैवोपलभ्यैः। यामुनमुनिश्च तत्पूर्वतनो वेदान्ता-

चार्यः, पराङ्मुखस्तु ततोऽपि पूर्वतन इति च प्रपञ्चामृता-दिभ्य एव ज्ञायते । एतदीयवेदभाष्यात्, पञ्जाबत खण्डितातीव-जीर्णपुस्तकात् एक मेव पदव्याख्यान मुद्धृत मिह देवराजेन—'गरम् उदकं गिरन्ति गरगिरः'–इति (१. ३. १४)।

(४) उवटभट्टः । १०८२–संवत्समातः समनन्तर मेतेन मन्त्रभाष्यं प्रणीत मिति निरूपितं पुरस्तात् । टात्तनामसाम्यात् काव्यालङ्कारकर्तु रुद्रटस्य समकालिकोऽय मित्येवं सम्भावितोऽपि गम्यते प्रायस्तथैव ; ११२५–संवत् समतीते काव्यालङ्कारटीका-प्रणयनावगमात् । तथाहि तत्समाप्ती— "एवं रुद्रटकाव्यालङ्कृति-टीप्पनकविवचनात् पुण्यम् । यदवापि मया तस्मान्न परोप-कृतिरतिभूयात् ।०—०। पञ्चविंशतिसंयुक्तैरेकादशसमाशतैः । विक्रमात् समतिक्रान्तैः प्रावृषीदं समर्थितम्"–इति । एतत्कृतं वहृकप्रातिशाख्यभाष्यम्, कात्यायनप्रातिशाख्यभाष्यं मन्त्रभाष्यं नाम शुक्लयजु संहिताव्याख्यानं चेति त्रयो ग्रन्थास्त्वस्मदादिभि-र्मुद्रिता एवेति ।

(५) श्रीनिवासः । अय मेव श्रीमत्पूज्यपादस्य भगवत् शङ्कराचार्यस्य गुरुरासीदिति श्रुत सत्यञ्चेत्, तत्समकालिकत्वात् सार्द्धाष्टशतसंवत्समाभ्यन्तरे एव स इमा भुव मलञ्चकारेति युक्तम् । नैघण्टुकनिर्वचने षट्स्वेव स्थानेषु एतन्मत मुद्धृत दृश्यते, तत-श्चावगम्यते देवराजकाले एवैतत्कृतस्य भाष्यस्याभवत् लुप्तकल्प तेति ; तदेतर्हि तत्प्राप्ति. कथ सम्भावनैव ।

(६) माधवदेव । दृश्यतेऽत्राप्येक वेदव्याख्यान विवरणं नाम ; तस्य रचयिता बभूवैको माधवः, वेदार्थप्रकाशाख्यभाष्या-णाञ्च कारयिता सायणज्येष्ठोऽप्येक आसीत् माधव ; ताविमाव-

अतएव माधवो देवराजोल्लिखितनामा माधवादस्मात् विभिन्नावेव ; नैघण्टुककाण्डनिर्वचने माधवीयेतिसमुद्धृतानां व्याख्यावचनाना मेकस्यापि तत्र विवरणवेदार्थप्रकाशयोरदर्शनात् । Benfey-महोदयेन च सामार्चिकसम्पादनावसरे ( ख० १८८४ ) सायणीय मिति यदुद्धृतं क्वचित् क्वचित् किञ्चित् किञ्चित् पूर्वार्चिकव्याख्या-नम् , तदपि नैव सायणमाधवीयं वेदार्थप्रकाशाख्यम् ; अपि त्वन्य माधवकृत-विवरणग्रन्थीय मेव ; सायणमाधवीयं सामभाष्यन्तु ततः पश्चात् प्रकाशितं सर्वेति ।

अपि सायणज्येष्ठो माधवः खलु मायणपुत्रः ; देवराजीयो माधवस्तु वेङ्कटाचार्यतनयः ; इहैव भूमिकायां 'श्रीवेङ्कटा-चार्यतनयस्य माधवस्य भाष्यकृतो'–इत्युक्तेः ।

वेङ्कटाचार्यौ च द्वौ प्रसिद्धौ । तत्र, यदयं 'शुल्वमीमांसा'-कारः स्यात् , नूनं तर्ह्यासीत् हरिहरयोः समानभावेनैवोपासको ऽद्वैधिपणः ; तत्र तथैव मङ्गलाचरणादिदर्शनात् । तथाहि तन्मङ्गलाचरणीयप्रथमः श्लोक एवः—

'पारावारात् प्रोद्गते चन्द्रलक्ष्मी , याभ्यां प्राप्तश्चौलिवक्षौ सुभूपे ।
सर्वैर्लोकैः पूजिते सङ्गृहीते , वन्दे देवौ वामदेवाच्युतौ तौ ॥"
"–इति श्रीमदद्वैतविद्याचार्यस्य ०—० सर्वतन्त्रस्वतन्त्रस्य ०—० श्रीवेङ्कटेश्वरदीक्षितस्य कृतिषु बौधायनशुल्वमीमांसायां प्रथमो-ऽध्यायः'–इत्येवमादयश्च तत्पुष्पिका द्रष्टव्याः । यद्ययं 'रहस्यत्रयसार' -कृत् , 'न्यासतिलक'-प्रणेता च स्यात् , नूनं तर्ह्यासीत् रामानुजमतानुगो भेदधिषणश्च ; तत्र तत्र रामानुजमतस्यैव प्रतिपाद्यत्वग-मात् ; न्यासतिलकस्य च व्याख्यानं रामानुजशिष्येण श्रीश्रीनि-वासदासेन सवत्कुमानकृत मिति दर्शनाच्च ।

यद्युच्येत,— शुल्बमीमांसारचयिता, न्यासतिलकादिप्रणेता चाभिन्न एवेति, तदप्युपपद्यतैव, दृश्यत एव हि शुल्बमीमांसाया भगवाक्ये यथा वेङ्कटाचार्य्यस्य विशेषणं सर्वतन्त्रस्वतन्त्रस्येति, रहस्यत्रयसारस्यान्तेऽपि तथैव। तथाहि— 'इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटेशस्य वेदान्ताचार्य्यस्य कृतिषु श्रीरहस्यत्रयसारः समाप्तः'—इति। वेङ्कटाचार्य्य, वेङ्कटनाथ, वेङ्कटेश, वेङ्कटेश्वर, वेङ्कटदीक्षितश्चैक एव स्यात्, एकस्मिन्नेव ग्रन्थे वेङ्कटस्य तस्य बहुविधाया समाख्याया व्यवहारदर्शनात्। वेङ्कट इति व्यङ्कट इति द्विधा लेखश्चोपगम्यतेऽत्र सर्वत्र।

ननु एकस्यैव चाभेदवादित्वं भेदवादित्वं च कथं सुपपद्येतेति चेत्, न, कालान्तरतया मतपार्थक्यसम्भवात्। यावदासीत् सोऽभेदविषयो यागभक्तश्च, तदैव प्रणिनाय शुल्बमीमांसादिकान्, यदा त्वभूत् रामानुजाभ्युदयवाताहतभेदधीः कैङ्कर्य्यव्रतः प्रपन्नः, तत एव विरचितवान् न्यासतिलकादिकानिति, अत्र किमस्ति वैचित्रम्।

यद्येव कल्पना नानृता स्यात्, तर्ह्यवश्यं तत्त्वतो माधवदेवो नैघण्टुकव्याख्यानकर्ता देवराजस्य प्रायः समकालिक एव भवेत्। तथा सति समकालिकव्यक्तिकृतात् ग्रन्थात् प्रामाण्यतया पुनः पुनः व्याख्यानाद्युद्धृतिर्देवराजस्यामानुपौर्व्येव स्वीकार्य्यम्। न च ग्रन्थकौत्कर्षमेव तत्र बीजमिति वाच्यम्, तदीयपूर्वापरविरोधप्रदर्शनेन तदौत्कर्षाभावबोधनात्। तद्यथा— 'मह्यो मे यस्य ०—० इत्यत्र माधवस्य प्रथमभाष्यम् ०—० मांथत्वे चाक्वनामैतत् ०—० अश्र मांथतौ ०—० इत्यत्र माधव ०—० माथतोर्वर्णस्य ०—० इत्यभाषयत्, निर्वणनीयम्' इति (१ १४ १८भा०) अस्तु

वा तत्तथैव ; परं देवराजकृत मिदं निर्वचनं यथा लब्ध मस्माभिः; कथं नैवं लभ्यन्ते तत्समसामयिककृतानि भाष्यनामानुक्रमण्या-दीनि ? इत्यपि विचार्य मेव।

अस्मन्मते तु वेङ्कटाचार्यद्वयमत्र एवाश्रयणीयः; तत्राद्यतः शुल्बमीमांसाकारो वेङ्कटाचार्यस्तासीत् मीमांसको दीक्षितश्च, रामानुजात् का कथा भगवच्छङ्कराचार्याच्च प्राग्भवो मण्डन-मिश्रादिसमसामयिकः सः ; तद्ग्रन्थालोचनात्तथैव प्रतीतिः। तत्पुत्रेणैव माधवदेवेन वेदभाष्यादीनि प्रणीतानि। देवराज काले स्थितान्यपि तानि साम्प्रतं विलुप्तान्येव वा।

माधवपुत्रेण विनायकेन कृतं कौषीतकीब्राह्मणभाष्यं तु क्वचित् क्वचित् लभ्यत एव; परं स हि कौषीतकीब्राह्मणव्याख्याता विना-यकोऽस्यैव माधवस्य पुत्र इत्यत्र तु नोपलभ्यते निःसंशयं मानम्। एवं विनायकशान्तिरितिप्रथिते क्षुद्रग्रन्थे सामगानां संहितातो ब्राह्मणभागोर्मन्त्राणां सङ्ग्रहः कृतो वर्त्तते। तस्य कर्त्ता विना-यकश्च किमु स्यादस्यैव माधवस्य सूनुः ? तथा षड्गुरुशिष्यस्तैकं विनायकं मन्यतमं गुरु माह। तथाहि—

'नमः षड्गुरवे तुभ्यं नमोऽस्मद्गुरवेऽपि च।
विनायकस्त्रिशूलाङ्को गोविन्दः सूर्य एव च।
व्यासश्च शिवयोगी च ये षट् तेभ्यो नमः सदा'–इति।

तत्र विघ्नविघातक गणेशादि पञ्चदेवताः पञ्चगुरवः, व्यासः षष्ठ इत्येवं षड्गुरव इति ये न मन्यन्ते, तेषाम् मते सोऽपि विना-यकः किं मस्यैव माधवस्यात्मजः ? इमानीह विचार्याण्येव।

( ९ ) भास्करमिश्रः— भट्टः। बभूवैको ज्योतिषशास्त्रीय-ग्रन्थानां प्रणेतातिप्रसिद्धो भास्कराचार्यः। नायं सः ; तस्य वेद-

विदावरत्वेन प्रमितत्वाभावात्। वेदान्तशास्त्रीयप्रकरणग्रन्थविशेषस्य सिद्धान्तसिद्धाञ्जनस्य रत्नतूलिकाख्याया टीकाया प्रणेतापि बभूवैको वेङ्कटयज्वपुत्रो भास्कर, स चास्माद् विभिन्न एव तत्रैव हि दीक्षित इति दत्तस्वपरिचयो न तु मिश्र इति। वैदिकग्रन्थेषु येषा त्रिकाण्डमण्डनाख्यग्रन्थकारिका प्रशस्ता, तासा प्रणेता बभूवापरो भास्कर, किञ्च वेदाङ्गच्छन्द:सूत्राणामतिदुर्लभस्यात्युत्कृष्टस्य भाष्यराजाख्यस्य भाष्यस्य रचयिता च बभूवान्यो भास्कर। नून मनयो कतरेणैव वेदभाष्यकारेण भवितव्यम्। न च त्रिकाण्डमण्डनकारो भाष्यराजकारयाभिन्न, तयो पितृपरिचयभेदात्। तद्यथा— त्रिकाण्डमण्डनकारस्य भास्करस्य जनकस्तत्र परिचित कुमारस्वामी, स एव वा स्यात कुमारिलस्वामी, भाष्यराजकारस्य तु गम्भीरराज। तदत्र गभीरराजसूनुना कृत तद् वेदभाष्य मुत कुमारिलतनूजेनेति चिन्तिते कुमारिलात्मजेनैव कृत वेदभाष्य दृष्ट देवराजेनेति प्रतीयते, नैघण्टुककाण्डनिर्वचने पूर्वेतिपदव्याख्यानावसरे सर्वार्थेषणात् पूषा'–इति भट्टभास्करमिश्र (१. १ १८) इत्येव सुलेखदर्शनात्, न हि गभीरराजसूनुर्भट्ट, अपि तु दीक्षित इत्येव परिचितस्तत्र भाष्यराजे, कुमारिलस्वामी तु भट्ट इति प्रसिद्ध एव मीमांसकानाम्। यदीद मनुमान नानृत भवेत्, तर्ह्ययं भास्करमिश्र प्राय श्रीमच्छङ्कराचार्यसमसामयिक एव। प्रायशो ऽप्यूनचतु शताब्दीपूर्वजोऽय मिति चानुमित Burnell–महोदयेनापि (Catalogue pp 10–14)। एतत्कृत रुद्राध्यायमात्रस्य भाष्य मस्माभिर्दृष्टम्, पर कस्याप्येकस्य वेदस्य सम्पूर्ण भाष्यं नाद्याप्यस्माक मभवद् दृग्गोचर मिति।

(८) भरतस्वामी। एतत्कृतग्रन्थतः एकमेवैकमेव क्षुद्रं निर्वचनवाक्यं मुद्रितं देवराजेन ; ततोऽवगम्यते ,— तदानीमेवैतत्कृतस्य सम्पूर्णस्य भाष्यस्यातिदुर्लभत्वम् ; इदानीं तु नैवोपलब्धिसम्भावनापि। अतस्तस्यापि भरतस्वामिनः परिचयः सम्प्रत्यस्माकं मन्येयकल्प एव। परं सन्ति कचित् पुस्तकालये छन्दोगारण्यकगानस्यैव तत्कृतं भाष्यमतिजीर्णमिति च नः श्रुतम्। ६२७-शाकीयताम्रशासनमस्यापि कालनिर्णये साहाय्यं निदानमिति।

अथास्य देवराजयज्वनो व्याख्यानशैली त्वजटिलेति प्रथयत्येव विपश्चिताम्। परं पौराणिकमतप्रबलकालप्रभवत्वादस्य बहुवैव पौराणिकमतानुसृता अपि व्याख्याः सन्दृश्यन्ते। तद्यथा— 'पञ्चाशत्कोटियोजनविस्तीर्णेति पृथिवी'-इति (१. १. ११.), पर्वतोऽपि पक्षच्छेदात् पूर्वं मन्तरिक्षे व्रजति स्म'-इति (१. १०. ११.), 'पक्षच्छेदात् पूर्वं पर्वतस्य'-इति (१. १०. १५.), 'उभयत्रापि छेद्यच्छेदकभावेन सम्बन्धः ०—० तेषां मिन्द्रः पक्षानच्छिनत्'-इति (१. १०. १.), 'पिनाकम् ०—० दण्डाकारं धनुरुच्यते ; तच्च त्रुटितो महादेवीय मेव सामान्येन'-इति (३. २८. १६) च। नैरुक्तविज्ञानभावावगमे चासमर्थ एवासीत् स इति च गम्यते ऽनेकत्र। तथाहि— 'विकृतत्वं ज्योतिषः शीतत्वात् ह्रासवृद्धिभ्यां वा ४. २. ६५)'-इत्येवमादीनि समालोच्यानि।

नैरुक्तशासनतारतम्यं कचित् कचित् ज्ञाननैर्मल्यनञ्च प्रतीयतेऽस्य। तद्यथा— 'यमः=मध्यस्थानवायुः'-इति (५. ४. १२), 'यमः ०—०=अस्तमयावस्थ आदित्य उच्यते'-इति (५. ६. १७), विष्णुः=तीव्ररश्मिद्वारेण सर्वत्र आविशति'-इति (५. ६. ११),

'अदितिः ०—०—ऐतिहासिकाना मते देवमाता , नैरुक्ताना मते अदीनादिगुणा, आत्मपक्षे प्रकृति.'-इति ( ४. १ ४८ ) च। 'पञ्चजनाः'-इतिपदस्य व्याख्यानावसरे शूद्रस्य च यज्ञाङ्गकार्याधिकारित्व निर्णीतम् ( २. ३. २३ )। 'यत्रैकार्थाना पदाना सन्निपात', तत्रैकं तस्य वाचकं भवति ; अन्येषा निरुक्त्या योजनं कर्त्तव्य मिति मर्यादा ( १. १. ११ )'-इत्यादिर्व्याख्योपदेशय तस्य नून मूल्यवानेव। 'रलयोरभेद.'-इति ( १. १. १३ ), 'डळयोरैकात्म्यस्मरणात्'-इति ( १. १. १५ ), 'बवयोरभेदः ( ४. ३. १२८ )'-इत्येवमादयश्च तत्प्रदर्शितविषय श्रौणादिकशब्दसाधने भवन्त्येव बहुत्र सहायकाः ।

निघण्टुसमाम्नायविरुद्धा अपि भवन्ति पदपाठा इति चेह ध्वनितम्। तद्यथा— 'सतीकम् ०—० अत्र स शब्दे अवग्रह करणं पदकाराणा मभिप्रायस्य वैचित्र्यात्'-इति ( १. १२. ५८) अग्रमते तु सतीक मित्यस्य तथैव निर्वचन कार्यम्, यतो नैव विच्छेदेन 'स । तीकम्'-इति पदग्रयः ; तस्यापि संहितावत्त्वेन व्यपदेशात् तद्विरोधस्यानुपेक्षणीयत्वात्। वस्तुतो 'सुतीकम्'-इत्येवात्रनैघण्टुकम् ; न पुन. सतीक मिति। एवं हिक मित्यादेर्निर्वचनावसरे यदुक्तम् एते निपाताः'-इत्येवं ( ३. १२. १-८ ) तदपि पदपाठविरोधादिन्दनीय मेव। तत्र त्वग्रमते 'एते नव निपातसमुदायाः'-इत्येव यत्तु युक्तम् ; अन्यत्राप्येवं समुदितपदद्वयस्य पदत्वेन परिगणनं दृश्यत एव हि निघण्टाविति। सायणाचार्यस्तु ऋग्भाष्यादौ हिक मित्यादीना पदपाठरीत्यैव व्याख्यान मलिखत् ; न तु निर्वचनरीत्येति पश्यन्तिद सत्यन्यायमानं किल देवराज.।

'व्योमशब्दनिर्वचनावसरे त्वेतत्र पदप्रत्ययमर्यादाभङ्गभिया उणादि-सूत्रस्य यास्कीयनिर्वचनस्यापि ध्वनितोऽनादरः। तथाहि—"उणादौ तु ०—० वीयते तद्वायुना व्योम। तथाच निरुक्तम्—'योनिरन्तरिक्षं महानवयवः परिवीतो वायुना'–इति (२. २. ४.) इदं निर्वचनं मेतत्पदकारयोः शाकल्यात्रेययोरनभिमतम्; वीत्य-स्मिन् पवग्रहीतत्वात्"–इति (१. ३. ३)। वस्तुतो यास्केनापि पदकाराभिमत मेव निरुक्तम्— व्योम व्यवन मिति ११. ४. ६ द्रष्टव्यम्; परिवीत इति तु नैव व्योमनिर्वचनम्, अपि तु तत्र प्रदर्शितनिगममन्त्रयुत पद मेव स एष महान् भ्रमो लक्ष्यतेऽत्रास्य देवराजस्येति।

इदानीकत्र निगमस्यान्वेषणीयता च प्रतिपादिता स्वकण्ठरवे-णैव। तदिद मन्वेषणीयत्वप्रतिपादनं नैव दूषणीयं मन्यतेऽस्माभिः; 'न हि सर्वः सर्वं वेत्ति'–इति-प्रमाणवलिष्ठात्वात्, लुप्तशाखीयनिग-मानां लाभासम्भवाच; परं यदत्र ब्राह्मणवादा अपि निगमा इति प्रदर्शिताः 'वैकुरानामापि जुष्टा'–इति निगमः"–इति (१. ११. ४०), तदिदं न रोचतेऽस्मभ्यम्; निरुक्तमूलरूपस्य नि-घण्टुसमाम्नायस्य ब्राह्मणपूर्वभवत्वेन ब्राह्मणग्रन्थोयपदेषु लब्धासम्भ-वात्, द्वादशाध्यायां निरुक्ते क्वापि तथाविधनिगमास्मरणाचेति। अपि वा ब्राह्मणग्रन्थेषु ये केचन मन्त्राः विद्यमानसंहितास्वश्रुता श्रूयन्ते तेऽपि प्रायो विलुप्त शाखीया एवस्युरितिसर्वमवदातमिति।

अथ ऋज्वर्थामाम निरुक्तटीकाया प्रणेता दुर्गाचार्यः खलु निघण्टु-व्याख्यातुर्देवराजयज्वनोऽवरजः, सर्ववेदभाष्यकृतः सायणाचार्यात्तु पूर्वजः इति प्रतिपादित मेव पुरस्तात्। समाप्यते, सोऽप्यासीद्

दाक्षिणात्य एवेति ; तत्र नैसर्गिकगौडविद्वेषदुर्गस्योपलब्धेः। तद्यथा— "वन्दनाः= वन्दितारः, लाडगौडादयः"–इत्यादि (निरु० ४. ३. ३ भा०)। सायणाचार्योऽपि दाक्षिणात्य एव, परं न स दुर्गाचार्य इवापरिमार्जितरुचिः ; तेन हि वेदार्थप्रकाशे 'वन्दना'–इति पदस्य 'वन्दनानि, रक्षांसि'–इति पौराणिकमतानुगत-व्याख्यान मकारि। नन्वेवं ऋज्वर्थायाः पुष्पिकासु दृश्यमानस्य 'जम्बूमार्गाश्रमवासिनः'–इतिविशेषणस्य का गति रिति चेत्, अत्र ब्रूमः—दक्षिणापथीयप्रदेशेभ्यो जम्बूदेशं गन्तुं प्रस्थिताना पान्थाना मार्गे एव स्थितस्तदाश्रमः, तत एव तत्र तथा विशेषण मुपपद्येतेति ; न ह्येतेन तस्य दाक्षिणात्यत्वं निरस्यते।

ऋज्वर्थाया निघण्टु,निरुक्तयोः कर्तृपार्थक्य मुप्रतिपादितम्। तथाहि— "एतस्मिन् मन्त्रे 'अकूपारस्य दावने'–इत्यय मनयोः पदयोरनुक्रमः, समाम्नाये पुनः 'दावने अकूपारस्य'–इति मन्त्रपाठव्यतिक्रमेणानुक्रम। तेन ज्ञायतेऽन्यैरेवाय ऋषिभिः समाम्नात', अन्य एव चायं भाष्यकार इति"–इत्यादि (४.३.२) याज्ञिकवैयाकरणैर्वक्ष्यमाणविचारोऽप्यत्र दर्शनीय। तद्यथा— "वायुर्वेन्द्रो वेति किं मैकस्य पर्यायवचनावेतौ शब्दौ उताभिधेयौ भिद्येते?"–इत्यादि. (७. २. १ टी.)। तत्रैव 'कस्मात् पुनर्मध्यमस्य शब्दद्वयेनोपदेश क्रियते, पार्थिवोत्तमयोरेकैकेन? (७ २.१टी.)"–इति विचारोऽपि भवेदेव प्रेक्षावता समभिधेयवचन'। "पावक्या इन्द्रपान मिति समाख्या (८ १.२ टी.)"–इत्येव मादि व्याख्यानञ्च दुर्गाचार्यस्य तस्य याज्ञिकत्व मावेदयति। "नासु तनूनपादिवैक' ०—० नाम्येव नराशंसः, तत्र नराशंसयाजिना सौत्रामणीप्रयोगे कथं प्रयोग? (८. ३. ७ टी.)"–इति

मत्यग्रोद्भावने मपि प्रयत्न मेव। "आथर्वणे रोदसीत्यप्यच्छं पदम्, तदपेक्ष्यैकवचनेन भाष्यकारो निराह 'रोदसी रुद्रस्य पत्नी'-इति (१२. ४. १२ टी०)"-एषापि पङ्क्तिरस्य बहुमूल्यैव। "सा च पुनर्थौम्या (७. ४. १ टी०)"-इत्याद्यनुक्रमण्यार्थवचनजातस्य भवेदेव प्रशंसनीयम्। देवानां द्वैविध्यम् (१२. ४. ७ टी०), पितॄणां त्रैविध्यम् (११. २. ६ टी०), मन्त्रेषु देवतानिर्णयप्रकारोपदेशव्याख्यानं (७. १. ४ टी०) चेत्येवमादिकं सर्वमिह द्रष्टव्य मेव॥

अथ मन्त्राणां छन्दोनिर्णये क्वचित् क्वचिदिह छन्दोऽनुक्रमणीविरोध परिलक्ष्यते। तद्यथा— 'सं मा तपन्त्यभितः (ऋ० सं० १. १०५. ८.)'-इत्यस्या ऋचो निर्णीतं तेन पङ्क्तिश्छन्दः; अनुक्रमण्यां तूक्त मत्र— "पाङ्क्त मन्त्या त्रिष्टुबष्टमी महाबृहती यवमध्या"-इति। एतदेव छन्दोऽनुक्रमणीमत मनुसृत्य सायणाचार्येण च ऋग्भाष्ये निर्णीत मियं यवमध्या महाबृहत्येवेति। तत्र हि मध्यपादस्य द्वयक्षरन्यूनत्वे वैताद्दशमतद्वैधे निदान मुपगम्यते। वस्तुतस्तु ताद्दशस्थले छन्दः सन्दिग्धत एव; प्रदर्शिताया हि ऋचो मध्यमः पादो दशाक्षरः श्रूयते, न च दशाक्षरमध्या द्विचत्वारिंशदक्षरा पञ्चपदा काचिदस्ति विराड्‌ बृहती पङ्क्तिर्वेति; अतो नून चिन्तनीय मेवैतस्या ऋचो विराड्-यवमध्या नाम महाबृहतीच्छन्द, उत स्वराट्पथ्या नाम पङ्क्तिच्छन्द? इति। ईदृक्सन्देहापनोदनार्थैव स्त. पिङ्गलाचार्यसूत्रे— "आदितः सन्दिग्धे, देवतादितश्च (६, २१, ७, १.)"-इति। एवञ्चास्या ऋचः पाङ्क्तसूक्तमध्यपतितत्वात् पङ्क्तित्व मेव न्याय्यः। न जाने कथ मनुक्रमणीकारोऽस्या महाबृहतीत्व माख्यदिति। क्वचित् मूलानुरोधतोऽपि मद्द्क्छन्दोऽनुक्रमणीविरोधो गलेकुठारन्यायेन स्वीकृत एव

दुर्गाचार्येण । तद्यथा— अनुक्रमण्यनुसारतः खलु “अभि न इला” –इति त्रिष्टुप्छन्दस्का, तत उत्तरा “स्रिपक्तु नः”–इत्येषा विराड्छन्दस्का; यास्केन त्वेतदवतरणे मुक्तम् ‘पथा भवति’–इत्येकवचनान्तम्; ततश्च ज्ञायते तन्मते उभयोः ऋचोः एकत्व मिति। तदाह तत्र तद्व्याख्याया मेव दुर्गाचार्यः ‘शक्वरी’–इति’। सायणाचार्येण तु ऋग्भाष्ये अनुक्रमण्यनुरोधतो नैरुक्तमतमपि दूषायितः? अपि वा न च तेन तदानी मेष निरुक्तग्रन्थः स्मृतः? अन्यथा ह्येतदुल्लेखोऽपि कथं न तत्र कृतस्तेनेति। वस्तुतोऽत्र निरुक्तानुक्रमणीकारयोः प्रतीयत एव मतभेदः, तत् किङ्कर्त्तव्य-. मूढ एवाभवदिह देवराजस्तथा सायणश्च।

दुर्गाचार्यदृष्टनिघण्टु समाम्नायपुस्तकगतलिपिकरप्रमादादिदोषतश्च क्वचित् क्वचिद् भ्रान्तिः प्रतीयते ऋज्वर्थायाम्। तद्यथा —निघण्टौ नैगमे काण्डे उद्देल्याद्यखण्डे समाम्नात मेवैकञ्चिंशत्तमं ‘नू च’–इति; तदवलम्ब्यैवोक्तं भगवता यास्केन “पुराणनवयोर्नू चेति च”–इति (४. ३. १.); निगमश्चोदाहृतस्तत्रैव तेन “नू च पुरा च सदनं रयीणाम्”–इति (ऋ० सं० १. ९६. ७.)। दुर्गाचार्यस्त्वाह “अथन्तु नूचिदित्येतस्यैवार्थसामान्यप्रसङ्गादसमाम्नात एवोदाहृतः (४, ३. १ टी०)”–इति। किञ्चात्र्ययास्कीयग्रन्थः पदपाठविरुद्ध इव लक्ष्यते। पदकारा हि ‘नू। चित्’; ‘नू। च’–इत्येव मवगृह्णन्ति; निरुक्ते तु ‘नूचित्’–इति, ‘नूच’–इति चैतौ अनवग्रहणीयावेव निपातौ सूचिताविति गम्यते। निघण्टुसमाम्नाये तु द्विवाण्यपि पदानि पदत्वेन परिगणितानि दृश्यन्ते “शं योः (४. १. ४८.), सोमो अक्षाः (४. ३. १३.)”, देवो देवाच्या कृपा (४. २. ३९.)”–इत्यादीनि। तथा चैवंविध-

सन्देहनिरसनाय ताहृशसमाम्नायपाठदर्शनमाकिञ्चित्कर मेव। तदत्र टीकाकृतोऽत्र वचन मेव भवेच्छरण मस्माहृशाम्; दौर्भाग्य मेवास्माकं यदिह कल्व्यर्थाकृती नैवौष्ठाधरप्रस्फुरणं दृश्यते। अहह एष विरोधः किमु तेन नैव लक्षितः? दशमेऽपि पुनः नूचिदित्यस्यैव 'नवं च पुराणं च'-इत्यर्थः कृतो यास्केन; तत्र तूक्तं दुर्गाचार्येण —"नू चित् इति नवपुराणाभिधायकौ निपातौ (१०. १. ३ टी०)"-इति। सायणाचार्येण तु तत्र नूचिदित्यस्य नवपुराणार्थतापि न स्वीकृता! अपि तूक्तम्—'नूचिदिति निपातो निषेधेऽत्र वर्त्तते'-इति। इद मेवोच्यते 'मुरारेस्तृतीयः पन्था.'-इति। तत्त्वतः सायणाचार्यकृतं तद्व्याख्यानं तु निरुक्तविरुद्धं पदग्रन्थविरुद्ध मिव च प्रतीयत एव।

क्वचिदिह मूलादृष्टपदस्यापि व्याख्यानं कृतं गम्यते। तद्यथा —'सहस्त्रिणः'-इत्यादिः, 'वायव्ये मन्त्रे'-इत्यन्तो ग्रन्थः (४. ४. ५टी०) समालोच्यः। तदेवंविध स्वकपोलकल्पितपदव्याख्यानं चातीव विस्मयावहम्।

क्वचित्तु मूलपाठेऽपि स्वसंशयः प्रकाशितोऽनेन। तद्यथा— 'भाष्य मत्र न सम्यगिव लक्ष्यते; तस्य सम्यक् पाठोऽन्वेष्यः, ततो योज्यम्'-इत्यादि (६. ६. ५ टी०)। तत्र ताहृशाशङ्काया निदानोल्लेखस्य स्यादुचितस्तस्य; अन्यथा हि अस्तवक्तव्यता-दोषो भवेदेव दुष्परिहार्य.। अस्माकं स्वल्पधियां न तत्रासम्यक्ता-बोध उपजायते। सायणाचार्येणाप्येतदेव नैरुक्तं व्याख्यान मुत्कृष्टे मत्वैव प्रशंसापूर्वकं सम्पूर्ण मुद्धृतं यथायथ मृग्वेदार्थ-प्रकाशे। तत् कथं मन्यामहे दुर्गाचार्यस्यैव नैरुक्तपाठसंशयो नूनं धीमतां विचारविषय इति।

मूलोक्तलक्षणानां मुदाहरणेषु समन्वयाः खलु टीकाकारैरवश्यं दर्शनीयाः ; परं किन्त्वनैकत्र न तथा दर्शिता दुर्गाचार्येण ; ततोऽत्र बहुत्रैव भवेत् लक्षणसमन्वयमयस्य दुष्परिहार्यता च । तद्यथा— परोक्षकृताना मृचां यल्लक्षण मभिहितं मूले "परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य"-इति (७. १. १.) ; एतस्योदाहरणान्यपि दर्शितानि तत्रैव "इन्द्रो दिव (१०. ८९. १०.)"-इत्यादीनि ; परं मुदाहृतेषु तेषु परोक्षकृतनिगमेषु न हि श्रूयन्ते सर्वा एव प्रथमपुरुषक्रिया , प्रत्युत 'अनूषत', 'गायत', 'अरसत'-इति तिस्रो मध्यमपुरुषक्रियाश्च । तदिह कथं भवेल्लक्षणसमन्वयः ? इतीह हन्तिकृतोद्भावनीय मेव । न च तन्नोद्भावितं दुर्गाचार्येण । किञ्च 'अनूषत'-इत्यस्य अभिष्टुवैति प्रतिशब्ददान, तदनुगतं सर्व तन्मन्त्रव्याख्यानं च तस्य व्याख्यापयत्र एवोद्भावयति । सायणभाष्ये तु 'अनूषत'-इत्यस्य स्तुतवन्त इति प्रतिशब्दः प्रदत्तः , तथा न चोपलभ्यते तत्र यूय मिति , स्फुट मप्युक्तं तत्साधनिकाया 'लुङि व्यत्ययेनात्मनेपद' मत्यादादेश '-इति । अहो इत्येतदपि विचार्यम् — यस्लैकस्यैवास्य दुर्गाचार्यस्य व्याख्याने दोष , परं सर्ववेद भाष्यकारेण सायणेनापि 'गायत'-इत्यस्य व्याख्यायां कथं न यास्कीयलक्षणोदाहरणमर्यादा परिरक्षिता ? गड्डलिकाप्रवाह एव किं मत्र बीज मिति विद्वद्भिरनुसन्धेयम् ।

'एष चाख्यानसमय'-इत्येतन्नैरुक्तवचनस्य (७. २. ३.) 'भारते चाख्यानसमये एष एव सिद्धान्त इत्यर्थः'-इति दुर्गाचार्य कृतव्याख्यानदर्शनात् गम्यते नून मेतत्प्रचलितं महाभारतं निरुक्तात् पूर्वैव प्रणीत मिति । तदेतादृशव्याख्यानं तु पौर्वापर्य-

ज्ञानविधुरेणैव कृत मिति कालज्ञानकृतप्रमाणा मैतिहासिकानां भवेद्दास्यास्पद मेव। एव मन्यत्रापि बहुत्रैव विवेचनीयम्।

क्वचिद्विशेषतो व्याख्येयानि मूलवचनानि च नैव व्याख्यातान्येतेनाचार्येण; क्षमार्जनीय एवैष दोषो व्याख्यातॄणाम्। त इमदोषान्तु मयोऽनेषिता बहुत्र तट्टीकास्वन्याम्। किञ्च यदिहानेकत्रोक्तं भगवता यास्केन— "इति सा निगदव्याख्याता"-इति, तेषां सर्वेषा मेव निगमानां विशेषतो व्याख्यानानि कर्त्तव्यान्येव इत्तिकृतोऽस्य। अहो बत, तादृशानां व्याख्याकथा तु दूरे आस्ताम्, असकृच्छ्रुतस्य निगदव्याख्यातेति पदस्यापि व्याख्यानं न कृतं तेन क्वचिदपि! वस्तुतस्तु यास्ककाले याषा मृचा मर्थबोध आसीदतीव सुगमः, तासां व्याख्यानं निष्प्रयोजन मिति मत्वैवाह तत्र तत्र यास्को निगदव्याख्यातेति। श्रूयन्ते चैवं निगदव्याख्याता मन्त्रास्तैत्तिरीयारण्यकादावपि। तथाहि— "अथ निगदव्याख्याताः, तानतुक्रमिष्यामः"-इति तै॰ आ॰ १प्र॰ ८अनु॰ ४ख॰। 'निगद्यमानैनैव मन्त्रपाठेनैव ०—० विस्पष्ट मास्यातो भवति, तान् एतान् मन्त्रान् अनुक्रमेण कथयिष्यामः'- इति च तत्र तद्भाष्यं सायणीयम्।

क्वचिदहो त्रैकालिकाभावविशिष्टस्य मन्त्रकमलस्यापि सुगन्धोद्भावि तेन; दृष्टञ्च क्वचिन्निराकार मपि साकारम्। अतिगभीरमूलग्रन्थो दिग्भ्रम एव तत्र तत्र तट्टीका मनुमोदते, नान्यत् कि मपि। तद्यथा निरु॰ ८. १. २.— "अथाप्यस्य मपरो ऐन्द्रिस्य द्रविणोदस्त्वे— 'अग्निं द्राविणोदस माह' मन्त्रदृक्। स मन्त्रो मृग्य.। केचित्तु 'द्रविणोदाः पिबतु द्राविणोदसः'- इत्येव मन्यन्ते। यस्मादपत्यं द्राविणोदसोऽग्निः, स एव द्रविणोदा

इति'–इति। अस्मन्मते तु न अत्र द्रविणोदसपदघटितमन्त्रोऽन्वेष्यः; अपि तु द्रविणोदा इन्द्र इति चेत् इन्द्राज्जातोऽग्निरिति यत्र श्रूयते एव मेव निगमो दर्शनीयः; दर्शयिष्यत्यनुपदञ्चात्र तथैव— "यो अश्मनो अन्तरग्निं जजान"–इति भाष्यकारः स्वय मेव।

क्वचित् पदग्रन्थविरोध मुररीकृत्य च कृतं नैरुक्तनिगमव्याख्यान मेतेनातिपण्डितम्मन्येन। तद्यथा वराहनिगमव्याख्यानावसरे लिपिरूप मिद मिति मन्त्रे वोक्तम्— 'लेपितः = सन्दीपितः'–इति (५. १. ४टी॰)। पदसंहितायां तु 'लाऽऽपितः'–इति साव-ग्रहपाठः श्रूयते। तथाचावगम्यते बह्वृक्पदकारस्य शाकल्यस्यपि-नाव लिपिरूप मिद मिति। एवञ्चानयोर्विरोधः स्फुटम्। नून मवगतञ्चैव विरोधस्तेनापि वेदार्थपटुना; अत एवानुपद मुक्तम्— 'नान्यथार्थं उपपद्यते'–इति। 'अन्यथा' पदकारनये 'ला ऽऽपितः'–इत्यवग्रहानुरोधतः लिपिरूप मिद मिति स्वीकाराभावे इति च तद्भावः। एतच्च प्रौढ़िवादमात्रम्; सायणाचार्येण तु पदकारमत मनुसृत्य कृत एव हि लेपित इति पदस्य 'त्वया प्रेरितः'–इत्यय मर्थोऽसकृत्। वस्तुतोऽस्माभिः सर्वत्र तथैवार्थः कल्पनीयो यथा न विरुध्येत पदपाठः। आर्षं पदपाठ मवमत्यार्थ-करणन्तु साहस मेवेत्यत्र कास्ति वक्तव्यता।

एव मनुक्रमणीकारस्य शौनकस्य, कल्पकारस्याश्वलायनस्य च मतविरुद्ध मिह प्रतीकोपादान मभिलक्ष्यते। तद्यथा—"आवष्ट आसाम्"–इतिनिरुक्तोदाहृतनिगमस्य व्याख्यानाय तत्पूर्ववर्त्तिन्याः "अभि यो देवीम्"–इत्यस्याः (ऋ॰ सं॰ ७, ३४. ८.) प्रतीकोपा-दानम् (६.२.३.)। तदत्र शौनकाश्वलायनयोर्मते ये दिपदे ऋचौ, ते एवैते अभिलक्ष्य चतुष्पदीत्येका दुर्गाचार्यस्येति मतविरोधो व्यक्तः।

स्तस्य वैज्ञानिकज्ञानाभावोऽपि द्योतितोऽत्र बहुत्र स्वयम्। तद्यथा — 'विक्षतज्योतिष्कः'-इतिनैरुक्तपदस्य व्याख्यानायोक्तम्— "तद्धि तस्य विक्षतं ज्योतिः, शीतत्वात्; इतराणि उष्णानि ज्योतींषि सूर्यादीनि, तान्यपेक्ष्य"-इति (पृ. ४. १टी०)। स्वभावस्यान्यथाभाव एवोच्यते विकारो नाम लोके; तद्यदि हि पूर्वं मुख्य मनन्तरं चन्द्रमःसम्बन्धात् शीत मिति स्याद् विज्ञानवेद्यं चान्द्रमसं ज्योतिः, तर्ह्येवोपपद्येत चन्द्रवाचकस्य 'ऋक्षः'-इति पदस्य यास्कीयं निर्वचनं 'विक्षतज्योतिष्कः'-इति। स्वभावशीतस्य तु विक्षतत्व मेव किमत्रेति संशयोऽपि नोद्भूतः किमु दुर्गाचार्यस्य ?

एवं यदा पौराणिकाख्यानवनघटाभिराच्छन्नं वैदिकं ज्योतिः, तादृशे एव निविडान्धकारग्रस्ते भारते यतोऽयं जातो दुर्गाचार्यः, ततोऽपीह ऋज्वर्थायां मूलाभिप्रायविरुद्धानि मूलासम्बद्धानि च बहून्याख्यानानि दृश्यन्ते। तत्र, मूलाभिप्रायविरुद्धं यथा— "एव मुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति"-इतिनैरुक्तवचनस्य व्याख्यानविषये "मन्त्राणां द्रष्टारो भवन्ति, न तु कर्त्तार इत्यभिप्रायः"-इत्युक्तम् (७. १. ३टी०)। न चाय मभिप्रायो मूलकर्तो यास्कस्येति गम्यते। तस्मात्तु अनिर्दिष्टकालिकाना मतिप्राचीनानां ग्रन्थादीनां दृष्ट इति, युगारम्भकालिकानां प्राचीनानां प्रोक्त इति, मध्यकालिकाना मनतिप्राचीनाना मद्यतनीयानाञ्च कृत इति त्रय एव व्यवहाराः समार्थाः ; तथैव पाणिनिशासनात्। तथाहि — 'दृष्टं साम'-इति (४. २. ७.), 'तेन प्रोक्तम्'-इति (४. ३. १०१.), 'कृते ग्रन्थे'-इति (१.४.३.) चैतानि सूत्राणीहालोच्यानि। मूलासम्बद्धानि च यथा—'सप्त सिन्धून्, स्यन्दना आकाशनदीः, एला च इला चेत्येवमाद्याः'-इति (८ १.२टी०), "समारोहणे—

उदयगिरौ"-इत्यादि (७. १. २ टी०) च । तथा "इह कथं चन्द्रमा मध्यस्थान: ?"-इति स्वारस्यविचारस्य समाधान मपि (११. १. ६टी०) ततोऽधिकं चित्रम् ।

एवमपि यास्कीयप्रवचनव्याख्यानानुरोधात् तस्य बहुत्रावितथवादित्व मपीष्ट व्यज्यते । तद्यथा देवताना माकारविचारप्रकरणे— "तदाहुः 'नैतदस्ति यद्देवासुरम्'-इति । ०—० 'तद्यथा — अग्निः, वायुः, आदित्यः, पृथिवी, चन्द्रमा.-इति' । प्रत्यक्षत एतान्यपुरुषप्रकाराणि, इत्येतेषा मतोऽन्यथाभ्युपगमे दृष्टहानिः स्यात् ! न चैतदिष्टम् । तस्मादपुरुषविधा अग्न्यादयः, तत्सामान्याददृष्टा इन्द्रादयोऽप्यपुरुषविधाः, न हि मनुष्यत्वे तुल्ये केचिदाकारिणः केचिदनाकारिण. इति, तथैव देवताना मपि हि न्यायः । तस्मादपुरुषविधा इति"-इति (७. २. ३टी०) । एतेन अग्न्यादीनां पुरुषरूपकल्पन मप्यपास्त मिति स्फुटम् । एवं भगवता यास्केन पृथिव्याः यद्दि प्रभाशून्यत्व वर्णितम्— "अपगतभास मपहृतभास मल्पहितभास गतभासं वा"-इति (६.६.७) । तत्र दुर्गाचार्येण 'कृष्णच्छाया भवति पृथिवी'-इत्यप्यवगतम् ।

एव मप्यस्त सारशून्यो वंशतरुचन्दनवनस्थोऽपि न कथ मपि चन्दनायते । दुर्गाचार्यः खलु देवताना मपुरुषविधत्वं व्याख्यायाप्यनुपद मनुससारैव पौराणिकमतम् "परे तु अधिष्ठातार पुरुषविग्रहाः (७. २.३टी०)"-इत्यादिना । अपि नैव विगत स्थास्य पौराणिकराद्धान्तकथासंस्कारः । अहो कालप्रभावजो मतिविभ्रमः । वेदाङ्गग्रन्थकर्तुर्भगवतो यास्कस्यापि मतं खर्वीकर्तुमिच्छत्ययम् !! एव मगस्त्यप्रश्नव्याख्यानादावपि पौराणिकाख्यानमेवानुसृतम् (१. २. ४टी०); न तु तत्त्वं व्याख्यात मेतेन ।

क्वचिदिह व्याकरणप्रक्रियाख्यान मप्यपरिस्फुटम् । तद्यथा—'यक्षे'-इति नैगमपदव्याख्यानाय यदिदमुक्तं भगवता यास्केन 'यक्षे तवन्धुः'-इत्यादि । तत्र यक्षच्छन्दात् प्रथमादीनां सर्वासा मेव विभक्तीनां बहुवचनानां 'जस्-शस्-भिस्-भ्यस्-भ्यस्-आम्-सुप्'-इत्येतेषां स्थाने "सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः"-इति (७. १. ३९.) पाणिनीयेन सूत्रेण शे-आदेश एवेष्टः । तथाच 'यक्षे'-इत्येकरूपस्यैव पदस्य वयम्, यक्षान्, यक्षाभिः, यक्षभ्यम्, यक्षत्, यक्षाकम्, यक्षासु इति सप्तविधा एवार्था भवितु मर्हन्ति, भवन्ति च यथास्थानं यथानुगम मित्येव मूलतात्पर्यम् । परं दुर्गाचार्येण लेषा वैयकरणप्रक्रिया नैव तत्र कण्ठरवेणोद्घोषिता ; अपि तूक्तं "'यक्षे'-इत्यस्य 'वयम्'-इत्येवमयमया विपरिणाम उपपद्यते"-इत्येवमादि (६. २. १ टी० ) ।

जामिशब्दस्यातिरेकयालिशार्थयोर्मन्त्रान्निगमप्रदर्शने देवराजोऽप्य-भवदसमर्थ इव ( ४. १. ४६. ) । वस्तुतस्तु नैघण्टुकव्याख्यान मेवा-स्तासीन्निगमषड्डुे मुख्य मवलम्बनं प्रतीयते ; तत्र हि येषां पदानां निगमा नैव दर्शिताः, इहापि न तेषां त उपलभ्यन्ते ; अपितत्र खलु येषां पदानां ये च यथा च निगमाः प्रदर्शिता देवराजेन, प्रायस्त एव तथैवेह च दृश्यन्ते । तद्यथा— तत्र क्रोधनामसु पठितस्य चरइति-नैघण्टुकपदस्य 'निगमो ऽन्वेषणीयः'–इति व्याख्यान मुपसंहृतं देवराजेन (२. १३. २. ) ; तथेह क्रोधनामनिरुक्तव्याख्यानावसरे दुर्गाचार्येणापि तन्निगमो नैवादर्शि (३.२.३टी०) । परं सायणीय-भाष्यदर्शनात्त्वस्माभिरवगम्यते एव क्रोधवाचिनोऽपि चरःशब्दस्य निगमः— "अवयाता चरसो दैव्यस्य"–इति (ऋ०सं०८.४८.२.) । पुनस्तस्यैव चरःशब्दस्य ज्योतिर्दिनार्थयोः क्रमात् यौ निगमौ प्रद-र्शितौ देवराजेन, तावेव ऋज्वर्थाया मपि ; किञ्च चरशब्दे यथा मन्त्रान्निगमालाभः सूचितो देवराजेन, ऋज्वर्थाया मपि तथैव ; अहो तत्रैव ततयोक्तं देवराजेन 'उदकलोकवाचिनिगमौ पर्येष्यौ'-इति (४.१.३८.), तत एवानन्यगत्या दुर्गाचार्येणापीह (४.२.३टी-कीन मैत्रावरुणित मित्यर्थं पदवर्णितेति शम् ॥

# ऐतरेयालोचनम् ।

( अथैत )

॥ ऐतरेयब्राह्मणस्योपोद्घातरूपम् ॥



वङ्गदेशीयास्यायितिकसमितेरनुमत्या व्ययेन च,

आचार्यश्रीसत्यव्रतशर्म्मसामश्रमिणा

प्रणीतम् ।

॥ द्वितीयसंस्करणम् ॥

( परिवर्त्तितं परिवर्द्धितञ्च )



कलिकाता—सत्ययन्त्रे

१८६२-सम्वत्समायां मुद्रितम् ॥

# ॥ अथैतरेयालोचनविषयसूची ॥

विषयः — पृ०

॥ अथ ॥

# ॥ ऐतरेयालोचनम् ॥

---

अथेहालोचयामः—(१) कि मिद मैतरेयं नाम ?, (२) कोऽस्य प्रवक्ता ?, (३) कुतश्च सः ?, (४) कः कालोऽस्य ?, (५) कीदृशान्यासन् तदानीन्तनाचारव्यवहारविज्ञानानि ?, (६) कस्याः शाखाया इदम् ?, (७) कोऽस्य विषयः ?, (८) किम् प्रयोजन मेतस्येत्यष्टौ ॥

(१)

अथ कि मिद मैतरेयं नाम ? ब्राह्मण मिति ब्रूमः किमु ब्राह्मण मिति। अत्राह जैमिनिः— "शेषे ब्राह्मणशब्दः" -इति (२. १. ३३.)। मन्त्रभागातिरिक्तो वेदभागो ब्राह्मण मिति तदर्थः। यद्यपि विचारैषेदं लक्षणं युक्ततम मिति ऋग्भाष्यभूमिकादौ सायणादिभिरङ्गीकृतम्, न तथाप्यर्थज्ञानाय तादृग मिति मन्यामहे वयम्; एतल्लक्षणत एव तत्स्वरूपाप्रतीतेर्ब्राह्मणग्रन्थानां वेदत्वे विप्रतिपत्तिदर्शनाच्च। अतोऽत्र "कर्मचोदना ब्राह्मणानि"-इति (३५ सू०) आपस्तम्बलक्षण मेवेहाश्रयामहे। अस्ति च कर्मचोदनापरा मन्त्रा अपीति तल्लक्षणं सदोष मिति चेदत्र ब्रूमः,— पदार्थस्वरूपबोधानुपयुक्तनिर्दोषलक्षणतो, वरं पदार्थस्वरूपबोधायोपयुक्तं सदोषलक्षण मपीति। तत्वतो यथा यजुर्वेदस्याया यजुःसंहिताया यजुर्वेदत्वं

न दोषावहम्, तथैव कर्मचोदनाबहुले ऽत्र त्वैतरेयादौ ब्राह्मणत्व मपीति। ब्राह्मणग्रन्थानां वेदत्वे विप्रतिपत्तयस्तु सङ्क्षेपतो निरुक्ता-लोचने "को ऽसौ वेदः?"-इति प्रकरणे प्रकाशिता एव। ततो दयानन्दस्वामिना च ऋग्भाष्यभूमिकायां तदेव स्फुट मेवावादि। तत्र हि वेदसञ्ज्ञाविचारोपसंहारे— "ब्रह्मेति ब्राह्मणानां नामा-स्ति। अत्र प्रमाणम्। 'ब्रह्म वै ब्राह्मणः क्षत्रं राजन्यः (श०१३. १.)'-इति, 'समानार्थावेतौ ब्रह्मन्-शब्दो ब्राह्मणशब्दश्च'-इति व्याकरणमहाभाष्ये (५. १. १.)। चतुर्वेदविद्भिर्ब्रह्मभिर्ब्राह्मणै-र्महर्षिभिः प्रोक्तानि यानि वेदव्याख्यानानि तानि ब्राह्मणानि"-इति। इतः पूर्वं मूलमात्रस्यास्यैतरेयस्य सम्पादनभूमिकायां डा०-हग्-महोदयेनापि ब्राह्मणशब्दनिर्वचन मेवमेव सूचितम्। अस्माकन्त्वत्रा-प्यस्ति किञ्चिद् वक्तव्यम्। तद्यथा— न हि "ब्राह्मोऽजातौ"-इति (पा० ६. ४. १७१.) सूत्रे जातिं ब्रह्मन्-शब्दाद् प्रत्ययो ब्राह्मणशब्दः सम्भाव्यते, अतो ब्राह्मणवाचिब्रह्मन्-शब्दादेवं निष्पन्नं ब्राह्मणपदम्, अपि त्वस्मन्मते ब्राह्मणशब्दादेव प्रोक्तार्थेऽणि स्वार्थिकमणि ब्राह्मण मिति।

तदेवं ब्राह्मणेन प्रोक्तं यागविध्यादिबोधकं वचनं ब्राह्मणम्, तादृशवचनानां समूहो ग्रन्थोऽपि ब्राह्मण मेव। वचनपरत्वा-देवास्य ब्राह्मणशब्दस्य क्लीवत्वम्। अथवा यस्त्वैतद् ब्राह्मण-पदं भाष्यपरम्। वेदार्थवित्तमेन ब्राह्मणेन प्रोक्तं यागविध्यनुस्यूतं मन्त्रभाष्य मेव ब्राह्मण मिति। ब्राह्मणस्य वेदत्व सुस्वीकुर्व-तापि सायणाचार्येण स्वकण्ठरवेणैवास्य मन्त्रव्याख्यानरूपत्व-माभाषि। तथाहि तैत्तिरीयसंहिताभाष्यभूमिकायाम्— "ब्रा-ह्मणस्य मन्त्रव्याख्यानरूपत्वात् मन्त्रा एवादौ समाम्नाताः"-इति।

वस्तुतस्तु मन्त्राणां हि ब्राह्मणकालतोऽपि बहुपूर्वकालजत्वात् ब्राह्मणकाले तदर्थप्रत्ययसंशयः सम्भाव्य एवेति ब्राह्मणकाराणां ब्राह्मणानां तदर्थकाशनाय तत्तात्पर्याख्यानाय च प्रवृत्तिः समुत्पन्ना, तत एवेमानि पैङ्गकौषीतकैतरेयादीनि आदिवेद-भाष्याणि सम्पन्नानीति वक्तुं युज्यत एव। तदिदं मत्पाभिनि-वन्धालोचने ( ड—डी ) "वस्तुतः"-इत्यादिना "वेदभाष्यरूपाणि ब्राह्मणानीति"-इत्यन्तेन च ब्राह्मणग्रन्थाना मादिवेदभाष्यरूपत्व मेव सिद्धान्तितम्।

यद्यप्येवं तथापि ब्राह्मणग्रन्थेषु सर्वत्रैव प्रधानतो यागविषय एवोपलभ्यन्ते। तत्र यागेषु यागाङ्गद्रव्यदेवतामन्त्रादिषु प्रवृत्त्या-द्युत्पादनार्थाः स्तुत्यादयः स्तुत्यादिपरा आख्यायिकाश्च बहुत्र आख्याताः श्रूयन्ते। ता एव अर्थवादा अप्युच्यन्ते। तदप्युक्त मापस्तम्बेन— "ब्राह्मणशेषोऽर्थवादः, निन्दा प्रशंसा परकृतिः पुराकल्पश्च"-इति ( ३६, ३७ सू० )। तत्प्रसङ्गतो बहूनां मन्त्राणां मन्त्रांशानां वा प्रायोऽधियज्ञपरव्याख्यानानि, क्वचिदन्यान्य-विधान्यपि समाम्नातानीति सर्वेषा मेव सार्थवादब्राह्मणग्रन्थानां यागविधानार्थत्वेव पर्यवस्यत इति "कर्मचोदना ब्राह्मणानि"-इत्यापस्तम्बकृतं ब्राह्मणलक्षणं सङ्गच्छत एव सर्वत्रेति निरवद्यम्॥

अथोक्त मेवार्थं मिहोदाहरणैः किञ्चिद् बोधयितुं यतामहे। प्रथमं तावदत्र दीक्षणीयेष्टिर्विहिता। सा खल्वग्निष्टोमादि-यागेषु दीक्षणार्था भवति। यागस्त्रिविधः; इष्टि-होत्र-सत्र-भेदात्। तत्रेय मिष्टिः प्रथमविधो यागः। अस्य देवताविधानमत्रैव माम्नातम्— "अग्निर्वै देवाना मवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः"-इत्यादि ( ऐ० ब्रा० १, १, १, )। एतेनास्य

यागस्य अग्निविष्णू हि देवते ऽवगम्येते। ततो द्रव्यविधानन्त्वेव माम्नातम्— "आग्नावैष्णव पुरोडाश निर्वपति दीक्षणीय मेकादशकपालम्"–इत्यादि। इत उत्तर मेतदीयावान्तरवस्तु विधविधानायनन्तर मन्त्रद्वय विहितम्— "अग्निर्मुख प्रथमो देवताना मग्निश्च विष्णो तप उत्तम मह इत्याग्नावैष्णवस्य हविषो याज्यानुवाक्ये भवत"–इत्यादि। अनयोर्मन्त्रयो पूर्वो दीक्षा यागप्रधानहविष पूर्वोक्तस्य तस्य 'पुरोऽनुवाक्या' भवति, उत्तरो याज्येति विवेक। तदेनयो स्पष्टार्थतया, अविवक्षितविशेष तात्पर्यतया वा विशेषतो व्याख्यानतात्पर्ये नोक्ते ऽवैतरेयके, अपि यदेतदुपक्रमे "अग्निर्वै देवाना मवमो विष्णु परमस्तदन्तरेण सर्वा अन्या देवता"–इति देवद्वयश्रुतिराम्नाता, तदेवैतन्मन्त्रद्वयस्य सामान्यतस्तात्पर्यान्वाख्यान सम्भवम्। 'अग्ने' पार्थिवस्यास्याव मत्वम्, पृथिवीस्थत्वात्, एव 'विष्णो' आदित्यस्योत्तमत्वम, द्युस्थत्वात, अन्यासा वाय्वादीना सर्वासा मेव देवताना मेतयो र्द्यावापृथिव्योरेव अन्त स्थत्वात् एतयोर्ग्रहणेनैव ग्रहण मभीष्ट मित्याशय। मन्त्रावेतौ ऋग्यजुषामाथर्वशाखीयसंहितास्विदानी मप्रचलितासु न दृश्येते, कृष्णयजुस्तैत्तिरीयब्राह्मणे तु सूचेते (२ ४ ३ ३, ४), पर तत्रापि सन्ति पाठभेदा। आश्वलायन श्रौतसूत्रेऽपि हि प्रपञ्च विहितावेतावितिः न त्वाश्वलायनशाखीया वयमिवगम्येते, यत एतौ ततोऽप्यन्यशाखीयाविति ध्रुवम्॥

सोमप्रवहणीना मृचान्तु विधान मनु व्याख्यातानि चाम्रा तानि। तद्यथा— "भद्रादभि श्रेय प्रेहीत्यन्वाह, अय वाव लोको भद्रस्तस्मादसावेव लोक श्रेयान्, स्वर्ग मेव त लोक गमयति। बृहस्पति पुर एता ते अस्त्विति, ब्रह्म वै बृहस्पति

वेदव्याख्या एतत् पुरोगव मकर, या वै ब्रह्मखड्गियति। अथैमवस्य वर था पृथिव्या इति, देवयजनं वै वरं पृथिव्यै, देवयजन एवैनं तदवसाययति। आरे अवून् कुरुहि सर्वधीर इति, द्विषन्त मेवास्मै तत् पाप्मानं भ्रातृव्य मधराधतेऽधरं पादयति"–इति प्रथमर्चो विधिश्याख्याने (ऐ० ब्रा० १. ३. २.)। एषापि ऋच-लिताया ऋक्शाखायां नाम्नातेत्यन्यशाखीयैव; तैत्तिरीयसंहितायान्तु श्रूयते १. २. ३. १८॥

ब्राह्मणविषयाणां विशेषतोऽर्थप्रतिपत्तये अन्यदप्यथा चोदाहरामः। श्रूयते हि शुक्लयजुर्वेदस्य माध्यन्दिन्या शाखाया आदिमैषा कण्डिका— "इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे"–इति। शतपथब्राह्मणेऽस्या मन्त्रचयात्मिकात्वं, सोत्रत्व, प्रथममन्त्रस्य पर्णशाखाच्छेदने, द्वितीयस्य तयैव शाखया ताडनेन गवां वत्सानामेकत्रीकरणे, अन्तिमस्य तृतीयस्य तु तयैव तयैव ताडनेन एकस्या गोर्वत्सतः पृथक्करणे विनियोगो विहितो व्याख्यातश्च ते त्रय एव मन्त्राः। तद्यथा— "ता माच्छिनत्ति— 'इषे त्वोर्जे त्वेति। इष्यै तदाह, यदाहेषे त्वोर्जे त्वेति; यो वृष्टादूर्ग्रसो जायते तस्मै तदाह। अथ मातृभिर्वत्सान्त्समवार्जन्ति, स वत्सं शाखयोपस्पृशति— 'वायव स्थे'ति। अयं वै वायुर्योऽयं पवते; एष वा इदं सर्वं प्रप्याययति यदिदं किञ्च; वर्षन्नेव वा एतासां प्रप्याययिता; तस्मादाह वायव स्थे'ति। •—• अथ मातृणामेकां शाखयोपस्पृशति यत्नेन व्याकृत्य— 'देवो वः सविता प्रार्पयत्विति। सविता वै देवानां प्रसविता, सवितृप्रसूता यज्ञं सम्भरानिति; तस्मादाह देवो वः सविता प्रार्पयत्विति। 'श्रेष्ठतमाय कर्मण

इति। यज्ञो वै श्रेष्ठतमं कर्म, यज्ञाय हि तस्मादाह श्रेष्ठतमाय कर्मण इति"–इति माध्य॰ शत॰ ब्रा॰ १. ५. ४. १–५।

तदेव मया मन्त्रत्रयात्मिकाया: शुक्लयजु:प्रथमकण्डिकाया: सविनियोग एषोऽर्थ: सम्पन्न:—

(१) 'इषे त्वा, ऊर्जे त्वा' इत्थं त्वा; किल्लामीति शेष:।

(२) 'वायव: स्थ' पवमाना:, वर्षणेन प्यायमाना: यूयं स्थ; युष्मान् सममसृजन् शाखयोपस्पृशामीति शेष:।

(३) 'सविता' देवानां प्रसविता 'देव:', 'व:' युष्मान्, यज्ञं सम्भरान्, पवमानान् 'श्रेष्ठतमाय कर्मणे' यज्ञाय 'प्रार्पयतु'; सवितृप्रसूता वय मिदं याचामह इति शेष:।

नून मेषोऽर्थोऽधियज्ञ:, पर मेतेनैव पदव्याख्यानेनाधिदैवतोऽर्थोऽपि सम्पद्यत एव। तद्यथा— "अयं वै वायुर्योऽयं पवते"। 'य: अयं पवते' सदैव पवमानो विद्यते, स एव 'अयं' त्वगिन्द्रियप्रत्यक्ष:, अत एव विषहादिशून्यो भौतिको 'वायु:'। "एष वै इदं सर्वं प्याययति यदिदं किञ्च"। 'यत् इदं किञ्च' स्थावरजङ्गमात्मकं जगत्, तत् 'इदं सर्वं' 'एष: वै' वायुरेव 'प्याययति' प्रकर्षेण वर्द्धयति। "एष वै वर्षति" वायुरेव वृष्टिधारा: सर्वा: मेघतश्चालयन् पृथिव्यां संवाह्योपप्याययति। अत एव "एतासाम्" पार्थिवीनां सर्वां "प्याययिता" वर्द्धयिता भवति। तत एवम्भूतं 'त्वा' त्वां वायुं "इत्थं" जानामि। "इष्टात् ऊर्क्—रस: जायते"। "तस्मै" ऊर्ज्जे– रसाय, तत एवान्न मुत्पद्यत इति 'इषे' अन्नाय च 'त्वा' त्वां जानामि। "देवानां" सर्वेषां मध्ये दीप्ता "प्रसविता" सूर्य: ईश्वरो वा 'व:' "यज्ञं सम्भरान्" प्राणनहेतून् युष्मान् 'श्रेष्ठतमाय कर्मणे' "यज्ञाय" प्राणनकार्य-

निर्गोदार्थं 'प्रापयत्' सदैव प्रापयत्येव, वय मपि "सवित्-प्रसूताः" एव, अस्मानिति शेषः ॥ एतेन वायोः प्रत्यक्षत्वम्, वर्षहेतुत्वम्, वृष्टिद्वारा चान्नहेतुत्वम्, तत आप्यायनहेतुत्वम्; सूर्यप्रसूतत्वम्, प्राणनरूपश्रेष्ठकर्मकारित्वञ्चेत्याख्यातं वायुविज्ञानम्। प्रधानतो वायुविज्ञानार्थं एव चाम्नातो यजुर्वेदः। अतएवैतदुक्तम्— "अग्नि-वायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्"—इत्येवमादिक मिति ॥

श्रूयते चात्र पर्णशाखयैव वत्सापाकरणकर्मविधानार्थां क्षुद्र-तमैकाख्यायिका। तद्यथा— "यत्र वै गायत्री सोम मच्छापतत्, तदस्या आहरन्त्या अपादस्ताभ्यायत्य पर्णं प्रचिच्छेद। गायत्र्यै वा सोमस्य वा राज्ञस्तत् पतित्वा पर्णोऽभवत्। तस्मात् पर्णो नाम। तद्यदेवात्र सोमस्य न्यक्तं तदिहाप्यसदिति। तस्मात् पर्णशाखया वत्सानपाकरोति"-इति (शत० ब्रा० १. ५. ४.)।

तस्यार्थ— 'यत्र' यस्मिन् काले हि 'गन्धर्वनगरे' हिमालयस्य कस्मिंश्चित् सुरम्यशिखरे 'सोमं' सोमवल्लीमृचम् 'अच्छ' आप्तं 'गायत्री' काचिद् गायिका 'अपतत्' गतवती; 'तत्' तदेव 'आहरन्त्याः' सोमवल्लीहरणं कुर्वन्त्याः 'अस्याः' 'अपादस्ताभ्यायत्य' 'अपस्ता'=अवस्तात्+अधस्तात् 'अपायत्य' वियुज्य स्थितं 'पर्णं' पर्णाकार मेव पर्णबीजं 'चिच्छेद', सा गायत्रीति शेषः। 'गायत्र्यै' गायत्र्याः तस्याः 'वा' अथवा 'सोमस्य' राज्ञः' चन्द्रमसस्त्व मागतं 'तत्' छिन्नं पर्णं 'पतित्वा' भूमिं गत्वा 'पर्णः' पर्णापरपर्यायः पलाशो वृक्षः 'अभवत्'। यतः पर्णात एवास्योत्पत्तिः, अस्मात् 'पर्णो नाम पर्णं इत्येवैष वृक्षः प्रसिद्धः। 'तत्' तस्मात् 'अत्र' 'सोमस्य' मारम्भते इवै 'यदेव' 'न्यक्तं' वीर्यम्, 'तत्' इहापि पलाशवृक्षेऽपि 'असत्' अस्तीति।

एतदाख्यायिकातः पञ्च पर्णविज्ञानानि प्रतीतानि भवन्ति। पुरा त्रापीठिहार्यनगरीषु पलाशद्रुचो हिमवतः पृष्ठादिहानीत इति प्रथमम्। बहुषु पलाशारण्येषु च प्राप्यते सोम इति द्वितीयम्। पलाशस्य फलानि न जायन्ते, यदि पलाकाराण्येव तद्बीजानि भवन्तीत्यपि पत्रत एवास्योत्पत्तिर्भवतीति तृतीयम्। अत एव पत्रपर्यायशब्दाभिधेयः स पर्ण इति वा पलाश इति वाख्यायत इति चतुर्थम्। एतद्रसस्यापि सोमरसतुल्य-बलकारित्व मिति पञ्चमम्॥ गन्धर्वाणां गानप्रियत्वं स्त्रीकामत्वं च संलक्ष्य, तत्र गन्धर्वनगरे सोमानयनाय गायत्रिकायाः प्रेरणं चात्रैव शतपथेऽन्यत्र च श्रुतम् (३का, २प्र, २क.)' तत्सर्वं तत्रैव द्रष्टव्य मिति॥

अथ दर्शयामः कश्चिदिह सूक्ते विधातव्येऽप्याख्यायिकास्तीति। तद्यथा— "तार्क्ष्यं स्वर्गकामस्य रोहेत्"–इति (ऐ॰ ब्रा॰४।३.३. ६.)। तार्क्ष्यदेवताकं ऋचं सूक्तं तार्क्ष्यम् (ऋ॰ मं॰ १०. १७८. १–३), तस्मिन् 'तार्क्ष्ये' सूक्ते; तेन सूक्तशंसनेनेति भाव। 'स्वर्गकामस्य' यजमानस्य, प्रसङ्गागतं 'दूरोहणं' स्वर्गं 'रोहेत्', रोहण मारोहणं तत् सम्पादयेत्; शंसनकर्त्ता ऋत्विगिति शेष। इम मेव विधिं प्रस्तौत्‌ माम्नातैषा स्वाख्यायिका— "तार्क्ष्यो ह वा एतं पूर्वोऽध्वान मैत्, यदादो गायत्री सुपर्णी भूत्वा सोम माहरत्; तदथा चैवात्र मध्वनः पुर एतारं कुर्वीत, तादृक् तत्"–इति। 'तार्क्ष्यः' तन्नामा कश्चित् 'वै' एव 'पूर्वः' अग्रगामी सन् 'एत मध्वानं' पर्यन्तमार्गम् 'ऐत्' आगमत्, दर्शयवितेति यावत्। कदा किमर्थ मित्याह— 'यत्' यत्काले 'अदः' द्युलोकं सम्प्रम्। किमित्युच्यते— 'गायत्री' देवगणप्रेरिता, गानेन गन्धर्वान् मोहयित्वा सोमानयने प्रवृत्ता,

काचिद् गायिका नारी!, 'सुपर्णः' पक्षी, तद्वत् ( लुप्तोपमान मिदं पदम् ), स यथा तीक्ष्णदृष्टिर्द्रुतगामी स्थिरलक्ष्य सन् स्वलक्ष्ये उत्पतिष्णुर्भवति, तथा 'भूत्वा', 'सोमम्' 'आहरत्' आहृतवती, 'तत्' तदानीं 'यथा' 'अध्वनः क्षेत्रज्ञः' मार्गविशेषाभिज्ञः तद्देशवासिनं कञ्चिज्जनं 'पुर एतारं' पथप्रदर्शनायाग्रगामिनं 'कुर्वीत', 'तादृक्' 'तत्' तार्क्ष्यशंसनं, दूरोहणारोहणाय भवतीति शेषः। कथासौ तत्र तादृगविजनप्रदेशे पुरयस्तार्क्ष्यं इत्याह— "अयं वै तार्क्ष्यो योऽयं पवते"—इति। 'तार्क्ष्यः' खलु 'अयं' प्रत्यक्षगम्यः। कः ? 'योऽयं पवते' त्वाचप्रत्यक्षो यः सदैव सर्वत्र प्रवहति। एवञ्च वायोरेव नामान्तरं तार्क्ष्य इत्युक्तं सम्पन्नम्। स एव वायुरेव तत्र गायत्र्याः पथप्रदर्शको बभूवेति। तत्पथप्रदर्शकत्वञ्च वायोर्गन्धवहत्वेनोपपद्यत एव; यस्या एव दिशः सोमगन्ध आयातीति समनुभूय तत्प्रदेशं गतवती सेति भावः। एतेनापि किञ्चिद् वायुविज्ञान मावेदितम्, विशेषमोऽभिज्ञानाय च ततः श्रुतम्— "एष स्वर्गस्य लोकस्याभिवोढा"—इति। 'एषः' तार्क्ष्यापरपर्यायो वायुः 'स्वर्गस्य लोकस्य अभिवोढा' मृतानां सुकृतीनां जन्तूना मातिवाहिकान् देहान् स्वर्गं लोकम् अभिवहति। किञ्च स्वरित्यादित्यपर्यायशब्दो निघण्टौ (१. ४. १.) पठितः, व्याख्यातश्च तथा निरुक्तेऽपि (२. ४. २.), स चात्र तद्रश्मिपरः; ततश्चादित्यरश्मीना मिह पृथिव्या अभिवाहकत्वेन चास्य तार्क्ष्यस्य सम्पद्यते स्वर्गलोकवोढृत्वम्। तदेव मिह सूर्यरश्मीनां वाहक एषः, अमुत्रातिवाहिकसूक्ष्मदेहवाहकश्चैव एव; तदिदं महाविज्ञानदयशेषदाख्यायिकयोपदिष्ट मिति ध्येयम्॥

एवमादिष्व आख्यायिकास्वो बहव उपदेशाय अभ्यस्ते; ततः

एता एवाख्यानभूता बह्वयः कथा अनतिप्राचीनपुराणेषु तथाविधेतिहासादिषु च स्वल्पमतीनां स्त्रीशूद्रद्विजबन्धूनां धर्मोपदेशाय कल्पिता भगवता व्यासेन, तदनुगामिभिरन्यैश्च क्रमादद्यतनैरपि। अत एवोक्तं महाभारतोपक्रमे— "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्"-इति ( १. १. २६७. )। वस्तुतस्तु सर्वपुराणेतिहासमूलीभूतो वैदिकाख्यायिकोक्तो वृत्तान्तभागस्तु सर्व एवोपमानादिमूलकः परिकल्पितोऽसत्य इत्येव सिद्धान्तितं मीमांसादर्शने। तथाहि "गुणवादस्तु"-इतिसूत्रव्याख्यानावसरेऽभाष्येवं स्फुटं श्रीमदाचार्येण शबरस्वामिना— "असद्वृत्तान्तान्वाख्यानम्; स्तुत्यर्थेन प्रशंसाया गम्यमानत्वात्। वृत्तान्वाख्याने वर्त्तमाने द्वयं निष्पद्यते,— यच्च वृत्तान्तज्ञानम्, यच्च कस्मिंश्चित् प्ररोचना द्वेषो वा। तत्र वृत्तान्तान्वाख्यानं न प्रवर्त्तकं न निवर्त्तकञ्चेति प्रयोजनाभावादनर्थक मित्यविवक्षितम्; प्ररोचनया तु प्रवर्त्तते द्वेषान्निवर्त्तत इति तयोर्विवक्षा"-इति ( १. २. १० सू० )। प्रदर्शितानि चैतदुदाहरणानि बहूनि तत्रैव किञ्चिदुत्तरम्; तत्रैकमिदं "सः ( प्रजापतिः ) आत्मनो वपा मुदक्खिदत् ( तै० सं० २. १. १. )"-इत्याद्याख्यायिकायाः प्रकृताभिप्रायव्याख्यानपरम्— "कथमनुनरिदं निरालम्बन मन्वाख्यायते ? इति। उच्यते। नित्यः कश्चिदर्थः प्रजापतिः स्यात्— वायुः, आकाशः, आदित्यो वा। 'स आत्मनो वपा मुदक्खिदत्'-इति— वृष्टिं, वायुं, रश्मिं वा। 'ता मग्नौ प्रागृह्णात्'-इति— वैद्युते, आर्चिषे, लौकिके वा। 'ततोऽजः' -इति—अन्नं, बीजं, वीरुधः। 'स मालभ्य ( स मुपजीव्य ) प्रजाः पशूनाप्नोति'-इति गौणाः शब्दाः"-इति। तदेवं छिन्नेषु मूलेषु कुतो न पतेयु र्योगाधिकेतिहासाद्भुतकथाः सर्वा वातेन कदली-

वनानि यथेति, को वा विश्वसिति वालोपदेशाय विष्णुशर्मादिभिर्निर्मिता काकोलूकसंवादादिकथा यथालोऽपीति सुधीभिरेवाकलनीय मिद मिति। पौराणिकसूर्यचन्द्रभूस्थित्यादिविज्ञानानि तु सर्वाण्येव वेदविद्वदान्येवेति वेद्यं वेदविद्भि. स्वत एव स्फुटम्।

तदेवं ब्राह्मणग्रन्थेषु यागा विहिता., तत्सिध्यर्थां द्रव्यदेवता मन्त्राश्च विहिता, तत्र सर्वत्र प्रवृत्त्यर्थाः किञ्चिद्विज्ञानाद्युपदेशका अपि गौणमूला: कल्पनासम्भूता आख्यायिकाश्च बह्वच आम्नाताः, तत्तन्मन्त्राणां तत्तद्यागाद्युपयोगित्वं वर्णयितु समासतस्तात्पर्यमन्वाख्यातुं वा व्याख्यानानि च कृतानि। तत्र विध्यर्थवादाख्यानपूर्वकमादिम मन्त्रभाग्य ब्राह्मण मित्येव पर्यवस्यते ब्राह्मणलक्षणम्। अस्ति चात्र यन्थे तल्लक्षणं समन्तादितीद मपि ब्राह्मणम्, नाम्ना चैतदैतरेयक मिति सिद्धम्॥

---

( २ )

अथातो विचार्य मस्ति कोऽस्य प्रवक्तेति ? महिदास इति विश्रुत। तथा ह्यारण्यकम्— "एतद्ध स्म वै तद् विद्वानाह महिदास ऐतरेय."—इति ( ऐ० आ० १. ८. २. )। छन्दोगब्राह्मणेऽप्येव मेव ( ५. १६. ७. )। तत्र "महिदासो नामत., इतराया अपत्य मैतरेयः"—इति शाङ्कर भाष्यम्। अप्यस्य भाष्यभूमिकायामालेखि सायणेनैवम्— "प्रकृतस्य तु ब्राह्मणस्यैतरेयकत्वे सम्प्रदायविद एता माख्यायिका माचक्षते। 'कस्य चित् खलु महर्षेः बह्व्यः पत्न्यो विद्यन्ते स्म। तासां मध्ये कस्याश्चिदितरेति नामधेयम्। तस्या इतरायाः पुत्रो महिदासाख्य. कुमारः। तदीयस्य तु पितुर्भार्या

न्तरपुत्रेष्वेव स्नेहातिशयो न तु महिदासे। ततः कस्याञ्चिद् यज्ञसभायां स महिदास मवज्ञायान्यान् पुत्रान् स्वोत्सङ्गे स्थापयामास। तदानीं खिन्नवदनं महिदास मवगत्येतराख्या तन्माता स्वकीयकुलदेवतां भूमि मभिसस्मार। सा च भूमिदेवता दिव्य मूर्त्तिधरा सती यज्ञसभायां समागत्य महिदासाय दिव्यं सिंहासनं दत्त्वा तत्रैनं सुपवेश्य सर्वेष्वपि कुमारेषु पाण्डित्याधिक्य मवगमयितुं ब्राह्मणप्रतिभासनरूपं वरं ददौ। तदनुग्रहात् तस्य महिदासस्य मनसि 'अग्निर्वै देवाना मवमः (ऐ० ब्रा० १. १. १.)' -इत्यादिकं 'स्तृणुते (ऐ० ब्रा० ८. ५. ५.)'-इत्यन्तं चत्वारिंशदध्यायोपेतं ब्राह्मणं प्रादुरभूत्। तत ऊर्द्धम् 'अथ महाव्रतम् (ऐ० आ० १. १ १)'-इत्यादिकम् 'आचार्याः (ऐ० आ० २. ६. ८.)'-इत्यन्त मारण्यकव्रतरूपं च ब्राह्मण माविरभूत्' -इति"-इति। तथा चेतराशब्दात् "शुभ्रादिभ्यश्च (पा० ४. १. १२३.)"-इत्यपत्यार्थे ठकि सम्पाद्य मिदं रूप मैतरेय इति॥

अत्र केचिदनुमीयते, सोऽयं मैतरेयः स्याद् दासीपुत्रः ? अस्ति हि ब्राह्मणस्य ब्राह्मण क्षत्रिय वैश्येतित्रिविधार्य्याणां तदितरस्य शूद्रस्यानार्यस्य च कन्यापरिणयेऽधिकारः, तथा क्षत्रियस्यापि क्षत्रिय वैश्येतिद्विविधयोरार्ययो' स्तदितरस्य शूद्रस्य चानार्यस्य कन्याग्रहणेऽधिकार'; एवं वैश्यस्यापि स्वजातीयाया आर्यायास्तदितरस्या अनार्यायाश्च कन्या विवहनेऽधिकार'। तत्र सर्वेषा मेवार्यवर्णानां प्रथमं स्वजातीयापाणिपीडन मेव विहितम्। किन्त्वार्यकन्याना मेवोद्वहने यथाविधि वैदिकमन्त्रादीनां व्यवहार मनुचित, तत एव हि तेषां पत्नीत्वम्, अत एवोक्तं भगवता महामुनिना पाणिनिनापि "पत्युर्नो यज्ञसंयोगे"-इति (४ १. ३३.),

भूतरस्यास्त्वमन्त्रक ग्रहणमात्रम्, अपि भरणीयत्वहेतुकं भार्यात्व मिति विवेक.॥ एतच्च सर्वं भृगुप्रोक्तमनुसंहितादौ सुव्यक्तं विहितम्। तथाहि—

"सवर्णाग्रे द्विजातीना प्रशस्ता दारकर्मणि।

कामतस्तु प्रवृत्ताना मिमाः स्युः क्रमशो वराः॥

शूद्रैव भार्या शूद्रस्य सा च स्वा च विश. स्मृता।

ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मन."–इति (३.)।

तथैवान्यत्र— "विप्रस्य त्रिषु वर्णेषु, नृपतेर्वर्णयोर्द्वयो'।

वैश्यस्य वर्णे चैकस्मिन्, षडेतेऽपसदाः स्मृताः"–इति (१०.)।

"वर्णत्रयाणा मेते षट् पुत्रा. सवर्णापुत्रकार्यापेक्षया 'अपसदाः' निकृष्टा."–इति तत्र कुल्लूकः। एषा मपसदत्वेऽपि द्विजत्वं न व्याहतम्। तच्च तत्रैव— (१०, ४१.)

"सजातिजानन्तरजाः षट् सुता द्विजधर्मिणः"–इति।

"षट् पुत्राः द्विजधर्मिण. उपनेया"–इति च तत्र कुल्लूकः। पुनस्तत्रैव— "यस्मात् बीजप्रभावेण तिर्यग्जा ऋषयोऽभवन्।

पूजिताश्च प्रशस्ताश्च तस्माद् बीजं प्रशस्यते"–इति (१०.७२.)।

यदुक्तं "न ब्राह्मणक्षत्रिययो: ०—० शूद्रा भार्योपदिश्यते"– इत्यादिषट्श्लोक्या, तत्तून मपरिणीतासवर्णापरम्; सवर्णाग्रे द्विजातीना मिति श्लोकेऽप्यपदस्वारस्यात्, कुल्लूकभट्टेन तत्र तथैव व्याख्यातत्वाच्च; न ह्यन्यथा पूर्वापरग्रन्थविरोधः स्यात् परिहार्यः। अत एव धीवरीगर्भजस्य वेदव्यासस्य विप्रत्व मुपपद्यते, एवं "नार्यै चित्वा रामा मुपेयात्"–इति (तै॰ सं॰ ५. ३. ८. ६.) निषेधश्रुतिश्च सङ्गच्छते। तैत्तिरीयारण्यकेऽपि "संवत्सरं न मास मश्नीयात्, न रामा मुपेयात्, न मृन्मयेन पिबेत्, नास्य राम उच्छिष्टं पिबेत्, तेज एव

तत् सस्यति'–इति (५ ८ ४६) श्रुतम्। एवमादौ 'रामा'–शब्द शूद्रापर, तथैव व्याख्यातत्वात। विशेषतोऽत्र नैरुक्ता द्रष्टव्यम। तथाहि—"रामा रमणायोपेयते, न धर्माय, कृष्णजातीया'–इति (१२ २ २)। "रामा इति शूद्रोच्यते"–इत्यादिस्तदीया दौर्गी वृत्तिरेव द्रष्टव्या। तदेवं सवर्णाया पाणिपीडनानन्तर मसवर्णाना ग्रहणे न कोऽपि दोष इति सिद्धान्त। अत एव "इन्द्रस्य प्रिया जाया वावाता प्रासहा नाम"–इत्यैतरेयश्रुतेर्व्याख्यानावसरे सायण आह—"राज्ञा हि त्रिविधा स्त्रिय। तत्रोत्तमजातेर्महिषीति नाम, मध्यमजातेर्वावातेति, अधमजाते परिवृक्तिरिति"–इति (३ २ ११)। श्रुतावैतास्तैत्तिरीयेऽप्यश्वमेधप्रकरणे (ब्रा० ३ ८ ४ ५)। शतपथे तु "चतस्रो जाया उपक्लृप्ता भवन्ति, —महिषी, वावाता, परिवृक्ता, पालागली'–इति (१३ ५ १ ८) स्त्रीचातुर्विध्य श्रुतम॥

तदेवं मितप्राज्ञपाणप्रवक्तुरैतरेयनामव्युत्पत्तिस्त एवैतरागर्भसम्भूतत्वसिद्धे सायणाचार्योक्तप्रवादप्रथितयन्नमभाप्रतिपत्तिहेतुरनुमानतश्च सिध्यत्येव दासीपुत्रत्वम्। तत एव महिदास इति दासान्त मभिधान मपि विश्रुतम्, तथा विद्वानित्येव विशेषणम्, न तु ऋषिरित्याचार्य इति वेति।

नन्वेव मार्याणा मार्यत्वप्रतिपादकाना मादिधर्माणा यागादीना विधायकस्यैतस्य ब्राह्मणग्रन्थस्य प्रवचनकर्तृत्व कथ मनार्ये तत्र दासीपुत्रे सम्भवेदामेति चेत्, अत्र ब्रूम। यागादिविधायक-ब्राह्मणग्रन्थस्य प्रोक्तृत्व तु कि तुच्छम्, मन्त्रद्रष्टृत्व मपि श्रूयते दासीपुत्रस्यापीति। तद्यथा श्रुत तावत्तत्रैव कवषैलूषोपाख्या नम्—'ऋषयो वै सरस्वत्या सत्र मासत। ते कवष मैलूष

, सोमादनयन्, दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्ये दीक्षिष्टेति। तं बहिर्धन्वोदवहन्नत्रैनं पिपासा हन्तु सरस्वत्या उदकं मा पादिति। स बहिर्धन्वोदूढः पिपासया वित्त एतदपोनप्त्रीय मपश्यत्"—इत्यादि (२. ३. १.)। तदपोनप्त्रीयं सूक्तन्तु दाशतय्यां दशमे विंशं द्रष्टव्यम्॥

तत्त्वतस्तु पुरा खल्वार्यावर्त्ते ये नगरवासिनः सभ्यास्तेषा मार्यत्वम्, ये त्विहावीतरागा अप्यरण्याश्रिता गिरिकन्दरादिवासिनो ऽसभ्यास्तेषा मनार्यत्व मित्येव जातिद्वयं पार्थक्येन वर्णनीय मासी-ज्जन्मस्थानव्यवहारादिभेदतः। तथा ह्याथर्वणिकाः किल तज्जातिद्वय मवलम्ब्यैवैव माम्नायन्ते (१८. १. ८. १.)—

"प्रियं मा कृणु देवेषु, प्रियं राजसु मा कृणु।

प्रियं सर्वस्य पश्यत,— उत शूद्र उतार्ये"-इति।

अहो प्रशस्योऽयं तदानीन्तन. सार्वजनीनप्रीतिभाव। तदेवं तदानीं यथा ज्ञानालोचन-बलरक्षण-पशुनव्यवहारहेतुभिरार्याणा ब्राह्मणादिजातिभेदाः प्रचलिताः, तथैवानार्याणा मपि आर्यानुगतत्वाननुगतत्वभेदात् द्वैविध्यं सम्पन्नम्। ये त्वनार्या अप्यार्याणा मानुगत्य मालम्बिरे, त एव दासाः; तद्विपरीतास्तु दस्यव इति व्यपदिष्टाः। त एव च दासाः शूद्रा इति, दस्यवस्तु म्लेच्छा इति चाख्याताः। इत्थं मिह पञ्च जातयो निष्पन्नाः। एताश्च पञ्च जातयो मनुष्याणा मेवेति मनुष्यशब्दपर्यायत्व मासां पञ्चजन इति। तदेव मेषु पञ्चजनेषु कर्मादिभेदत एव ब्राह्मणः, क्षत्रियः, वैश्य इति त्रय आर्याः; दासो दस्युश्चेति द्वावनार्याविति स्थितम्॥

अथ यद्यपि जातिर्जन्मेति पर्यायशब्दाविति जन्मानुसारिण्येव जातिरित्येव सर्वसम्मतम्, सम्प्रति तदन्यथाकरणे जात्यु-

च्छेदप्रसङ्ग स्यादिति सत्यम् । तथापि कर्मतो जात्यन्तरतापि नाम त्वम् । तदाहापस्तम्ब —"धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ"-इति, "अधर्मचर्यया पूर्वो वर्णो जघन्य जघन्य वर्ण मापद्यते जातिपरिवृत्तौ"-इति च (२. ५ १०, ११)।

मनुरप्याह— "शूद्रो ब्राह्मणता मेति ब्राह्मणश्चेति शूद्रताम् । क्षत्रियाज्जात मेवन्तु विद्याद् वैश्यात्तथैव च"-इति १०. ६५ ।

"जातो नार्या मनार्यायां मार्यादार्यो भवेद् गुणैः"

-इति ( १०. ६६. ) च मनूक्त मिह स्मर्त्तव्यम् ॥

न च व्यवहारादिभिश्च जातिपरिवर्त्तनं मदृष्टचरं वक्तव्यम् । तत्रानार्यस्याप्यार्यत्वलाभोऽभवदपीनप्त्रीयसूक्तदर्शनसामर्थ्यादिति तु इदानी मेव प्रदर्शितम, आर्यस्याप्यनार्यत्वलाभोऽपि समाम्नात इहैवैतरेयके । तथाहि—"तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसु, पञ्चाशदेव ज्यायांसो मधुच्छन्दस , पञ्चाशत कनीयास , तद् ये ज्यायासो न ते कुशल मेनिरे , ताननु व्याजहारान्तान् वः प्रजा भक्षीष्टेति । त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्ति वैश्वामित्रा दस्यूनां भूयिष्ठा "-इति (७ ३. ६ )।

विश्वामित्रस्यास्य जन्मतः क्षत्रियत्वम्, वसिष्ठस्यधेनुप्रार्थनम्, तदलाभात् तच्छतपुत्रनाशनम्, ततस्तप प्रभावाद् ब्राह्मणत्वलाभ इति पौराणिकी कथापि स्यादत्रोपयोगित्वेनादरणीया, किन्तु सा नून मामूलकल्पितैव,—न स महर्षि कदाप्यासीदब्राह्मण, नापि कदापि तेन वसिष्ठस्यापि धेनुप्रार्थनं कृतम्, न च तच्छतपुत्रनाशस्तथा विधस्य महर्षे कथं मपि युज्यते, नैव स तप प्रभावाद्ब्राह्मणत्व मापेति सर्व मेवैद् मसङ्गत मनृत वच पौराणिकानाम्, वेदमूलकत्वाभावा दृशतो वेदविरुद्धत्वाच्चेति वेदानुगामिना सुविदित मेवेति दिक् ॥

प्रकृते तु यथाद्य प्रतीच्योदीच्यापाच्यभारतीयानां भारतमस्मात् सैनिकेषु लब्धप्रवेशत्वेऽपि प्राच्येषु वङ्गदेशीयानां योग्यबलाद्यभावत एव नास्ति प्रवेशाधिकारः, अस्ति तु व्याघ्रकिरिङ्गीति वङ्गप्रसिद्धानां युरेशीयानाम्; तथैवामिश्रितार्यशोणितानां मनार्याणां बुद्धिमान्द्यादितोऽनुपयुक्ततयैवास्मच्छास्त्रेषु वेदग्रहणायोपनयनविधेरभावोऽनुभव एव, विमिश्रार्यशोणितानां तु वेदव्यासप्रद्युम्नानां वेदग्रहणायोपनयनं केन वारित मिति स्फुटम्। मनुरप्याह— "बीज मेके प्रशंसन्ति क्षेत्र मन्ये मनीषिणः"–इत्यादि (१०. ७०.)। "जातो नार्या मनार्यायां मार्यादार्यो भवेद् गुणैः"–इति च (१०. ६७) गुणपक्षपातस्त्वेव। शूद्रस्य वेदाधिकारे साक्षात् वेदवचन मपि प्रदर्शितं स्वामिदयानन्देन (वा० सं० २६. २.)—

"यथेमां वाचं कल्याणी मावदानि जनेभ्य।

ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय"–इति।

तदेवं वेदविधेः पक्षपातदोषभाक्त्वं न कथ मपीति स्पष्टम्; स्पष्टश्च दासानां मनुपयुक्तमतीनां मन्वादिकर्तृकं वेदानधिकारित्वविधान मनुग्रहार्थं मेवेति।

वेदाधिकारित्वानधिकारित्वप्रसङ्गादिहान्यदपि किञ्चिद् वक्तव्य मस्ति, तद्यथा— भारतवर्षीयाणां मस्माकं शास्त्रग्रन्थेषु यावन्तो विधिनिषेधा विहिताः, यानि च वर्णाश्रमधर्मशासनानि श्रुतानि स्मृतानि च, तैः खल्विमे वयं भारतवर्षीया एव शास्याः, न त्वन्यदेशीयाः; अत एवोक्तं मनुना— "अस्मिन् धर्मोऽखिलेनोक्तो गुणदोषौ च कर्मणाम्। चतुर्णा मपि वर्णानां माचारश्चैव शाश्वतः"–इति (१. १०७.)। एवञ्चास्मच्छास्त्रकृता ब्राह्मणादिजातिसञ्ज्ञा त्वस्माक मेव; भारताद्बहिस्तु ब्राह्मणाद्यन्यतमो वर्णः शूद्रश्चेच्छाय

नैव सन्तीति तवत्याना ब्राह्मणादिजातिमत्त्वेनायत्त शूद्रम्लेच्छत्वे नामार्यत्व वा न किमपि सङ्गच्छतेऽस्मच्छास्त्रानुसारत । तदेव मिङ्गलण्डादिदेशाना म्लेच्छदेशत्वम , तत्तद्देशीयाना म्लेच्छत्वञ्च न कथ मपि सङ्गच्छत इति प्रणिधानेनालोच्यम। म्लेच्छदेशा खिलात्र भारते विद्यन्त एव, म्लेच्छा अपि भारतीयेष्वेव बोध्यम , म्लेच्छा चारायाश्चच्छास्त्रविमुखाना मार्याणा मनार्याणाञ्च भारतीयाना मेव, न त्वन्यदेशीयानाम , तत्तद्ग्रंथास्तेषु म्लेच्छास्तेषु विधानो पदेशाभावात् । सन्ति च्चात्र चिरादेव म्लेच्छा , म्लेच्छदेशा , यस्मेच्छाना म्लेच्छशाकप्रयोगादिम्लेच्छाचारनिषेधाय । शतपथ ब्राह्मणे लसक्षदेव श्रुतौ म्लेच्छशब्द ( ३ २ १ २३, २४ ), पाणिनेर्धातुपाठेऽस्ति म्लेच्छ धातु (भ्वा० प० २०५ ) , गणपाठे पृच्छादौ तच्छब्दपाठ (६ १ १६० ) कात्यायनस्य व्याकरणाध्ययनप्रयोजनाव्याख्यावसरे शतपथब्राह्मणमूलक म्लेच्छा ह वा मा भूम -इति कथनम्, पतञ्जलि पस्पशाया तद्व्याख्यानम्, मीमांसा दर्शने चायम्लेच्छाधिकरणम् (१ ३ ६), मनौ म्लेच्छदेशलक्षणम् ( २ २३ ) म्लेच्छभाषादिकविशेषश्च ( ० १४८ , १० ४५ , १२ ४३ ), महाभारते चादिपर्वणि पाण्डवाना वारणावतगमनप्रक्रमे ( १४५ अ० ) युधिष्ठिर प्रति विदुरस्य म्लेच्छभाषया गूढोपदेश दानचेतत् सर्व तविदजन मिति ।

तदित्थ महिदासस्य शूद्रागर्भजातत्वेऽपि ब्राह्मणत्वमप्रवचन शक्तिमत्त्वेन ब्राह्मणत्व स्यात् सञ्जात कि तत्र चित्र मित्यवेबोध्य मामहे वय मिति ॥

एष ह्रि महिदासात्भूद् दीर्घजीवी तच्छूयत छान्दोग्यब्राह्मणे-म ह पाडश वपशत मजीवत् इति (५ १६ ७ । षोडश

धिकशतवर्षकालव्याप्ति जीवन मेव मनुष्याणां पूर्ण मायु । अतएव तत्रैव तत: प्राणिमात्रपि वचनान्याम्नातानि— "चतुर्विंशतिवर्षाणि प्रातस्सवनम्" प्रथमं वय., बाल्य मिति यावत् । तत "चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनम्" मध्यं वय:, यौवन मिति यावत् । तत उत्तरम् "अष्टाचत्वारिंशद्वर्षाणि तृतीयसवनम्" चरमं वय:, वार्द्धक्य मिति यावत । एवं सङ्कलनया "प्र ह षोडशं वर्षशतं जीवति" ११६ आयु पूर्णं सम्पद्यत इत्यर्थ: । न चैवं "शतायुर्वै पुरुष."–इति ( ऐ० ब्रा० २. २. ७. )–श्रुतिर्विरुध्येत ; द्विशतायुर्जीविन: पुरुषस्य वेदे लोके चादर्शनात् । अतएव शतपथे पूर्णायुर्मन्त्रव्याख्यानावसरे प्रोक्तम्— "शत हिमा: ( य० वा० सं० २. २७. )–इति, शतं वर्षाणि जीव्यास मित्येवैतदाह । तदप्येतद् भूयवाद्रियेत ! अपि हि भूयासि शताद् वर्षेभ्य: पुरुषो जीवति"–इति १. ८. ३. १८ । एतेनावगम्यते शताद् वर्षेभ्य किञ्चिदधिक मपि तत्रैव गण्यत इति । एव मपि "दशवर्षसहस्राणि दशवर्षशतानि च । रामो राज्य मुपासित्वा ब्रह्मलोकं प्रयास्यति"–इति महाकविवाल्मीकयुक्तं ( रा० १. १. ८१. ) अलकाक्षतरुफलं न कदापि भवेमन्तव्यम् ; वेदविरोधादिति स्पष्टम् ॥

अनेनैव महिदासेन आरण्यकग्रन्थोऽप्येक. प्रोक्त' । स हि पञ्चधा विभक्तोऽधीयते । तत्र सायणाचार्येण प्रथमद्वितीयतृतीयांशाना मेव तत्प्रोक्तत्वं स्वीकृतम् । तथा चैतरेयभाष्यभूमिकायाम्— "तस्य महिदासस्य मनसा 'अग्निर्वै देवाना मवम ( ऐ० ब्रा० १. १. १. )'–इत्यादिकं 'स्तृणुते ( ऐ० ब्रा० ८. ५. ५. )'–इत्यन्त चत्वारिंशदध्यायोपेत ब्राह्मणं प्रादुरभूत् । तत ऊर्ध्वम् 'अथ महाव्रतम् (ऐ० आ० १. १. १. )'–इत्यादिकम् 'आचार्या ( ऐ० आ० ३ १. ८.)'

नैव सन्तीति तत्रत्यानां ब्राह्मणादिजातिमत्त्वेनार्यत्वं शूद्रम्लेच्छत्वे नानार्यत्वं वा न किमपि सङ्गच्छतेऽस्मच्छास्त्रानुसारतः । तदेव सिन्धुखण्डादिदेशानां म्लेच्छदेशत्वम्, तत्तद्देशीयानां म्लेच्छत्वञ्च न कथमपि सङ्गच्छत इति प्रणिधानेनालोच्यम । म्लेच्छदेशा किलात्र भारते विद्यन्त एव, म्लेच्छा अपि भारतीयेष्वेव केचन, म्लेच्छा चाराचारसच्छास्त्रविमुखानां मार्याणा मनार्याणाञ्च भारतीयाना मेव, न त्वन्यदेशीयानाम्, तदाऽस्मच्छास्त्रेषु म्लेच्छाम्लेच्छविभागो पदेशाभावात् । सन्ति ह्यत्र चिरादेव म्लेच्छाः, म्लेच्छदेशाः, अम्लेच्छानां म्लेच्छवाक्प्रयोगादिम्लेच्छाचारनिषेधाश्च । शतपथ ब्राह्मणे त्वसकृदेव श्रुतो म्लेच्छशब्दः (३ २ १. २३, २४ ), पाणिनिधातुपाठेऽस्ति म्लेच्छ धातु (भ्वा० प० २०५ ), गणपाठे घुष्यादौ तच्छब्दपाठ (६ १ १६० ) कात्यायनस्य व्याकरणाध्ययनप्रयोजनाख्यानावसरे शतपथब्राह्मणमूलकं म्लेच्छा ह वा मा भूम — इति कथनम्, पतञ्जलेः पस्पशायां तद्व्याख्यानम्, मीमांसा दर्शने चार्यम्लेच्छाधिकरणम् (१ ३ ६ ), मनौ म्लेच्छदेशलक्षणम् (२ २३ ) म्लेच्छभाषादिनिषेधश्च (७ १४९, १०. ४५, १२ ४३ ), महाभारते आदिपर्वणि पाण्डवानां वारणावतगमनप्रकरणे (१४५ अ० ) युधिष्ठिरं प्रति विदुरस्य म्लेच्छभाषया गूढोपदेश दानञ्चेतत् सर्वं तद्विदाम् विदितमिति ।

तदित्थं महिदासस्य शूद्रागर्भजातत्वेऽपि ब्राह्मणग्रन्थप्रवचन शक्तिमत्त्वेन ब्राह्मणत्वं स्यात् मन्त्रात् किं तत्र चिर मित्यत्रैवोपर मामहे वयमिति ॥

एष हि महिदासोऽभूद् दीर्घजीवी, तच्छ्रूयते छान्दोग्यब्राह्मणेऽपि— 'स ह षोडश वर्षशतमजीवत्' इति (५ १६ ७ । षोडशा

मपि ; अनतिप्राचीनग्रन्थेषु पातञ्जले महाभाष्ये , विशेषतस्तु ऋगुप्रोक्तायां मनुसंहितायां ततो महाभारतादावपि कृत एतत्स्वरूपादिनिर्णय इति तन्नामप्रसिद्धिः । तत्ततस्त्वार्याणां वासनिबन्धन मेव तन्नामेति आर्यनाम्नैवार्यावर्त्तनामबीज मुपगस्यते ।

आर्यशब्दस्तु ऋक्संहितादौ बहुत्र बहुधा श्रूयते, प्रतीयते च तत्र सर्वत्रैव तदानीं मिह पृथिव्या श्रेष्ठजातिरेवार्यनामत. प्रसिद्धेति । तद्यथा— "विजानीह्यार्यान् ये च दस्यवो वर्हिष्मते रन्धया शासदव्रतान्"-इति ऋ० सं० १. ५१. ८१ । "साह्याम दास मार्य त्वया युजा सहस्कृतेन सहसा सहस्वता"-इति ऋ० सं० १०, ८३, १२ । "नवदशभिरस्तुवत शूद्रार्यावसृज्येताम्"-इति य० वा० सं० १४, ३०, १क० । "मयाहं सर्वं पश्यामि यश्च शूद्र उतार्यः"-इति अथ० सं० ४. २०, ४ख० । "शूद्रार्यौ चर्मणि व्यायच्छेते"-इति सा० ता० ब्रा० ५. ५. १४ । तैत्तिरीयसंहिताया मप्येष आर्यशूद्रयोश्चर्मनिमित्तः कलह आम्नातः (७, ५, ९, ८) । ऐतरेयब्राह्मणेऽप्याम्नात आर्यशब्दः— "असुर मार्यस्य शब्दं भवति"-इति ८. ५. २ । महामुनिपाणिनिनाप्येकत्र आर्यशब्दोल्लेखः कृतः— "आर्यो ब्राह्मणकुमारयोः (६, २, ५८.)"-इति । निरुक्तकारः खलु यास्कोऽप्येकत्रार्यशब्दं व्यवहृतवान् जातिवचनम्-- "विकार मस्यार्येषु"-इति (२. १. ४.) । आर्यशब्दव्याख्यानमप्यत्र कृतं तेनैवम्—"आर्यः = ईश्वरपुत्रः"-इति (६. ५. १.) । अस्ति च 'अर्यः'-इति पदं परिपठितं निघण्टौ (२.२२.) ईश्वरनामसु , तत एवापत्यार्थप्रत्यये सिद्धत्यार्यशब्द इति सम्यक् तन्निर्वचनम् । तदेव सवगम्यते,— यथा महम्मदीया महम्मदं नाम स्वधर्मप्रवर्त्तकं साक्षादीश्वरदूतं मन्यन्ते , यथा वा कृस्तानाः स्वधर्मप्रचारकं ख्रीष्ट

साचादीश्वरात्मज मन्यन्ते, एव मेव पुराश्माक मपि पूर्वपुरुषा रूप वत्त्वेन, बलवत्त्वेन, विद्वत्त्वेन, सत्यवादितादिबहुसद्गुणवत्त्वेन, पवित्राचारत्वेन बहुगौरववन्त आसन्नित्येवेश्वरपुत्रा इत्यभवन् व्यप दिष्टास्तदेवास्माक मार्यनामनिदान मिति ।

त इमे आर्यास्तदानी मादर्मविज्ञानादि ब्रह्मविज्ञानान्तविसमा चतिसम्या अप्यतिप्राचीना ब्राह्मणक्षत्रियवैश्येति त्रिविधा, दस्युदासेतिद्विविधासभ्यशूद्रतोऽन्या, ईश्वरपुत्रा इति व्यपदिष्टा आसन् । अहो । त एवेमेऽद्य कालचक्रपरिभ्रमणनियमतो लुप्तकल्पवेदविज्ञाना विलुप्तैक्यबला बहिर्वाणिज्यात्यर्वाणिज्यहीना सन्तो मुमूर्षुदशापन्ना अथ श्वसन्तीत्येव जीविता इति ।

अथैत एव "आर्या आवर्त्तन्ते पुन पुनरुद्भवन्तीत्या र्यावर्त्त"–इत्याद्य च मनुटीकाया कुल्लूक (२, २२), 'आवर्त्तन' पुन पुनर्जन्मग्रहण मिति तदाशय । अस्मन्मते तु अस्मात्सरटीकारेऽपि 'आर्या' ईश्वरपुत्रा इति व्यपदिष्टा मनुष्या यत्र 'आ' आभिमुख्येन, प्रधानरूपेण 'वर्त्तन्ते' विद्यन्ते, निवस न्तीति स एव भूभाग आर्यावर्त्त । तदेव मार्यावासत एव आर्यावर्त्तनामेति सिद्धान्त ।

स आर्यावास पूर्व तावत् हिमवत्पृष्ठस्य दक्षिणभागे सुवास्तु प्रदेशे एवासीदिति गम्यते । श्रूयते ऋक्संहितायाम्— "सुवास्त्वा अधि तुग्वनि"–इति (८ २० ३७)। व्याख्यातमेप ऋगशो यास्केन — "सुवास्तुर्नदी, तुग्व तीर्थ भवति, तूर्ण मेतदायन्ति"–इति (४, २, ७)। वास्तुर्वासभूमि, सा यस्तु यस्यास्तीरे सुष्ठु एव, सा नदी सुवास्तुर्नाम। तत्तीरस्थितो जनपदश्चाभवत् तन्नामत सुवास्तु रेव। "सुवास्त्वादिभ्योऽण्"–इति (४ २ ७७) सूत्रदर्शनादत्र

मन्यते विदितयायं प्रदेश पाणिनेरपीति। कर्निगहामसम्पोदय-मतेऽस्य 'स्वात्'–इति 'सुवात्'–इति वा प्रसिद्धा नद्येव सा सुवास्तुः। सुवास्तुवासकाले एव स्यादियं ऋक् समाम्नाता ( ५. ५३. ८. )—

"मा वो रसानितभा कुभा क्रुमुर्मा व सिन्धुर्निरीरमत्।

मा व परिष्ठात् सरयु पुरीषिण्यस्मे इत् सुम्न मस्तु वः"–इति॥

अस्यार्थः।— 'अस्मे' अस्माक मियम् 'अनितभा' अगतप्रभावा सर्वर्त्तुषु अतिप्रभावा 'रसा' नदी 'वः' युष्मान् 'मा निरीरमत्' अतिरमणस्य अत्यानन्दतो विहरणस्य वाधा जलप्लावनादिजन्यां मा कुर्यात्। 'कुभा' कुत्सितप्रभावा नदी च 'वः' 'मा निरीरमत्'। 'क्रुमु' नदी च 'वः मा निरीरमत्'। 'सिन्धुः' क्रुमुसङ्गतः सिन्धु नदोऽपि 'मा वः निरीरमत्'। ततः क्रुमुसङ्गतसिन्धुतः 'परिष्ठात्' परस्थिता 'पुरीषिणी' सदैव सजला 'सरयु' नदी च 'वः' युष्माकम् 'सुम्नं' सुखम् 'इत्' एव 'अस्तु'।

एतस्मादृङ्मन्त्रात् पूर्वतनार्यावासस्य तस्य चतुःसीमनिर्देशोऽपि व्यज्यत इव। तथा च तस्मादुत्तिष्ठानप्रदेशीयसुवास्तुनदीतीरस्थ-सुवास्तुजनपदात् बहुतरख्यातिप्रभावा रसा नद्येव तदुत्तरसीमा; इदानीं कावुल् नदीति प्रसिद्धा हीनप्रभावा कुभैव स्यात् तत्पश्चिमसीमा, तत्रगिलामदेशीया सरयूरेवासीत् तत्पूर्व-सीमा (न चात्रोत्तरकोशलप्रदेशीया सरयूरुपपद्यते, कुभेत्यादि साहचर्यात्, अर्थज्ञाने साहचर्यस्यापि नियामकत्व मन्तव्य मेव; अन्यथा हि रामलक्ष्मणाविल्यत्र जामदग्न्यकृष्णाग्रजयोरन्यतर-स्यापि वोधः स्यात्), अथ क्रुभाया नीचैः क्रुमुसिन्धुसङ्गम एव तद्दक्षिणसीमेति च सम्पद्यते सुतराम्।

यदा हि सुवास्तुत पश्चिमस्यां दिग्यवस्थितो निषधपर्वतोऽस्य

च वेदितव्यम् । जह्नावीतीरस्थो जाह्नवप्रदेश' खत्ख्दातनपांच कोरायाः प्राक्, सिन्धुतः प्रत्यक्, कुनार् ( वर्ण ) प्रदेशतश्चोदक् स्थित इति विश्वश्रीघसम्पादको वसुदासः । एवञ्च सुवास्तुसन्निहिते-वेयं जह्नावी इति स्वीकृतेऽपि नो न चतिः ।

तत एव आर्यावासः सारस्वतप्रदेशेषु विस्तीर्णः । तदाह यास्कः— "विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो बभूव, स वित्तं गृहीत्वा विपाट्छुतुद्र्योः सम्भेद माययावनुययुरितरे"– इति ( २. ७. २. ) । इहैव बहव ऋग्मन्त्राः सामगानमन्त्रा आथर्वणमन्त्राश्च समाम्नाताः, यागविधयश्चात्रैव समुद्भूता, परिपुष्टा वा; आर्यसाम्राज्यञ्चेहैव प्रथमं विस्तृतम् । अतएव सर्ववैदिकग्रन्थेषु सरस्वतीनामाख्यानादिकं बहुत्रैव श्रूयते । तद्यथाश्वलायनशाखा याम्—१. ३. १०–१२, २. ३०, ८; ३१, १६–१८; ६. ६१; ७. ८५. १, २, ४–६, ८६ १–३; १०. १७, ७–८ इत्येवमादयः समाल्लोच्याः । तदेतस्य सारस्वतप्रदेशस्य यागभूमित्वेन प्रशंसन मप्यनेकत्र श्रूयते । तद्यथा ( ३. २३. ४. )—

"नि त्वा दधे वर आ पृथिव्या इळायास्पदे सुदिनत्वे अह्नाम् ।
दृषद्वत्यां मानुष आपयायां सरस्वत्यां रेवदग्ने दिदीहि"–इति ।

अस्यार्थः ।— 'इडायास्पदे' शस्यबहुले, अतएव 'पृथिव्याः वरे' उत्कृष्टप्रदेशे हे 'अग्ने !' 'रेवत्' रेवान् धनवानच 'त्वा' त्वा 'आ' आभिमुख्येन 'निदधे' स्थापयामि । कश्च सः शस्यबहुलः पृथिव्या वरः प्रदेश इत्याह— 'दृषद्वत्याम्', 'आपयायां', 'सरस्वत्याम्' इति; दृषद्वतीतीरत आरभ्य सरस्वतीतीरं यावत् त्रिनदीतीरप्रदेश, सर्व एव ब्रह्मावर्त्तः । 'मानुषे' जनपदे तादृशे त्वं 'दिदीहि' दीप्यस्व । अत एवोक्तं मनुना— "सरस्वतीदृषद्वत्यो

देवनद्योर्यदन्तरम्। तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते"-इति (२. १७.)। किमर्थं त्वां निदध इत्याह— 'अह्ना सुदिनत्वाय'-इति। जीवत्कालानां सुप्रभातीकर्त्तुमित्यर्थः।

ततो यदा एष आर्यावर्त्तो बहुविस्तृतस्तदैव त्रिसप्तनदीभिः परिव्याप्त इति वर्णितं मस्या ऋक्संहितायाम्। तथा चास्ति शाकलसंहिताया दशममण्डले नवर्षं मेकं सूक्तम्, तद्धि नदीस्तुतिपरमिति नदीस्तुदिति भाष्यते, ततस्तदानीन्तनार्यावर्त्तप्रधाननदीवर्णनञ्च लभ्यते। तस्येयं पञ्चमी ऋक्—(१०. ७५.)।

"इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया"-इति।

अत्र स्तुता गङ्गा (१) नदी त्वस्मद्देशेऽतीव प्रथिता। ततः पश्चिमस्था यमुना (२)। ततः पश्चिमस्था सरस्वती (३)। ततः पश्चिमस्था शुतुद्री (४), याद्य शतद्रुरित्युच्यते। ततः पश्चिमस्था परुष्णी, सैवेरावतीत्युक्ता यास्ककाले (निरु॰ ८. ३. ५.), एतर्हि लैरावतीति। ततः पश्चिमस्था असिक्नी, सैव चन्द्रभागेत्युच्यते। ततः पश्चिमस्था वितस्ता। ऐरावती, चन्द्रभागा, वितस्तेति तिसृणां मासां नीचैः सम्मिलनतो याभूदतिप्रसारा मालवदेशीय-कश्यपपुरतः पश्चिमस्था दक्षिणाभिमुखी महानदी, सैवेह मरुद्वृधेति पञ्चमी (५)। तत एव कश्यपपुरतः प्राक्प्रवाहिता या शुतुद्री (शतद्रुः) पूर्वं मिह वर्णिता, तस्या एव शतद्रोरुपरिष्टात् पश्चिमपार्श्वतः सङ्गता च प्राचीनतमा आर्जीकीया (६); उरुञ्जिरेत्यप्यस्याः प्राचीनतरं नाम, इयमेव विपाडित्युक्ता यास्ककाले (निरु॰ ८. ३, ५.), विपाशा नामिका चेय मिदानीम्। ततोऽपि पश्चिमस्था सुषोमा (७), सैव तत्पश्चिमागामप्रदेशाभिप्रसारामिनी

सिन्धुसङ्गता। एता एव सप्त नद्यो यावद्भूभागेषु प्रवहन्ति, तावानेव प्रदेश: सप्तनद इति सप्तसिन्धुरिति वा ख्यायते। सिन्धुरेह नदी पर्याय.। तासु गङ्गायमुने विहाय या: पञ्च नद्यो यावत्तु भूभागेषु प्रवहमाना: सन्ति, स एव पञ्चनद इति, सारस्वतप्रदेश इति चेति सङ्क्षेप.। ऋक्संहिताया मन्त्र मेकं (१. २३. ४.) प्रदर्श्य यदिह वर्णितो ब्रह्मावर्त प्रदेश:, तत: परस्तादेष एव प्रदेश: पुण्य भूरिति परिगण्यते। तथा हि मनुसंहितायाम्—

"कुरुक्षेत्रञ्च मत्स्याश्च पञ्चाला: शूरसेनका।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तर:"–इति (२. १८.)॥

वर्णित एष सप्तनदप्रदेश: सिन्धो: पूर्वपारस्थ:; एवं सिन्धो: पश्चिमपारस्थोऽपि विद्यतेऽपर: सप्तनदप्रदेश:। स ह्रीदानीं मार्या-वर्त्ताद् बहिर्भूतोऽप्यासीत् पुरा आर्यावर्त्तान्तर्गत.। अतएव संहिताया मित उत्तरं पश्चा मृचि तत्रत्यानां मपि सप्तानां नदीनां वर्णनं श्रूयते। तथाहि—

"तृष्टामया प्रथमं यातवे सजू: सुसर्त्वा रसया श्वेत्या त्या।
त्वं सिन्धो कुभया गोमती क्रुमु मेहत्न्वा सरथं याभिरीयसे॥"

—इत्यस्मिन् मन्त्रे तृष्टामा प्रथमा, सुसर्त्तु: द्वितीया, रसा तृतीया, श्वेती चतुर्थी, कुभा पञ्चमी, गोमती षष्ठी, मेहत्नुयुता क्रुमु: सप्तमी। इमा: सर्वा एव सप्त नद्यो मध्यहिमालयोत्पन्नस्य पूर्व पश्चिमाभिमुखगामिन. पश्चात् दक्षिणप्रवाहिन: समुद्रगस्य सिन्धु-नदस्य पश्चिमस्यां पूर्वदक्षिणाभिमुख स्यन्दन्त्य सन्त्यन्यनामत:। तत्रेदानीं चित्रलदेशत: प्राग् वहमाना पञ्चकोर्-प्रदेशीया तत्रत्यया नद्येव स्यात् 'तृष्टामा'; 'सुसर्त्तु'–इति सुवास्तोर्नामान्तरम्, यदद्य स्वादित्युच्यते; 'रसा' त्विहापि पूर्ववर्णितैव (२३ पृ० १६ पं०),

'श्वेती' स्यादद्यतन-डेराइस्माइलखां-प्रदेशतलवाहिनी अर्जुनी ; 'कुभा'=काबुल ; 'क्रुमुः' वर्णु-प्रदेशवाहिनी कुरम् ; 'गोमती' सम्प्रति गोमलिति प्रसिद्धा । एताः दृष्टासाद्याः नद्यः सर्वैव साक्षात् परम्परया वा सिन्धुसङ्गता एवेति ॥

तदेवं चित्रलप्रदेशतः प्राक्, वेलुचिस्थानादित ऊर्द्धं च यावत् पश्चिमोत्तरस्यां य आसीत् सुविस्तीर्णः पुरातन आर्यावर्त्तांशः स एव एव पश्चिम-सप्तनदप्रदेश इति वक्तुं युज्यते । किञ्च यथा पूर्वसप्तनदान्तर्गतः पञ्चनदप्रदेशस्तथैव पश्चिमसप्तनदान्तर्गतः (आफगान्) पक्थोर्प्रदेशोऽपीति । अतो गान्धारस्यार्यावर्त्तान्तर्गतत्वं सुतरां सम्भवम् । ततः सङ्गच्छते "गन्धारीणा मिवाविका (ऋ० सं० १. १२६. ७.)"-इति संहितावचनम्, उपपद्यते च "नग्नजिते गान्धाराय (ऐ० ब्रा० ७. ५. ८.)"-इति ब्राह्मणवचनम्, तथा "साल्वेयगान्धारिभ्याञ्च (४. १. १६८.)"-इति पाणिनिवचनञ्च । कुरुराजधृतराष्ट्रपत्नी दुर्योधनादिबहुपुत्रप्रसविनी गान्धारी तु भारतप्रसिद्धैव । तथा अद्यतनपारस्यराज्यप्राक्प्रान्तवर्त्ती पूर्वमद्रदेश इति मते पाण्डुराजपत्नीति प्रसिद्धा माद्री चासीत् पुरा भारतीयैव । एव मेव पौर्वमद्र इति पदसिद्धार्थं "मद्रेभ्योऽञ्"-इति (४. २ १०८.) पाणिनिविधानञ्च सङ्गच्छते, सङ्गच्छते चैवं पारस्योत्तरप्रान्तवर्त्तिनोऽद्यतनमिदियानामकसाम्राज्यस्योत्तरमद्रत्वेनग्रहण मिति ॥

एतयोः पूर्वापरसप्तनदप्रदेशयोर्मध्ये मध्यहिमवत्समुद्भवोऽप्राक्प्रवणः समुद्भ्रान्तः प्राचीनार्यावर्त्तद्विधाकृदतिप्रवलः श्रीमदगड इवैव सिन्धुर्नामैको नदोऽद्यापि राजते ।

तस्याश्च सिन्धोरनुसरस्या सन्निदूरपश्चिमस्याद्वान्यामां सप्तानां

नदीनां विद्यमानतापि श्रूयते ; तदस्यैव नदीसूक्तस्य सप्तम्य-ष्टम्योर्ऋचोः समालोच्यं सप्रणिधानम्। तास्वेका 'ऊर्णावती', स्यादेषा कैलासनिम्नस्थोर्णाप्रदेशीया, हिरण्मयी, वाजिनीवती, सीलमावतीत्येता अपि तिस्र: स्युरत्युत्तरस्था एव ; 'एनी' नदी तु निम्नसेतुवीस्थाने प्रसिद्धैव ; तथा चित्रापि चित्रलप्रदेशत आगत्य शुभाया मिलिता ; 'ऋजीती' च स्यात् या तत्समीपवाहिनीति।

एतदुक्तत्रिसप्तनद्यपेक्षया सिन्धोर्नदस्य प्राधान्यं च वर्णितं तत्रैव सूक्ते प्रथमम्। तद्यथा तत्सूक्तीयप्रथमर्चः परार्द्ध एषः—

"प्र सप्त-सप्त त्रेधा हि चक्रमुः प्र सत्वरीणां मति सिन्धुरोजसा"

अस्यार्थः।— 'आपः' नद्यः 'सप्त सप्त' भूत्वा 'त्रेधा' त्रिधा वियेख' सत्यः 'प्रचक्रमुः' प्रावहन् प्रवहन्ति, अस्मिन्नार्यावर्त्ते, सिन्धोः पूर्वस्यां सप्त, पश्चिमस्यां सप्त, उत्तरस्याञ्च सप्तेति। तासां 'सत्वरीणां' एकविंशतिसङ्ख्याकानां नदीनाम् 'ओजसा' बलेन 'अति' अतिशयितः एको नदः 'सिन्धुः'।

तासां त्रिसप्तनदीनां पुत्र इव राजेव च सिन्धुर्वर्णितस्तत्रैव—

"अभि त्वा सिन्धो शिशु मिन्न मातरो

वाश्रा अर्षन्ति पयसेव धेनवः।

राजेव युध्वा नयसि त्व मित् सिचौ

यदासा मग्रं प्रवता मिनक्षसि"-इति (४)।

अस्यार्थः।— हे 'सिन्धो'। 'मातरः शिशु' न (इव)' इमा नद्यः 'त्वा अभ्यर्षन्ति' त्वां पयः पाययितु मिवाभितो गच्छन्ति, 'पयसा' युक्ताः 'वाश्राः धेनवः' सुयम्भकारिण्योऽचिरप्रसूता गाव इव। अपि 'त्वं' 'युध्वा' युद्धकारी 'राजा इव' इमौ पूर्वापर नदीसप्तकौ 'सिचौ' सेनानिवेशाविव 'नयसि इत्' प्रेरयस्येव,

'यत्' यतः 'आसां प्रवतां' प्रवहन्तीनां नदीनाम् 'अग्रम् इनचसि' अग्रगो भवसि, श्रेष्ठ इति भावः।

अन्यत्र चात्र संहितायां त्रिसप्तनदीनां श्रवणमस्ति। तद्यथा —"त्रिः सप्त सस्रा नद्यः"—इति ऋ० सं० १०. ६४. ८।

तस्वतस्त्वेतत्त्रिसप्तनदीपरिवृतः सिन्धुमध्य एवासीत् पूर्वकालिकः आर्यावर्त्तः। अत एवैतरेयके श्रुतम्— "यस्तेजो ब्रह्मवर्चस मिच्छेत्०—० प्राङ् स इयात्, योऽन्नाद्य मिच्छेत्०—० दक्षिणा स इयात्, यः सोमपीथ मिच्छेत्०—० उदङ् स इयात्"—इति (१. २. २.)। प्रागादिदिक्शब्दाश्च यच्चिदवधि मपेक्षन्ते, कुतः प्रागित्याद्याकाङ्क्षायाः सर्वलोपजायमानत्वात्। तदत्र आर्यावर्त्तीयसिन्धु मेव मध्यावधि मन्यामहे, तस्मात् सिन्धुतः प्रागित्यादिस्वीकारेणैव तेजस्त्वादिसिद्ध्युपपत्तेः। तथा च सिन्धोः प्राग्देशेषु सरस्वत्यादितीरभूमिषु यज्ञानुष्ठानबाहुल्यस्तुतेस्तेजस्त्व-ब्रह्मवर्चस्त्वयोर्लाभः समुपपद्यते; अतद्रुसिन्धुमध्यसतो दक्षिणस्यां हिमप्राचुर्याभावात् तापप्राबल्यात् भवत्येव प्रचुरशस्योत्पत्तिः; सिन्धुतः पश्चिमस्यां मरुप्राचुर्यात् तत्र यज्ञलाभः सम्भाव्य एव, अतद्रुसिन्धुमध्यमादुत्तरस्यां सतिशैत्यात् शीतप्रभवस्य बल्लीसोमस्य लाभः शारीरसोमस्य च हविर्भिर्वेदैवेति। तदित्थं सतिप्राक्तनार्यावर्त्तस्यायं सिन्धुर्मेरुदण्ड इवासीदिति प्रतीयते। इत एव सकारादेहकाराद्युच्चारणक्षमियवनानायैरिदं भूखण्डं सिन्धुस्थान मिति यत्नाद्धे हिन्दुस्थानमित्युच्यते।

किञ्चात्र सिन्धुमध्यलातिविक्रान्ता यासीन्नदी रसेति विश्रुता, द्वितीयनदीसप्तके तृतीयेति च वर्णिता, सैवासीत् तदानीमनार्यायमस्योत्तरसीमेति गम्यते। तथा ह्यनुक्रान्त मिदं गौतमा

चार्यैण— 'किमिच्छन्ती पणिभिरसुरैर्निगूढा गा अन्वेष्टुं सरमां देवशुनी मिन्द्रेण प्रहिता मयुभिः पणयो मित्रीयन्तः प्रोचुः, स तान् युष्मान्व्याभिरनिच्छन्ती प्रत्याचष्टे"–इति। तस्यैतस्यैदं सायणकृतं भाष्यम्— "इन्द्रपुरोहितस्य बृहस्पतेर्गोषु बलनाम्नो-ऽसुरस्य भटैः पणिनामकैरसुरैरपहृत्य गुहाया निहितासु सतीषु बृहस्पतिप्रेरितेनेन्द्रेण गवा मन्वेषणाय सरमा नाम देवशुनी प्रेषिता। सा च महतीं नदीं मुत्तीर्य्य बलपुरं प्राप्य गुप्तस्थाने नीतास्ता गा ददर्श। अथ तस्मिन्नन्तरे पणय इदं वृत्तान्तं मव-गच्छन्त एनां मित्रीकर्त्तुं संवाद मकुर्वन्। तत्र प्रथमतृतीयाद्या अयुजोऽन्त्यावर्जिता पणीनां वाक्यानि, ०—०, द्वितीयचतुर्थ्याद्या युज एकादशी च षट् सरमाया वाक्यानि"–इति। वस्तुतोऽत्र पणय.=वणिजः, सार्थवाहा इति यावत्; "पणिर्वणिग् भवतीति (२. ५. ३.) नैरुक्तात्। असुराः=बलवन्त (निरु० ३. २. २.)। नून मेते इह आर्यतरा एव वृत्तान्ते। सरमा देवशुनी दिव्यगुणोपेतास्तत्रामिका सुशिक्षिता कुक्कुरी, बलपुरीस्था गुहा तु नून मार्यशासनाद्दहि स्था, तथाधानार्य्यैरपहृता आर्य-गाव. कुक्कुरीसन्धानेन पुनर्लब्धा इत्येवात्र सारम्, सर्वं मन्यत् राजनैतिकं काव्यम्। तदिदं ऋक्संहिताया दशमे मण्डले १०८ सूक्ते एकादशभि ऋग्भिर्वर्णितम्। तस्यादिमेषा—

"किं मिच्छन्ती सरमा प्रेद मानड् दूरे ह्यध्वा जगुरिः पराचैः।
कास्मे हितिः का परितक्म्यासीत् कथ रसाया अतर पयांसि"

तदिदं ध्यायते, या खलु पूर्वं सुवास्तुप्रदेशस्योत्तरसीमेति वर्णिता, सैवेयं प्रचुरोदका प्रभूतवेगा च नदी पुरासीदार्यानार्य-देशयोरुत्तरसीमरूपेति।

सैषा 'रसा' ऋक्संहितायां बहुवर्णिता। तद्यथा ८, ४९, २—

"गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजस."—इति।

यथा 'गिरेः' 'रसाः' नद्यः 'प्रपिन्विरे', 'अस्य पुरुभोजस. दत्राणि' तथैव प्रपिन्विरे इति तदर्थः। एतेनावगम्यते रसायाः कस्माचिद् गिरित एव समुद्भवः। किञ्चेहापर मपि वेद्यम्;— यथा गङ्गेति नदीनां साधारणं नाम, यथा च सरस्वतीत्यपि, तथैव रसेति च। अत एव निरुक्ते यथा गङ्गाशब्दस्य 'गङ्गा गमनात्'—इति निरुक्तिः कृता, यथा च सरस्वतीशब्दस्य 'सरस्वती' सर इत्युदकनाम; तद्वती—इति निरुक्तिः कृता; तथैव रसाशब्दस्यापि 'रसा नदी, रसतेः शब्दकर्मणः'—इति कृतैव नदीसाधारणबोधिका निरुक्तिः। एव मन्येष्वमादिषु योगरूढ्यर्थः सर्वत्र विवक्षितः। निरुक्तकृत' प्रदर्शितयानिरुक्त्यैतया नद्याः सदैव शब्दकारित्वमवगम्यते। प्रदर्शितत्र ऋचाम् 'रसाः'—इति बहुवचनश्रुतेस्तद्बहुत्व मपि गम्यते। तथा च यथा हिमवत्पृष्ठेषु बह्व्यो गङ्गाः सन्ति, यथा च सरय्वा अपि त्रित्व मिरेव पुरस्तादुपदर्शितम्, तथैव रसाबहुत्व मपि पुन मङ्गीकार्यम्; प्रदर्शिते "तृष्टामया (१०. ७५. ६.)"—इति मन्त्रे तस्याः सिन्धुसङ्गतत्वस्य, अपरस्य समुद्रसङ्गतत्वस्य च स्फुटावगमात्। तद्यथा ऋ० मं० १०, १२१ ४—

"यस्येमे हिमवन्तो महित्वा, यस्य समुद्रं रसया सहाहुः।
यस्येमाः प्रदिशो यस्य बाहू, कस्मै देवाय हविषा विधेम"—इति।

सेयमस्मत्सम्मता रसा साधारणनदीपरेति सम्भाव्यते; बहुवचनात्मतया अनिर्देशात्; अपि त्वेतस्या रसाया नदीषु प्राधान्यं च लक्ष्यते; भारतवर्षसीमावर्त्तिसमुद्रयोः महाप्रवेशात्

प्रतीते.। सैयं समुद्रसङ्गता रसा लयतनार्यावर्त्तो वहिष्ठा, खोरा सान् राज्यान्तर्गता 'आवेस्ता'-ग्रन्थवर्णिता, 'रंहा' इत्याह विश्व कोषकार:। तथा चेयं रसा तदानीन्तनार्यावासस्य पश्चिमसीमेति च स्यात् पूर्वदर्शित-देवशुनीपणिसंवाद एतद्विषयक एव चेति।

अंशुमत्याद्यानद्यस्त्वेतदार्यावर्त्तीया एवेत्यत्र किमस्ति वक्तव्यम्। "अंशुमती" ऋ० सं० ८. ९६. १३, १४. १५ ऋचो द्रष्टव्या:। सैषा यमुनासङ्गता, दृषद्वतीत: प्राक् स्थिता। "अश्मन्वती" च ऋ० सं० १०. ५३. ८। एषा किल घर्घरात' प्रत्यक्, शतद्रुतो बहुप्राक्, उत्तरतोऽवाग्वहमाना, विनशनप्रदेशीया।

यदिह नदीपरपारगमनं श्रुतम्, तन्नूनं सघ्यैशियात. समागतानां पूर्वतनार्याणां वच इति शर्म्मण्यादिपाश्चात्यसिद्धान्तोऽनर्घको निर्मूलश्च; स्थानीयार्याणा वच एवेत्युक्त्यैव नयोपपत्तेः कि महती वशस्तम्बाक्षङ्गानुकर्षणेनेति सुधीभिर्विभाव्यम्। ऋ० सं० १. १०४. १, २, ३ ऋक्षु वर्णिता शिफानाम नदी तु निषधदेशीयैव सम्भाव्यते। तत्रयमर्य्येव निषदनामोल्लेखदर्शनात्। ऋ० सं० ६. २७. ६-ऋग्द्वयस्तुते. 'हरियूपीया' 'यव्यावती' च नद्यौ आफगानस्थानीये एव सम्भाव्येते। तत्रच तत्रत्य-'हजारा' प्रदेशीया सम्प्रति हरिरुदित्युच्यमाना नद्येव स्यात् वैदिकहरियूपीयेति।

"पीवानं मेष मपचन्त वीरा न्युप्ता अक्षा अनु दीव आसन्।
द्वा धेनुं बृहतीं मप्स्वा१न्त: पवित्रवन्ता चरत: पुनन्ता"-इति।

अस्मिन् मन्त्रे (ऋ० सं० १०. २७. १७.) अन्यत्र च यद् ध्वन्यते यथा इति, तदपि स्यात् आफगानुसरव प्रवहमाना 'अक्षम्' नदीति च सुवचम्।

प्रवेती नद्येव सम्प्रत्यर्जुनीत्युच्यत इत्युक्तं पुरस्तात् (पृ० ३८

पं॰ १), सा हि श्वेतपर्वतान्निर्गतेत्येव तस्यास्तथा नाम सम्पन्नम् । माध्यन्दिनशतपथे— "प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या"–इति १४. ६. ८. ९ । ऋक्संहितायां नूनमियमाम्नाता "श्वेत्या त्या"–इति १०. ७५. ६ । श्वेतयावरी यद्यपि स्यात् तच्छ्वेतगिरिप्रभवैव । तदिदं श्रूयते— "उत स्या श्वेतयावरी"–इत्यादि ८. २६. १८ । अपि संहितायां सरयुनदी भिः श्रुता ( ४. ३०. १८ ; ५. ५३. ९ ; १०. ६४. ९. ) तत्र सर्वैव सिन्धुसङ्गता तद्भिस्तानामनगरीतलवाहिन्येव गम्यते । अपि यच्छ्रूयते वाजसनेयसंहितायाम्— "काम्पिल्यवासिनी"–इति ( २३. १८. ) सैषा काम्पिल्यनगरी प्रवराध्यायवचनात् दशार्णप्रदेशतः प्रागिति गम्यते, अद्यापि कम्पिलेत्येव प्रसिद्धा दक्षिणपाञ्चालस्था । नाडाश्वनगर्यपि तच्चेदर्द्धेऽस्ति । बृहदारण्योक्त कपिप्रदेशोऽपि ( २. ३. १ ; ७. १. ६. ५. १. ) तत्सन्निहित एव । इतिहासवर्णिता यत्तु यत्तु सीता शौर्यादयस्तु आर्यपरिव्राजकपिशाता अपि नाद्यत्पूर्वमनार्याणा निर्गतभूमय । ततश्च या पुनर्नद्यो हिमवत्पृष्ठोत्तरभागत प्रवहमाना प्राच्यप्रतीच्योदीच्यभूखण्डगता', ताः सर्वा एवान्यदेशीयाः इति ध्रुवम् ; अपि यास्तु हिमवत्पृष्ठ दक्षिणभागतः प्रवहमाना' प्रागपाग्भूखण्डगतास्ता' सर्वा अस्म द्देशीया एव ; बिन्दुसरोमानससरोरावणह्रदादयोऽप्यार्यपरिव्राजकपरिचिता अपि नास्मद्देशीयाः किं तत्र चिन्तनीय मस्ति । शर्यणावत्सरस्तु नून मार्यावर्तीयम् । तदाहु' शाट्यायनिनः— "शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्द्धे सर' स्यन्दते"–इति ऋ॰ सं॰ १. ८४. १३ सा॰ भा॰ द्रष्टव्यम् ।

अपि श्रूयते मन्त्र एव' ' ऋ॰ सं॰ १०. ७४ १. )—

"प्रावेपा मा बृहतो मादयन्ति
प्रवातेजा इरिणे वर्वृतानाः ।
सोमस्येव मौजवतस्य भक्षो
विभीदको जागृविर्मह्य मच्छान्"–इति ।

'प्रावेपाः' सततकम्पनशीलपत्राः, 'प्रवातेजा' अपरवन-स्पत्यादिशून्ये बहुवायुयुते प्रान्तरे जनिष्णवः, 'इरिणे' इरानाम-पारस्यदेशे 'वर्वृतानाः' अधिकतया वर्त्तमानाः, 'बृहतः' विभीदक-वृक्षाः 'मा' मां मादयन्ति । 'जागृविः' भक्षयितुर्जागरणहेतुः, 'विभीदकः' कोष्ठस्थ मलस्य वायोश्च भेदनकारी, अयं 'मौजवतः' मूजवन्नामपर्वतोत्पन्नस्य सोमस्य 'भक्षः' भक्षोंऽश. 'इव' 'मह्यम्' 'मच्छान्' छदयति, मोहयतीति तदर्थः ।

इरिण मित्यस्य यास्केन द्विविधा व्याख्या कृता— 'इरिण' ऋणातेरपार्ण भवति, अपरता अस्मादोषधय इति वा'–इति (८. १. ८.)। तयोराद्योऽर्थ एवात्र उपपद्यते; तद्देशीयानां हि भारतीयाना मिव पुत्रपौत्रादिष्वपि पितुर्ऋणं न सद्भूमत इति दर्शनात् । मूजवान् पर्वतस्तु कैलाशगिरेः पश्चिमस्थोऽद्यापि ।

तदेव ऋक्संहिताकाले ईरान्-नाम जनपदस्य चार्य्यावर्त्तित्वं तथा मूजवतोऽपीति स्यान्मतम्थ मिति ।

अथर्वसंहितायाः पञ्चमकाण्डीयचतुर्दशवर्गद्वाविंशतितमसूक्तस्य तृतीयमन्त्रे महावृषनामजनपदस्य, चतुर्थे महावृषप्रदेशस्य, पञ्चम-सप्तमयोः मूजवत्प्रदेशस्य बह्लिकदेशस्यापि, षष्ठे पुनर्महावृषमूज-वतोः, नवमे पुनरेव बह्लीकस्य, चतुर्दशे त्वन्तिमे अङ्ग-मगध-मूज-वद् गन्धारीणा च श्रवण मस्ति, परं मुख्या इमे सर्वे एव जनपदा-स्तदानीं मानवनार्यवासा इति च गम्यतेऽत्र एव, न ह्यन्यथैषु-

तत्कास्थापन मभीष्टं भवेदिति। तद्यथा तच्चतुर्थमन्त्र एषः—

"गन्धारिभ्यो मूजवद्भ्योऽङ्गेभ्यो मगधेभ्यः।

प्रैष्यं जन मिव शेवधिं तक्मानं परिदद्मसि"—इति।

न ह्यार्यजनास्पदेषु तक्मस्थापन मिष्टं स्यादाथर्वणिकानामार्याणाम्।

नन्वेवं परुष-(पेशावर) देशस्य गान्धार (कन्दाहार) प्रदेशस्य, पूर्वमुक्त मार्यावर्त्तान्तर्गतत्वं किं न विरुध्येत? अत्र ब्रूमः;—तयोरार्यावर्त्तान्तर्गतत्वेऽपि एतन्मन्त्रदृक्-कालेऽनार्यवासत्वे कोऽस्ति बाध इति, कालभेदात् सर्वसामञ्जस्यं भवेदेवेति। न चैव मथर्वसंहिताया ऋक्संहितातो विभिन्नकालिकत्वं मनस्यं स्यात्; मन्त्राणा मेव प्रकाशकालपार्थक्यस्वीकारात् तदुपपत्तेः। स्वीकृतञ्चैतदस्माभिर्निरुक्तालोचने (ठ पृ०) 'वस्तुत एक एव वेद'—इत्यारभ्य (ड पृ०) 'चत्वार एव वेदास्त्रयीशब्दवाच्याः'—इत्यन्तेन, पुनः (त पृ०) 'यास्केन'—इत्यारभ्य (ते पृ०) 'पुरा तु बहुकाल मभिव्याप्य बहुभिर्ऋषिभिर्बहुभिरेवोद्देशैरभिप्रायैः प्रणीता बहवो मन्त्रा'—इत्यन्तेन च।

प्रदर्शितं मूजवन्नाम तु ऋक्संहितायां (१०. ३४ १) श्रूयते इति सत्यम्। परं न तथापि मूजवत्पर्वतस्यार्यावासत्व मनस्य मेव; तेन हि तत्रत्यसोमानां मौञ्जवतमात्रप्रतीतेः। यच्चाथर्वणिका नानम्— "उदङ् जातो हिमवत स प्राच्यां नीयसे जनम्"—इति (५. ४. ८.), तस्मात् तत्रत्यकुष्ठस्यौत्कर्षमात्रं गम्यते, न त्वन्यत्। सोमस्यानार्याधिकृतत्वन्तु ऐतरेयब्राह्मणेऽपि सुव्यक्तम्। एवं मगधदेशस्यापि सिद्धान्तः कृत एव। श्वेतपर्वतादपि प्रतीच्यस्य बह्लिकस्य तु यदार्यावासत्वं प्रतीयते "बह्लीकः प्रातिपीयः शुश्राव" —इत्यादि (शत० ब्रा० १२. ९. ३.) श्रुतितः, तस्यापि कालभेद

व्यवस्थैव स्वीकार्या; अपिवा तस्यार्याभिजनत्वे तु न कमपि बाधं पश्यामः। अङ्गराज्यस्य चासीत् तदानी मनार्यत्व मेव; कुरुराजदुर्योधनकालत एव तस्याभवदार्यावर्त्तान्तर्गतत्वम्। मगधस्य त्वनार्यवासत्वेन निन्दाश्रूयते। तथाहि (ऋ० सं० ३, ५३, १४.)—

"किं कृखन्ति कीकटेषु गावो
नाशिर दुह्रे न तपन्ति घर्मम्"–इति।

निरुक्तकारेण चैतद्व्याख्याया मुक्तम्— "कीकटो नाम देशो ऽनार्यनिवासः"–इति (६. ६. ४.)। कीकट एव मगधः, अस्ति हि स्मृतिवचनम्— "कीकटेषु गया पुण्या, पुण्या नदी पुनपुना। च्यवनस्याश्रमं पुण्यं पुण्यं राजगृहं वनम्"–इति, गयादयस्तु मगधराज्यान्तर्गता इति प्रसिद्ध मेवेति॥

तत्वगो हिमवत्पृष्ठमध्यस्थो मूजवान्नाम नगराजस्तु स्यादार्यवासीऽनार्यवासी वा, परं मासीत् पुराऽऽर्यावर्त्तोत्तरसीमेति तु मन्तव्य मेव। अत एव वाजसनेयिनः समामनन्ति— "एतत् ते रुद्रावसम्, तेन परो मूजवतोऽतीहि"–इति (सं० ३, ६१,)। एतस्यापि यजुषो व्याख्यान कृतं शतपथे। तथाहि— "अवसेन वा अध्वानं यन्ति, तदेनं सावस मेवान्ववार्जति यत्र यत्रास्य चरणं, तदत्र ह वा अस्य परो मूजवतोऽतीहि"–इति (२, ६, २, १७)। तदेव मत्र मन्त्रे रुद्रनामसृत्युदेवताया मूजवतः परपारे गमनप्रार्थनात् आर्यावर्त्तात् एव दूरे गमनं प्रार्थितं गम्यते॥

सर्वेद मध्यतः पारस्यराज्यपश्चिमोत्तरसीमिधिप्रासादन्ततः प्राक् प्रत्यगनुभद्रप्रदेशात्, उदक् सिन्धुसागरसङ्गमात्, अवाक् च मूजवतश्चाय मार्यावर्त्तः संहिताकालीन इति निष्पद्यते॥

आर्याधिकारास्थितोऽप्यन्ययार्यास्थित इत्यप्यवदीत् । तथा हि (ऋ० सं० ७. १८ १९. )—

"आवदिन्द्रं यमुना तृत्सवश्च प्रात्र भेदं सर्वताता मुषायत् ।
अजासः शिग्रवो यक्षवश्च बलिं शीर्षाणि जभ्रुरश्व्यानि"—इति ।

अस्यार्थः ।— यः 'इन्द्र' सम्राट् 'अत्र' राज्ये 'सर्वताता' सर्वकर्मसु 'भेदं' राजप्रजयोर्विघातादिवैमनस्यं 'प्रमुषायत्' प्रमुष्णाति प्रच्छिन्नीकरोति, एवं कृत्वैव सर्वाः प्रजाः 'आवत्' अवति, तम् 'इन्द्रं' सम्राजं 'यमुनाः', 'तृत्सवः', 'अजासः', 'शिग्रवः', 'यक्षवः' 'च' यामुनप्रदेशादिवासिनः सामन्तराजाः 'अश्व्यानि' अश्वादिवाहितानि, 'शीर्षाणि' शीर्षतः प्रवाहितानि 'च' 'बलिम्' उपढौकनं 'जभ्रुः' प्रददुरिति ।

अस्या ऋचि श्रुताः यामुनादयः सर्व एव जनपदाः तदानीमनार्यावासतोऽपतनादस्मादार्यावर्त्तस्य बहिर्भूता एव स्युः । अतो भयवादेऽपि च किञ्चिद् विचार्यम् । गङ्गायाः प्रत्यक्प्रत्यग्भागे ऽमिता एतैव यमुना अस्या ऋचि श्रुता, उभाभ्येति ? अग्रवर्ति त्वस्यैव । शिग्रु जनपदोऽपि व्याघ्रसम्भागात्प्रभवोर्ध्वगतादस्य एवेति । यदि वा आर्यावर्त्तीयावप्येतौ तदानीं कश्चप्रदेशावेवेत्यपि किं चित्र मिति ॥

अथैतरेयकाले अथ आर्यावर्त्त आसीद् याद्दगायतनः, तदपि किञ्चिदवगम्यते एतद्ग्रन्थत एव । तथाहि ऐन्द्रमहाभिषेकप्रकरणे —"प्राच्यां दिशि ये के च प्राच्यानां राजानः०—० दक्षिणस्यां दिशि ये के च सत्वतां राजानः०—० प्रतीच्यां दिशि ये के च नीच्यानां राजानो येऽपाच्यानां०—० उदीच्यां दिशि ये के च परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्राः० —० ध्रुवायां मध्यमायां प्रति

प्राच्यां दिशि ये के च कुरुपञ्चालानां राजानः सवशोशीनराणां राज्यायैव तेऽभिषिच्यन्ते"–इति (८. ३. २.)।

अत, 'प्राच्यानां राजानः'–इति सामान्येन श्रवणादवगम्यते न तदानीं प्राच्यां दिशि प्रबलः कश्चिदासीन्नरपतिः, प्रत्युतासन् क्षुद्र-राजानो बहव इति। अत एव श्रुत मवैवान्यच "प्राच्यो यामता बहुलाविष्टाः"–इति (३. ४. ६.)। तदानीं प्राग्देशीय-पार्वत्य-जनपदो य आसीदासंहिताकालात् प्रसिद्धोऽद्यतन-नयपालादि-किरातनगरादिकः तत एव सोमवर्म्मीणां क्रयो विहितश्चैतरेयके--"प्राच्यां वै दिशि देवाः सोमं राजानमक्रीणन्"–इति (१. ३. १.)। तदेवं पाणिन्यागमतोऽपि हि येषां कान्यकुब्जा-हिच्छत्रादीनां प्राच्यभूमौ विद्यमानतोपलभ्यते (१. १. ७५.), ऐतरेयकाले तु तेषा मासीद्दा प्राबल्य मेवेति।

दक्षिणस्यां तदानीं मासीदेकं सत्वद्राज्य मेव सत्वतसमम्, तदे-वेदानीं छत्रपुरित्याख्यायत इति स्यात्। तदेतत् "आदत्त यज्ञं काशीनां भरतः सत्वता मिव"–इति (शत० ब्रा० १३. ४. ५, २१.) गाथावचनश्रुतेरैतरेयतोऽपि बहुप्राचीनतरं भरताधिकृतमासी-दिति गम्यते। स्याद् दौष्यन्ति-भरतेन तत् स्वायत्त मिति तद्वं-श्याधिप मेव भरता इत्येवोच्यन्ते, दृष्टश्चैतदैतरेयेणापि भरताधिकृत मेवेति। अतएवेहान्यत्र श्रुतम्—"तस्मादाद्यैतर्हि भरताः सत्वनां वित्तिं प्रयन्ति"–इति (२. ४. १.)। अन्यच्च "तस्मादिदं भरतानां पशवः सायङ्गोष्ठाः सन्तो मध्यन्दिने सङ्गविनी मायन्ति"–इति (३. २. ६.)। अनयोः श्रुतिवचनयोः 'आयन्ति' 'प्रयन्ति'–इति वर्त्तमानकालिकप्रयोगदर्शनात्, 'इदम्'–इत्यङ्गुल्या निर्द्देशा-च्चावगम्यतेतेनैतरेयेण अत्र मपि दृष्टं स्यात्तद्राज्यं भरतवंशीय॰

शासनायित मिति। तत्र च दौष्यन्तेर्भरतस्य राज्ञः कीर्त्तिकथा बहुप्राचीना ह्यत्वैवैतरेयादिषु गाथेति व्यपदिष्टा। तद्यथैतरेये (८. ४. ९.) "तदप्येते श्लोका अभिगीताः—

हिरण्येन परीवृतान् कृष्णाञ्छुक्लदतो मृगान्।
मष्णारे भरतोऽददाच्छतं बद्वानि सप्त च।
भरतस्यैष दौष्यन्तेरग्निः साचीगुणे चितः।
यस्मिन्त्सहस्रं ब्राह्मणा बद्वशो गा विभेजिरे।
अष्टासप्ततिं भरतो दौष्यन्तिर्यमुना मनु।
गङ्गायां वृत्रघ्नेऽबध्नात् पञ्चपञ्चाशतं हयान्।
त्रयस्त्रिंशच्छतं राजाश्वान् बध्वाय मेध्यान्।
दौष्यन्तिरत्यगाद्राज्ञो मायां मायवत्तरः।
महाकर्म भरतस्य न पूर्वे नापरे जनाः।
दिवं मर्त्य इव हस्ताभ्यां नोदापुः पञ्चमानवाः"—इति।

शतपथेऽप्येव मेव श्रूयते प्राय — "तदेतद् गाथयाभिगीतम्" —इत्यादि (१३. ५. ११-१४.) द्रष्टव्यम्।

प्रतीच्यां दिशि तु नैक मप्यासीत् सुमहद् राज्यम्, अपाम-स्मृत्तरभागे पर्वतपादप्रभूमिपाः 'नीच्याः' केचनाप्रसिद्धराजानस्तथा दक्षिणभागेऽप्यपाच्याः केचन, मध्यभागे त्वरण्यभूमय एवेत्युक्त मिद नीच्यानां मपाच्यानां मिति। इहैवान्यत्र श्रूयते "प्रत्यञ्चि दीर्घा-रण्यानि भवन्ति"—इति (२. ४. ६.), "प्रतीच्योऽप्यापो बह्व्यः स्यन्दन्ते"—इति (१. २. १.) च।

उदीच्यां तु हिमवद्गिरिदण्डस्योत्तरे भागे आर्यावर्त्ताद् बहि विद्यमानावपि आर्यनिवासजनपदाविमौ उत्तरमद्राः उत्तरकुरवश्चेति श्रूयेते। एवं हि गम्यते— यथैव हिमवतो दक्षिणभूभागोऽपि

मार्यावर्त्ती मद्रदेश-कुरुदेशाभ्या मासीत्तदानीं द्विधा विभक्तः, तथैव हिमवत उत्तरभूभागश्च स मद्रदेश कुरुदेशाभ्या मासीत् पुरा द्विधैव विभक्त इति। आर्य्यावर्त्तीयमद्रदेशादुत्तर इति उत्तरमद्र इत्युच्यते स., आर्य्यावर्त्तीयकुरुदेशादुत्तर इति उत्तरकुरुश्चेति। आर्य्यावर्त्तीयप्रत्यन्तदेशेभ्यः परस्तात् ये देशा महादेशा वा सन्ति, न तेषु मन्वाद्युक्तार्य्यानार्य्यनामादिसम्भव इत्युक्तं पुरस्तात् (१७ पृ० १६ पं०)। तथा च तद्देशवासिना मार्य्यत्व मनार्य्यत्वं वा नैव विचार्य्य मस्ति; परमुत्तरकुरुदेशस्य नैसर्गिकसौन्दर्य्यस्वास्थ्यकरत्वादितः, तद्देशवासिनाञ्च शान्तिप्रियत्व-तपःपरायणत्वादिदैवस्वभावदर्शनात्, पुण्यमयत्वं देवचैत्रत्व मजेयत्वञ्च। तथाहि ऐतरेयकाम्--"देवक्षेत्रं वै तन्न वैतन्मर्त्त्यो जेतु मर्हति"-इति (८. ४. ८.)। तेषा शान्तिप्रियत्वादिस्वभाव एवाजेयत्वे हेतुः प्रबलः। तदुक्तं महाभारतीय सभापर्वणि चार्जुनदिग्विजये—

"तासु सान्त्वेन निर्जित्य मानसं सर उत्तमम्। ऋषिकुल्यास्तथा सर्वान् ददर्श कुरुनन्दनः॥ × × ×॥ तत एव महावीर्य्या महाकाया महाबलाः। द्वारपालाः समासाद्य हृष्टा वचन मब्रुवन्॥ पार्थ। नेदं त्वया शक्यं पुरं जेतुं कथञ्चन। उपावर्त्तस्व कल्याण पर्य्याप्त मिद मच्युत॥ × × ×॥ न चापि किञ्चिज्जेतव्य मर्जुनात्र प्रदृश्यते। उत्तराः कुरवो ह्येते नात्र युद्धं प्रवर्त्तते॥ × × ×॥ अथेह पुरुषव्याघ्र। किञ्चिदन्यच्चिकीर्षसि। तत् प्रब्रूहि करिष्यामो वचनात् तव भारत॥ ततस्तानब्रवीद्राजन्नर्जुनः प्रहसन्निव। पार्थिवत्वं चिकीर्षामि धर्मराजस्य धीमतः॥ न प्रवेक्ष्यामि वो देशं विरुद्धं यदि मन्यसे। युधिष्ठिराय यत् किञ्चित् करपण्यं प्रदीयताम्॥ ततो दिव्यानि

वस्त्राणि दिव्यान्याभरणानि च । चर्माजिनानि दिव्यानि तस्य ते प्रददुः करम्"–इति २८ अ० ४–१६ श्लो० । तदिदं महानगर मप्यसि सीम्नदितयुच्यते, स्वीत्र्ययदिति तदर्थः; एतद्देशीया हि प्रायशः स्थूलनाभिकोदरजङ्घा भवन्ति ।

अस्ति चान्यः कुरुवर्षः; स नूनं मेरुसन्निहितः, 'ग्रान्तचित्ववर्ग'-प्रभृति 'सुधीर्य'-देशान्तः, योऽय मद्यतन-सेण्टपिटर्स्बर्गादिसाई-बेरियान्त । तस्य स्वर्गत्वेन वर्णनञ्च महाभारतरामायणादौ बहुत्र । तद्यथा महाभारतीयानुशासनपर्वणि— "अहो सह शरीरेण प्राप्तोऽस्मि परमां गतिम् । उत्तरान् वा कुरून् पुण्यानथवाप्यमरावतीम्"–इति (५४. १६) । पुनस्तत्रैव—"नैवेशिकं सर्वगुणोपपन्नं ददाति वै यस्तु नरो द्विजाय । स्वाध्यायचारित्रगुणान्विताय तस्यापि लोकाः कुरुपूत्तरेषु"–इति (५७. ३२.) ।

अथ यदिह 'मध्यमाया दिशि'–इति, ततो गम्यते कुरुपञ्चालादयश्चत्वार एवैते प्रदेशा स्तदानी मासन् मध्यदेशाः, आर्यावर्त्तस्य मध्यभूभागा इति यावत् । तत्र च यच्छ्रुतो वशो देशः, स एव स्यात् महाभारतादिप्रसिद्धः 'शिवि' । किञ्च यत्ते 'ध्रुवाया प्रतिष्ठायाम्' इति द्वे पदे तद्विशेषणे श्रूयेते, ततो ज्ञायते चात्रैव मध्यार्यावर्त्ते तदानीन्तनसम्राजा मासीद्राजधानीति । एवञ्च कुरु पञ्चाल शिवि सौवीरप्रदेशात्मकमध्यदेशत स्वात प्राच्यादयो दिशोऽभीष्टा इत्यपि नानवगतम् ॥

तदेव मैतरेयकाले हिमवद्दक्षिणपार्श्वनिम्नस्थ' किरातजातिनिकेतनं किरातनगर मेवासीत् आर्यावर्त्तस्यास्य पूर्वप्रत्यन्तः, दक्षिणस्या भरतवंशीयाधिष्ठान सत्वद्राज्य मप्यासीदार्यावर्त्तान्तर्गतम्, पश्चिमस्या गिरिगिरिनदीयासमसीमानां प्राचुर्यवर्णनात् गान्धार-

देशादिभ्यः परस्तादप्यासीदार्यावास इति गम्यते, उत्तरस्मात्कुरु-कुरूणामजेयत्वेन वर्णनात् ततोऽर्वागेवासीदार्यावर्त्तोत्तरसीमेति च प्रतीयत एवेति। एकत्र चात्र श्रुतम्—"त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्तीति" ( ७. २. ६ )। तत्र 'एते'-इति इदं शब्दव्यवहारादैतरेयकालेऽप्यासन्निमा जातय इति, 'उदन्त्या'-इत्युक्ते प्रत्यन्तवासिनोऽनार्या इति च गम्यते। तथा चैषां देशाना मनार्यभूत्वाभिधानादेषा मन्तःस्थिताः प्रदेशा एवासन् तदानी मार्यभूमय इति सुवचम्। अन्ध्रजातयोऽधुना दाक्षिणात्येषु प्रसिद्धा, पुण्ड्र इति त्विदानीं 'दीनाजपुर'-इति प्रत्न-तत्त्वानुसन्धित्सवो वदन्ति, एवं शबरपुलिन्दमूतिबाः विन्ध्यगिरि-वासिनो म्लेच्छजातिविशेषास्त्वद्यापि प्रायः प्रसिद्धा एव। तदेवं न तदाप्येष आर्यावर्त्तः प्राप्या मतिविस्तृत इत्येवास्माकम्॥

अथ श्रूयते चैतद् विदेघमाथवाख्यानं शतपथे १ का० २ प्र० ३ ब्रा० १०–१८ क० "विदेघो ह माथवोऽग्निं वैश्वानरं मुखे बभार ०—० स इमाः सर्वा नदीरति ददाह सदानीरेत्युत्तराद् गिरेर्निर्धावति तां हैव नातिददाह, तां ह स्म तां पुरा ब्राह्मणा न तरन्त्यनतिदग्धाग्निना वैश्वानरेणेति। तत एतर्हि प्राचीनं बहवो ब्राह्मणास्तद्धाक्षेत्रतरमिवास स्रावितरमिवास्वदितमग्निना वैश्वा-नरेणेति। सदु हैतर्हि क्षेत्रतरमिव ०—० सैषाप्येतर्हि कोसल-विदेहानां मर्यादा, ते हि माथवाः ०—० स मे मुखान्निरपादीति"-इति। एतस्मादाख्यानात् स्पष्टमभिगम्यते, विदेहनामकमैथिल-जनपदस्यानतिप्राचीनार्यभूत्वम्। परं न तदापि दक्षिणमगधस्यार्या-वर्त्तत्वं सम्पन्नं सम्भावये वयम्; अनतिप्राचीनपातञ्जलमहाभाष्य तद्दिमार्यावर्त्तलक्षणतोऽपि दक्षिणमगधात् प्रत्यगेवार्यावर्त्तत्वप्रतीतेः।

अपीह शतपथे ( १२. ८. ३. ३. ) "बह्लिकः प्रातिपीयः कुरुराज"–इति श्रवणात् पश्चिमस्या तावदप्यासीद् बाह्लीकस्यार्या वर्त्तत्व मिति च स्वीकार्यम् । पाणिन्यागमेऽपि आयुधजीविवाचि पर्श्वादिगणे पठितो बाह्लीकः (पा० सू० ५. ३. ११७.)। "कम्बोजाल्लुक्"–इति ( पा० सू० ४. १. १७५.) काम्बोजग्रहणञ्च दृश्यते। तथ सिन्ध्वादिगणेऽपि पठितः कम्बोजः (पा० सू० ४. ३. ८३.)। गणपाठोऽपि पाणिनिनैव कृत इति सिद्धान्तितं भगवता पतञ्जलिना ( १. १. ३४. )। महाभारतेऽपि वर्णितौ काम्बोजबाह्लीकौ ( द्रो० प० ११७, १५५ अ० )।

अथ भगवता यास्केनापि "कम्बोजाः कम्बलभोजाः कमनीयभोजा वा ; कम्बलः कमनीयो भवति"–इति कम्बोजशब्दो निरुक्तः ( २. १. ४. )। "प्रकृतय एकेषु भाष्यन्ते विकृतय एकेषु"–इत्याद्युक्ता तदुदाहरणाय प्रोक्तं चैतत्—"शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते ०—० विकार मस्यार्येषु भाषन्ते शव इति , दातिर्लवनार्थे प्राच्येषु , दात्र मुदीच्येषु"–इति ( २. १. ३, ४. )। पातञ्जले महाभाष्ये पस्पशाया मप्येव मेव ।

अपि तत्र पातञ्जले आर्यावर्त्तस्यास्य चतुःसीमनिरूपण मेव कृतम् ।— "कः पुनरार्यावर्त्तः ? प्रागादर्शात् , प्रत्यक् कालकवनात् दक्षिणेन हिमवन्तम् , उत्तरेण पारियात्रम्"–इति ( २. ४. १०. )। अत्राह तट्टीकाकारः कैय्यटः— "आदर्शादयः पर्वतविशेषाः"–इत्येव । "जनपदतदवध्योश्च (पा० सू० ४. २. १२५.)" –इतिसूत्रस्योदाहरणभूतं यदिदं आदर्शक इति पदं लभ्यते, इतो ज्ञायते अस्यादर्शनामा कश्चित् सीमपर्वत इति। सोऽयमादर्श स्यादञ्जनपर्वत , तत्पदनिरुक्तितस्तथैवायगतेः। स चेदानी

सुर्लेमानिल्युच्यते। स हि शतपथब्राह्मणप्रसुतश्वेतगिरिरेव दक्षिणांश:। एवञ्च पतञ्जलिकालेऽपि स एव श्वेतगिरिरिवासीदार्यावर्त्तस्य पश्चिमसीमेत्यनुमान मपि न स्यादसङ्गतम्। तदानीन्तनार्यावर्त्तस्य पूर्वसीमभूतं कालकवनं तु स्यात् धर्मारण्यत: प्राग् विद्यमानं दक्षिणमगधस्य प्रत्यक् स्थितं बकासुर-(बक्सर)-प्रदेशीयं ताड़कवनम्। पुरासीत् तद्धि कालयवनाध्यितम्; तत्प्रभृत्येव तस्य कालवनं कालकवनं वेति च नाम सम्पन्नम्। हरिवंशोल्लिखितस्य विष्णुपुराणोक्तस्य च (५.२३.५.) तस्य कालयवनस्य मगधराजजरासिन्धुमित्रत्वेन वर्णनात् कालवनमगधयो: सामीप्यानुमानं स्याच्च सङ्गतम्। अत एव प्राच्यमगधस्य अनार्यवासत्वेनोल्लेखोऽपि तस्यैतस्य पतञ्जले: सङ्गच्छते। तथाहि— "हम्मति: सुराष्ट्रेषु, रंहति: प्राच्यमगधेषु; गमि मेव त्वार्या: प्रयुञ्जते"–इति (म० भा० पस्पशा०)। तदेवं तदापि सौराष्ट्रजनपदस्य, तथेदानीं पटनेत्यादिप्रसिद्धानां प्राच्यमगधीयकुसुमपुरादीनाञ्च आर्यावर्त्तसीमतो बहि:स्थितिरासीदित्यत्र नास्ति संशयलेशोऽपीति।

अथात्र भगवान् मनुस्त्वाह— "आ समुद्रात्तु वै पूर्वादा समुद्राच्च पश्चिमात्। तयोरेवान्तरं गिर्योरार्यावर्त्तं विदुर्बुधा:" –इति (२. २२.)। 'तयो: गिर्यो:' पूर्वोक्तयो:'हिमवद्विन्ध्ययो:। तदित्थं पूर्वापरसमुद्रद्व्याप्त्येव देशो मनो: सम्मत:। तत्र पूर्व: स्यात् गङ्गासागरसङ्गम:, अपरस्तु सिन्धुसागरसङ्गम:। स एव आर्यावर्त्त: ब्रह्मावर्त्तमदेशो ब्रह्मर्षिदेशो मध्यदेशो यज्ञिय देशश्चेति चतुर्विधत्वेन वर्णितस्तेन तत्प्रान्तभूमीनां म्लेच्छभूत्वमुररीकृतञ्च। तद्यथा—

"सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते॥

कुरुक्षेत्रञ्च मत्स्याश्च पञ्चालाः शूरसेनकाः ।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः ॥
हिमवद्विन्ध्ययोर्मध्यं यत् प्राग् विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः"–इति
(म० २अ० १७, १९, २१, २३श्लो० )।

अत्र हि ब्रह्मावर्त्त-ब्रह्मर्षि-मध्यदेशास्तु 'यज्ञियाः' यज्ञकार्यार्ह-भूमय एव, तत्र नास्ति विचारणा; निर्दिष्टेभ्य एभ्यो बहिरपि आर्यावर्त्तान्तर्गताः सिन्धुसौवीरकाश्मरादयो देशा अपि यज्ञानुष्ठानार्ह-भूमय इति 'यज्ञियदेशाः' उच्यन्ते। एतस्मादार्यावर्त्ताद् बहिःस्थिताः "किराता यस्यान्ते, पश्चिमे यवनाः स्मृताः। आन्ध्रा दक्षिणतो वीर! तुरस्कास्त्वपि चोत्तरे"–इति (वा० पु० ११, ४०), एव-मादिकाः खोरासान तुरस्क-पूर्ववङ्गोत्तरवङ्गान्ध्रदेशादयोऽस्यार्या-वर्त्तस्य प्रान्तभूमयः सर्वाः एव म्लेच्छदेशाः; किन्त्वार्यावर्त्तान्तर्गता दक्षिणवङ्गाङ्गप्राच्यमगधादयोऽपि कृष्णसारमृगहीनत्वेनायज्ञियत्वात् म्लेच्छदेशा एव।

नन्वत्र तु "तयोरेवान्तरं गिर्य्योः"–इति मनूक्तेः पूर्व्वसागरं यावदेव विन्ध्यगिरेः प्रवर्त्तितत्वादार्यावर्त्त एव यज्ञिय आर्यावर्त्तः स्वीकार्यः, ततो बहिरार्यावर्त्तत्वेऽपि न त्वस्ति यज्ञियत्वमिति म्लेच्छभूमत्वमेव। अत एवाङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च गमननिषेधः सङ्गच्छते; सचिन्त्यमेतदत्र, मनुनैव "एतान् द्विजातयो देशान् संश्रयेरन् प्रयत्नतः"–इति (२, २४.)। 'एतान्' ब्रह्मावर्त्तादीनित्यर्थः। तर्थेषु देशेषु पुरा नासन् ब्राह्मणा इति प्रवादोऽप्युपपद्येत। एत

ऽपि प्राच्यमगधेषु पटनाप्रभृतिषु, श्रङ्गप्रदेशेषु भागलपुरादिषु चान्यत्र आगताः शाकलद्वीपिब्राह्मणाः, तथा वङ्गे ष्वत्र कान्यकुब्जादागता एव ब्राह्मणा राढि-वारेन्द्र वैदिका इति ख्याता वसन्ति, कलिङ्गसौराष्ट्रयोरप्येवम्।

कलिङ्गप्रदेशागम्यत्वं तु पाणिनिसूत्र तदवार्त्तिक-तन्महाभाष्येभ्यश्चावगम्यते। तथाहि— अस्ति पाणिनेरेकं सूत्रं "परोक्षे लिट्"–इति (३. २. ११४), अत्र चास्ति कात्यायनवार्त्तिकमिदम्— "अत्यन्तापह्नवे च"–इति, लिट् वक्तव्य इति शेषः, उदाहरणञ्चास्य दर्शितं पतञ्जलिना— "नो कलिङ्गान् जगाम"–इति विवृतं च तत् कैयटेन— "न केवलं तद्देशस्य भोजनादेरपह्नवो यावत् तद्देशगमनादेरपि"–इत्यादि। एष च कलिङ्गप्रदेशोऽप्यार्यावर्त्तादहिरेव संस्थितो मेदिनीपुरादारभ्य तैलङ्गदेशान्तं यावद् विस्तृतः। पुरा आसीदयं मुख्यकलिङ्ग-मध्यकलिङ्ग-कलिङ्गेति त्रिधा विभक्त इति त्रिकलिङ्गनामा। त्रैलिङ्गनाम तु तत एव समुद्भूतम्, अप्युक्तलिङ्गनामत एवोत्कलनामप्रसिद्धिरित्याहुरैतिह्यासिकाः। अतएव श्रौचेवे वर्णविचाराभावस्तद्दोषनिवृत्तये चोत्तरत्र समये केनचिदुत्कलखण्डप्रणयनञ्चेति सम्भाव्यते।

अथामरसिंहोऽपि प्राच्योदिच्यमध्यम्लेच्छेति चतुर्विभक्त मार्यावर्त्त देशसंस्थान मश्लोकयत्। तद्यथा— "आर्य्यावर्त्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः"–इति (२, १, ८)। तत्र "शरावत्यास्तु योऽवधेः। देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः। प्रत्यन्तो म्लेच्छदेशः स्यान्मध्यदेशस्तु मध्यमः इति (२. १, ६, ७)। प्राक्सहितो दक्षिणो देशः 'प्राग्दक्षिणः', एवं पश्चिमसहित उत्तरदेशः 'पश्चिमोत्तरः', अन्तं प्रति गतः 'प्रत्यन्त" सीमान्त-

प्रदेश इति तदर्थः । तदिदं समरसिंहकाले 'शरावती'-नाम नद्येवासीत् प्राच्योदीच्ययोः सीमेति गम्यते । अत एवोक्तं काशिकावृत्तौ ( पा० सू० १ १ ७५ )—

"प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा ।
विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती"-इति ।

अथात्र युरोपीयभ्रातरः केचन सम्प्रवदन्ते । श्रूयते हि ऋक्संहितायाम्— "अनु प्रत्नस्यौकसो हुवे"-इति ( १ ३० ८ ), तेनावगम्यते भारतवर्षप्रदेशीयार्याणामादिपुरुषाणां धाम आसीत् पुरा क्वचिदन्यत्रैवेति । तच्चार्याणामादिनिकेतनमस्यैवासियाखण्डस्य मध्यभागस्थितयोर्बेलुरताग्मुस्तागपर्वतयोः पश्चिमपार्श्वगताधित्यका भूमिः, तत एव भारतीयाः पारसिकाः शर्मण्यादयश्च विकीर्णा भारतादिष्विति ।

वयमत्र ब्रूमः,—भारतीयपारसिकशर्मण्यादीनामार्यमूलत्वे नैकजातिप्रभवत्वन्तु स्यात् स्वीकार्य्यम्, किन्त्विहौपनिवेशिका वयमिति नैव मन्तव्यमस्माकम्, स्वदेशस्वत्वहान्यादिदोषत्रयप्रसङ्गात् तेषां तन्मतपोषकप्रमाणहेतूनामतिदौर्बल्याच्चेति ।

ते त्रयो दोषाः खल्वेते—नैष देशोऽस्माकं पैतृकोऽपि तु यथा भवद्यवनानामधिकृतोऽद्य पेलण्डीयानाम्, तथैव पुराप्यस्मत्पूर्वपुरुषैरत्यानार्यान् विजित्य बलाद् गृहीत इति । एतेनास्मिन् देशेऽस्माकं मूलस्वत्वं कदापि नास्ति, प्रत्युत यथा पूर्वं यवनानां जयस्वं स्वत्वमस्यत्र अद्य पेलण्डीयानाम्, तथैवैकदास्माकमपि बभूवेत्येवेति प्रथमो दोषः । तदनु अस्मद्वत् एवास्माकं यहूद्यादीनामिवौपनिवेशिकत्वमिति द्वितीयो दोषः । स्वार्यानुरोधन

स्वावासकण्टकीभूताना मेतद्देशीयमूलस्वत्ववता मनार्याणा मुच्छेदनञ्चेति तृतीयः। यदि हि तेषां तन्मत मस्माक मप्यभिमतं स्यात्, तर्ह्येते त्रयोऽपि दोषा गलेकुठारन्यायेन मन्तव्या एव स्युः। न च तथा। प्रत्युत दृश्यते हि न कश्चित् स्वावासभूमेरङ्गुलभूमिस्वत्व मपि त्यक्तु मुत्सहते, तदत्र सिद्धार्यावर्त्ते चिर मासृष्टेर्निवसन्तोऽपि तद्विरुद्धप्रबलप्रमाण मन्तरा कथङ्कारं नाम पैतृकं स्वत्व मुत्सृजन्तोऽत्र दोषभावं क्षमामहे? अपि राजशासनतोऽन्याभावादितो विपुलार्थार्जनस्पृहासम्भावनादितो वा ये केचनार्या अनार्याश्च स्वदेशाद् बहिर्भूता औपनिवेशिकत्व मापन्ना आपद्यन्ते चाद्यापि, अस्तु तेषां तथात्व मदोषाय; अतथाविधाना मस्माकं विषये तेषां तथाविधजल्पनं कथं न नो हृदय व्यथयेत्? एवं दुर्बलाना माद्यानार्याणां प्राणादिसम्पीडनेनैवास्मत्पूर्वपुरुषा इह वासस्थान मालेभिर इत्यनृत मपि यद्भूतायेत, तर्ह्येव तत्कलङ्कप्रवादः कथं न भवेद् दोषायेति च हृदयवद्भिः सुधीभिरेवाकलनीयम्॥

सन्ति चात्र तेषां तन्मतपोषका येऽष्टावनुमानहेतवो लिखिताः, तेष्वेकोऽपि न विचारसह इत्यस्माकम्। तद्यथा—

(१) 'एशियाखण्डतः प्रोषिता एवार्याः कालेन सर्वत्र यूरोपखण्डादौ बभूवुः कृतवास्तव्याः,'—इत्येव मस्त्येकः प्रवादः, अतोऽवगम्यते नून मासीदार्याणा मादिवासः प्रथम मेशियाखण्डमध्यभूभाग इति तेषां तथाविधानुमानस्याद्यहेतुवर्णनम्। अत ब्रूमः—जागर्तु स प्रवादस्तेन किम्, तथा स्वीकारेऽपि न भवेदस्माकं भूस्वत्वनाशः; आर्यावर्त्तस्याप्य चैशियाखण्डीयभूभागत्वात्,—निरवभिताबाधाद् विश्वामित्रर्षिप्रवादयः। तथाहि—"त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्ति वैश्वा-

मिता दस्यूनां भूयिष्ठाः"–इति ऐ० ब्रा० ७. ३. ६ । अत एव त्वग्दोषदुष्टा भर्तृपरित्यक्ता अविसुता विदुष्यपालैव ग्रीक्देशीया अपेलो देवतेति सम्भाव्यते । तदत्र ऋ० मं० ८. ८१ सूक्तव्याख्यान परं शाट्यायनब्राह्मणं द्रष्टव्यम् ।

(२) भारतीयपारसिकैलण्डीयादीनां विभिन्नजातित्वेऽपि भाषासौसादृश्यं दरीदृश्यते, विशेषतः सर्वास्वेव भाषासु शीतर्तु-नामैकविधमेव प्रायः, तस्माच्चावगम्यते सर्वेषामेवैषामेकवंश प्रभवत्वं शीतप्रधानवासित्वञ्चेति तेषां तादृशानुमानप्रदर्शी द्वितीय-हेतुवर्णनम् । अत्र ब्रूमः— अस्त्वेषामेकवंशप्रभवत्वम्, अपि च्छीतार्यञ्च स्यात् पुरासीदेषां सर्वेषामेव हिमप्रधानैकदेशवासि-त्वञ्च ; तेन किम् ? शीतप्रधाने तस्मिन् सुवास्तुप्रदेशे हि तेषां मुक्त सर्वजातिमूलार्याणां वासस्वीकारेऽपि किं नैतच्चोपपद्यते ? उप पद्यत इति चेत् कृतं कल्पनाकल्पितसुदूरजन्मजल्पनयेति । अपि पार-सिकावेस्ताग्रन्थस्य 'वेन्दिदाद'–प्रकरणीयाद्याध्याये 'हरख्इति'–नामकस्यैकस्याभ्युदयशालिनो नगरस्य यद् वर्णनं दृश्यते, तत्तून मेतस्य सारस्वतप्रदेशस्यैव ; 'सरस्वती'–शब्दस्यैव हि पारसिक भाषायां 'हरख्इति'–व्यवहारः सर्वसम्मतः, सिद्धान्तितश्च तथा क्लार्क् महोदयेनापि ( १८६२ खृ. मु. व्या. ५६–५८ पृ० )।

(३) तत्रैव 'अवेस्ता'-ग्रन्थस्य 'वेन्दिदाद्'-प्रकरणे देशवर्णनप्रसङ्गे 'ऐर्यनम्वेजो'-नामा कश्चिज्जनपदोऽपि वर्णितो दृश्यते । हिमर्तु प्रधानश्च स इति चोल्लिखितं तत्र । स एव जनपदः पारसिकाना मादिवासस्थानं स्यात्, स्वीक्रियते च तथा तैः पारसिकैः । भारतीयपारसिकयोर्वेदनमण्डलस्यावेस्तायाः भाषासादृश्यात्, अपि-पुनश्च तयोरेकप्रभवत्वं ध्वन्यत इवेति सर्वमूलार्याणां किंवा

वासभूमिः स्यात् स 'ऐर्यनम्वेजो' जनपद इति तत्र तृतीय-हेतुवर्णनम्। अत्र ब्रूमः— अस्तु पारसिकाना मार्यवंशसमुत्पन्नत्वेनास्मद्भ्रातृत्वम्, स्याच्च स्वीकार्यं तेषा मादिपुरुषाणा मैर्यनम्वेजोवासित्वम्, न तथाप्यस्माकं तद्देशमूलत्वं भवेदुररीकार्यम्; राजाज्ञादिभिरस्मद्देशतो विताडितानां तदादिपुरुषमात्राणां तथात्वसम्भवात्। एकवंशप्रभवाना मपि हि पूर्वपुरुषाणां नानाहेतुतो नानादेशवासित्वं सम्भवत्येव, सम्भवति च तत्र केषाञ्चित् स्वदेशवासित्व मपीति सुवच मेव। अपि वा राजतरङ्गिणीवर्णितः 'आर्याणक'-देश एव 'ऐर्यनम्वेजो'-इति पारसिकनामभागासीत्, स च स्यात् केषाञ्चिदार्याणां वासभूमिः, पारसिकानाञ्चैषां तेभ्य एवोत्पत्तिः स्वीकार्येति सर्वं समवदातम्। स च देशः काश्मीरादुत्तरो हिमप्रधानोऽप्यार्यावर्त्तान्तर्गत एव। तथाहि—

"तुषारवर्षैर्बहुलैरसमकाण्डनिपातिभिः।
आर्याणकाभिधे देशे विपन्नं केचिदूचिरे"—इति (४. २६७.)।

वस्तुतस्तु ऐर्यनम्वेजोनाम नगरं नाद्य क्वचिदपि केनाप्युपलभ्यते, पुरा आसीत् तस्य विद्यमानत्वमपि नाद्य यावत् सुनिर्णीतम्; तदन्नं खपुष्पपर्यालोचनयेति।

(४) अस्ति चैव मपि प्रवादः— ग्रीक्रोमकजाति-पूर्वपुरुषाः पूर्वोत्तरदेशतः प्रोषिता इतालयादौ न्यवात्सुरिति। स एष प्रवादस्तदैव सङ्गच्छेत, यदि नासासियाखण्डस्य मध्यभूमिरेव तेषा माद्यार्याणां निकेतन मभ्युपेतेति तत्र चतुर्थहेतुवर्णनम्। अत्र ब्रूमः— पूर्ववर्णितः एवास्वादिप्रदेशोऽपीतालयादिभ्यः किञ्चिदुत्तरपूर्वेणस एवेत्यसम्मत्प्रवादोपपत्तिरुभयत्र समानैवेति।

(५) हिमालयस्योत्तरभागस्य पश्चिमप्रान्तेन काश्मीरतदभि-

न्वितत्वेन स्वर्गरूपत्वेन चेदानीन्तनानां मार्याणां स्वीकारात् तादृश स्थानस्यैतदादिपुरुषाणां वासभूतत्वं सम्भाव्यत इति तत्र पञ्चमहेतुवर्णनम्। अत्र ब्रूमः — हिमवद्दक्षिणभागस्था आर्याः तपस्साधनादिकं चिकीर्षवश्चिर मेव हिमवदुत्तरभागं गत्वा कृतकृत्या भवन्ति, इत एव तस्य पवित्रतमत्वेन वर्णनम्, न त्वादिपित्र्यवासनिबन्धन मिति। लोकातीतमहिमान्वितत्वन्तु उत्तराणां कुरूणां मजीयस्त्वादियथार्थत एव। हिमवत्पृष्ठस्य स्वर्गरूपत्वं तु पौराणिकम्, उत्तरग्रन्थमात्र तद्बीजम्। तदिदं स्फुटं प्रतिपादयिष्यामोऽष्टमे, इह चोत्तरत्र किञ्चिदिति।

(६) श्रूयते हि कौषीतकब्राह्मणे — 'उदीच्यां दिशि प्रज्ञाततरा वागुद्यते, उदञ्च उ एव यन्ति वाचं शिक्षितुं, यो वा तत आगच्छति, तस्य वा शुश्रूषन्ते इति ह स्माऽऽहैषा हि वाचो दिक् प्रज्ञाता'-इति (१ ७ ६)। तदेव कौषीतकब्राह्मणग्रन्थप्रवर्तुराचार्यस्य हिमवद्दक्षिणखण्डस्थत्वेऽपि तदादिपुरुषाणां हिमवदुत्तरखण्डवासित्वेनैवोत्तरदिक्स्तुति सङ्गच्छत इति तत्र षष्ठहेतुवर्णनम्। अत्र ब्रूमः — ऐतरेये च ब्राह्मणे समाम्नातैतदर्थिका श्रुतिः ऐतरेयकाले कुरुपञ्चालशिबिसौवीराणां मध्यदेशत्वं पूर्वं वर्णितम् (४२ पृ०)। मध्यदेशापेक्षयोद्याननगरस्योत्तरत्वं सर्वं यस्तुपञ्झिमैत्यम् मेव। एष एवोद्यानदेशो राजतरङ्गिण्यां मुञ्जानस इत्युक्तः तस्याश्च विद्यानिवासत्वेन स्तुतिरप्यवापि। स एव काश्मीरमनिविहित उद्याननामजनपदोऽवेष्टो विद्यानिलय इति कथं धावेम हिमवताऽप्युत्तर मिति।

(७) श्रूयते हि— 'तोकं पुष्येम तनयं शतं हिमाः'-इति (ऋ० मं० १ ६ ८४) आशीर्मन्त्रः। तदत्र विवेचनीयम्,

हिमर्त्तुतोऽब्दपरिगणनं तु तत्रैवोपपद्येत, यत्र प्रदेशे हिमप्रपात-स्यातिशयं विद्यते सदैव; नात्र तथोपलभ्यते; अपि त्वासिया-मध्यभूभागस्थो वेलुर्ताग्मुस्ताग्पर्वतयोरन्तरालप्रदेशस्तु नूनं तादृश इति तेषां तत्र प्रवलोऽयं हेतुः सक्षमः। अत्र ब्रूमः— "यदि हि हिमर्त्तुवाचिहिमशब्देनाब्दपरिगणनश्रवणात् हिमशब्दस्याब्दवाचि-त्वेन व्यवहाराद्वा स्यादस्मत्पूर्वपुरुषाणां हिमर्त्तुप्रधानदेशवासित्वानु-मानम्, तर्हि शरदृतुवाचिशरच्छब्देनाब्दपरिगणनश्रवणात् शर-च्छब्दस्याब्दवाचित्वेन व्यवहाराद्वा किं न स्यात् तेषां शरदृतुप्रधान-देशवासित्वानुमानम्? अस्ति तथापि श्रवणं बहुत्रैव। तद्यथा—

"तिस्रो यदग्ने शरदस्त्वा मिद्"–इति ऋ० सं० १. १२. ७२।

"शत मिन्नु शरदो अन्ति देवाः"–इति ऋ० सं० १. १४. ६०।

"शतं नो रास्व शरदो०—०उग्रामायूएंषि"–ऋ० सं० २. ३. २०।

"अश्म शतं शरदो जीवसे धाः"–इति ऋ० सं० ३, ३. ३५।

"पतिर्जीवाति शरदः शतम्"–इति च ऋ० सं० १०. ८६. ३९।

अस्मुतस्त्वार्याणां न कदापि हिमर्त्तुमात्रभोगीकत्व मासीत्, न च कदापि शरदृतुमात्रभोगीकत्वम्; अपि नाम "शर-च्छृता अस्या ओषधयो भवन्ति, शीर्णा आप इति वा"–इति यास्कोक्तेः (४. ४. ४.), शृणाति हिनस्ति प्राणिनः इति शरच्छब्द-व्युत्पत्त्या शरदृतोरस्वास्थ्यकारित्व मासीदार्याचार्यसम्मत मिति तस्यर्तोरब्दाभ्यत्व समानि तैरिति प्रतीयते। अति चैवं तस्माद्ब्दा-भ्यावयवत्वे, हिमर्तोरब्दावयवत्वं सुतरां सम्भवम्। अत एवाब्द गणनाप्रसङ्गे शरच्छब्दहिमशब्दयोरन्यतरस्य प्रयोगो बहुत्र श्रूयते वेदे, सङ्गच्छते च तयोः शब्दयोर्गौण्या वृत्त्याब्दवाचित्व मपीति।

(८) अपि श्रूयते—"उत्तरं गिरि मति दुद्राव"–इति (शत०

ब्रा० १ ८ १ )। 'उत्तर गिरिं' हिमालयम् 'अति' अतिक्रम्य उल्लङ्घ्य 'दुद्राव' द्रुतगमनं कृतवानिति च तस्य तत्सम्मतोऽर्थः। तदस्मादपि वचनात् हिमालय मुल्लङ्घ्य द्रुतगमनं सुव्यक्त मिति तेषां तादृगाशुमानिऽष्टमो हेतुः। अत्र ब्रूमः — तस्याः श्रुतेरायन्तपर्यालोचनया अतिशब्दार्थालोचनया चैतद्विपरीत पदार्थः प्रतीयते। तथाहि— "स औघ उत्थिते नाव मापेदे। त स मत्स्य उपन्यापुप्लुवे। तस्य शृङ्गे नव पाश प्रति मुमोच। तेनैत मुत्तर गिरि मति दुद्राव। स होवाच। अपीपर वै त्वा। वृक्षे नाव प्रतिबध्नीष्व। त तु त्वा मा गिरौ सन्त मुदक मन्तश्छैत्सीत्। यावद्यावदुदक समवायात् तावत्तावदन्ववसर्पासीति। स ह तावत्तावदन्ववससर्प तदप्येतदेवोत्तरस्य गिरेर्मनोरवसर्पणम्' इति पूर्व तच्छ्रुतपथ वचनम्। तदेतत्पर्यालोचनया गम्यते— कदाप्येकदा सम्भूतोऽस जलप्लावनेऽस्मादेवार्यावर्त्तीयमसुद्रादुत्थितस्य जलौघस्य हिमालय शृङ्गाधिरोहणम्, उपशान्ते च तदुपद्रवे तत क्रमादभिसर्पणञ्चेत्येवेति सत्यमतानुकूलैवैषा श्रुतिः। अत एव 'अतिदुद्राव'—इति पदस्य 'अधिजगाम'—इत्यर्थं कृतस्तद्भाष्यकृता हरिस्वामिना। वेदार्थनिर्णायायैव यास्कप्रणीते निरुक्ते त्वभिपूजितेऽर्थेऽतिशब्दो निर्णीत — 'अति सु इत्यभिपूजिते —इति (१ १ ५)। 'अतिधन'—इति, 'सुब्राह्मण'—इति च तदुदाहरणद्वयम्। अति शयोऽप्यर्थोऽप्यस्यतैयास्कीयः। अत एव 'अतिमृत्यु मेति'—इत्यादौ (श्वेता० उ० ६ १५) अतिशयोऽर्थ एव प्रतीयते, नोल्लङ्घनार्थः। "अतिरतिक्रमणे च" इति पाणिनिसूत्रस्य (१ ४ ५०) व्याख्याया प्राहैव ज्ञानेन्द्रसरस्वती— "अतिक्रमण मुचितादधिक स्यानुष्ठानम्—इति। प्रकृता श्रुतेरल्लङ्घनार्थत्वस्वीकारेऽपि हिमा

सयौत्तरवासिना तेपा दृश्याम्य हिमालयस्य उत्तरगिरित्वं कथं सम्भवेन्नामेति च तैरेव विचारणीय स्वय मिति दिक् ॥

एव मन्मत्पूर्वपुरुषाः खल्वासन् पुरा सुमेरुप्रदेशवासिन एवेति मालसिद्धान्तोऽपि वालसिद्धान्तः। तथाहि—

उत्तरमेरुप्रदेश एवास्मत्पूर्वपुरुषाणा मार्य्याणा मासीद् वास्तव्यभूरिति प्रमाणयितुं तेन निष्प्रमाणोऽपि वागाडम्बरो बहुपन्यस्तः; तत्र तु प्रमाणपरतन्त्राणा मौन मेव श्रेयः; ततो यानि तु श्रुतिवचनादीनि प्रमाणत्वेनोपन्यस्तानि, तत्रेद प्रथमं मन्यामहे वयम्— "अमी य ऋक्षा निहितास उच्चा,

नक्तं ददृश्रे कुहचिद् दिवेयु ।

अदब्धानि वरुणस्य व्रतानि,

विचाकशच्चन्द्रमा नक्त मेति॥"–इति ऋ० १.२४.१०।

ध्यादस्यैषोऽर्थस्तत्सम्मतः—'अमी' 'ये' 'ऋक्षाः' सप्तर्षय. 'उच्चा' उच्चै शिर प्रदेशे 'निहितास.' स्थापिता, दृष्टिकर्त्तेति शेष.। ते 'नक्तं' रात्रौ 'ददृश्रे' दृश्यन्ते, 'दिवा' 'कुहचित्' 'ईयु' गच्छेयु, न दृश्यन्त इति यावत्। 'चन्द्रमा.' अपि 'नक्तम्' एव 'विचाकशत्' प्रदीप्यमान 'एति' दृश्यत इति भाव'। तदेवमादीनि 'वरुणस्य' राज्ञ. 'अदब्धानि' कय मप्यविनाश्यानि 'व्रतानि' कर्माणि, श्रेयानीति। एवञ्च शिर.प्रदेशे सप्तर्षिमण्डलावस्थानं गम्यते, तच्च सुमेरावेवोपपद्यते; अत एतादृशतद्द्रष्टृणा मार्य्यर्षीणा मासीत् पुरा तत्रैवा वास इति तदभिप्राय.। यत्तु नूम'— यास्कमते ऋक्षा इति पदेनेह सर्वेषा मेव नक्षत्राणां ग्रहण मिष्टम् (नि० ३.२०); सर्वेषा मेव तेषां रात्रावेव व्योमसमानत्वात् सुमरुभ्यत एव वास

यास्कस्य तन्मतम् । अपि सुमेरुप्रदेशतो नक्षत्राणि उच्चैर्दृश्यमानानि, इतोऽपि उच्चैरेव दृश्यमानानि, कुमेरुतोऽपि तानि उच्चैरेव दृश्यमानानीति तेषां मुच्चैस्त्वं सर्वत्र प्रत्यक्षम् , किं सुमेरुत एव । न ह्युच्चैःपदेन मस्तकोपरि वर्त्तमानं भ्राम्यमाणं वा गम्यते । यद्युच्येत शतपथब्राह्मणे (२. १. २. ४.) ऋक्षशब्दः सप्तर्षिवाचकोऽपि श्रुत इति ; तत्रापि नो न क्षतिः । "उत्तरम् , उत्ततरम्" –इत्यादिनैरुक्तवचनात् ( २. ३. २ ) उच्चैस्त्वनिबन्धन मेवोत्तरनाम व्यपदेश इत्यवगमात् उच्चैरित्यस्येह सप्तर्षिपक्षे उत्तरस्यां मित्येवार्थः पर्यवस्यति ; श्रुतश्च तथा तत्रैव शतपथे तदनुपदम्— "उत्तरा हि सप्तर्षय उद्यन्ति"–इति ।

वस्तुत एव मन्त्रो वरुणविज्ञानपरस्ततो वरुणकर्मपरिचायक एव प्रधानतः ; तदस्माद् वरुणपदार्थबोधाय विलोक्यत एवैतद् बालविजृम्भितं समन्तात् । तथाहि— "रात्रिर्वरुण"–इतिश्रुतेः ( ऐ॰ ब्रा॰ ४.२.४. ) वरुणस्य रात्रिदेवत्वम् , निघण्टौ द्वादश दिव्यनामसोमकमे वरुणशब्दपाठात् सूर्यविशेषत्वञ्च , "येना पावक चक्षसा॰—॰पश्यन् जन्मानि सूर्य"–इतिश्लोदाहृतश्रुतिव्याख्यानेन भगवता यास्केनापि हि प्रतिपादितञ्च तदेव ( १२. ३. ८. ) ; एवं हि रात्रिकालिकोऽथ स सूर्य एव वरुण इति प्रतिपद्यते । एवं वरुणार्थस्वीकारेणैवोपपद्यते वरुणराजकर्तृकः सप्तर्षिप्रभृतीनां चन्द्रमसश्च प्रकाशः । परं न चैतद् वचः मद्रकृते मेरुप्रदेशवासिनाम् , तत्र सूर्यविशेषस्य वरुणस्य तदधःस्थत्वेन चन्द्रमःप्रभृतीनां प्रकाशकत्वासम्भवात् ; प्रत्युत आर्यावर्त्तवासिनां मेव सम्पद्यते । तदित्थं मेषोऽपि मन्त्रोऽस्मन्मतपोषक एव न चेति सुधीभिरेवाकलनीयम् ।

तद्द्वितीयप्रमाण मप्येव मेव। तथाहि—

अस्त्येक मष्टादशर्चं सूर्यस्तुताम सूक्तम् (ऋ० सं० १०. ८९.)। तस्य द्वितीयस्या ऋचः प्रथमार्द्धं एषः—

"स सूर्यः पर्युरू वरांस्येन्द्रो ववृत्याद्रथ्येव चक्रा"-इति।

इम मेव मन्त्रांश मवलम्ब्य सुमेरोराधाराधिवासभूतत्वं प्रमाणयितुं चेष्टितं तेन। तदुक्तम्— मस्तकोपरि रथचक्राकारेण नक्षत्राणां भ्रमणं तत्स्थाना मेव सम्भवतीति। वस्तुत स्तन्मन्त्रस्य व्याख्यानालोचनतो न तादृशतच्छायापि गम्यते; प्रत्युत तन्मतविपरीतं यत् सत्यं तदेव प्रमाणितं भवति। तद्यथा —'इन्द्रः' परमैश्वर्यादिगुणयुक्तः 'सः' 'सूर्यः' 'उरू' उरौ विस्तीर्णान्तरिक्षे 'वरांसि' पृथिव्यादिग्रहोपग्रहमण्डलानि 'आववृत्यात्' सदैव आवर्त्तयति। तत्र दृष्टान्तः— 'रथ्या चक्रा इव' यथा अक्षः मध्यस्थः सन् रथसम्बन्धीनि चक्राणि भ्रामयति, इतस्ततोविच्छिन्नपतनतस्तानि रक्षयति च, तद्वदिति। एतेन मध्यस्थित सूर्य्याकर्षणशक्तितः सर्वेषां ग्रहोपग्रहाणा मितस्ततोविच्छिन्नपतन राहित्यं भ्रमणञ्चेति विज्ञानं सुपदिष्टं भवति। पालमते तु तेषां मस्तकोपरि सूर्यस्याविद्यमानत्वादक्षरूपत्वेन सूर्यस्य मध्यस्थितित्वं कथं सङ्गच्छेतेति पक्षपातशून्याः सुधिय एव विभावयन्तु। सुव्यक्त मपि श्रुत मक्षरूपेण सूर्यस्य स्थितिवर्णनं तदुत्तरत्र—

"यो अक्षेणेव चक्रिया शचीभिर्
विष्वक् तस्तम्भ पृथिवी मुत द्याम्"-इति।

अस्यार्थः।—'यः' सूर्यः 'शचीभिः' आकर्षणक्रियाभिः 'पृथिवीम्' स्वनीचैःस्थितां भूमिम्, ग्रहमण्डलनिम्नार्द्धभागगता मिति भावः; 'उत' अपि 'द्याम्' स्वोच्चैःस्थितां सुतरां द्युस्थाम्, ग्रहमण्डलोर्द्ध

भागगता मिति भाव, 'विष्वक्' सर्वत 'तस्तम्भ' स्तम्भन वर्त्तते। तस्तम्भेति "छन्दसि लङ्लुङ्लिट"–इति सार्वकालिको लिट। तादृगस्तम्भनेन ग्रहाणा मितस्तत पतनजन्य कक्षाच्यवम वारित भवति। अत्र दृष्टान्त — "अर्त्तेणेव चक्रिया"–इति। 'चक्रिया' चक्रियौ, चक्रगती निम्नोर्द्धमान्तौ यथा 'अर्त्तेण' स्तम्भौ दृश्येते लोके, तद्वदिति॥

तत्तृतीयप्रमाणन्तु स्वसिद्धान्ताघात मेव न सहते, किन्तु सत्य सिद्धान्ताघातम्। तथाहि— यदिद श्रूयते सप्तविधसोमयागेषु अग्निष्टोमादिषु प्रातरनुवाकविधावैतरेयके— "प्रातवै स त देवेभ्यो ऽन्वब्रवीत्"–इत्यादि (२ २ ५)। एतया श्रुत्या प्रातरनुवाक पाठस्य प्रातरेव कालो व्यक्नीकृत। ततस्तादुत्तरत्र प्रातरनुवाकर्चा सङ्ख्याविधौ श्रूयते— 'सहस्र मनूच्य स्वर्गकामस्य'–इत्यादि पक्षान्तरत्वेन। स एष सहस्रर्चा पाठश्च प्रात काले कथ मिहार्यावर्त्ते सङ्गच्छेत? सुमेरुप्रदेशे तु सङ्गच्छते, तत्रोषसो मास द्वयव्यापित्वात्। तदित्थ सुषसि सहस्रर्चा पाठविधान गमयत्ये वार्य्याणा दीर्घोषसे सुमेरौ तदानी मासीद् वास इति।

अत्र ब्रूम —नैष प्रातरनुवाकविधि क्वचिदृक्संहिताया श्रुत अपि श्रूयते ब्राह्मणे त्वैतरेयकादौ, तत् किं मिद मैतरेयादिक मपि तत्रैव प्रोक्तम? तथा स्वीकारे यदिद श्रूयतेऽत्रैतरेये "धुवाया मध्य माया प्रतिष्ठाया दिशि ये के च कुरुपञ्चालाना राजान'–इत्यादि (३८पृ० २४प०), तत् कथ सङ्गच्छेत? किञ्च यदि प्रातरनुवाक पाठस्य कालो दिमासात्मको मन्येत, तर्हि प्रातःसवनमाध्यन्दिन सवनतृतीयसवनाना काला कीदृशा मन्तव्या? संवत्सरसत्रकालश्च कीदृश? इत्यादि च तेन निरूपणीय मेव। अथापरम, यदि

दीर्घाँयमे सुमेरावेव प्रातरनुवाकपाठसम्भव इति मन्येत, तर्हि युधिष्ठिरादिभिर्बाजिरावान्तैरार्यावर्त्तवासिभिरनुष्ठितेष्वश्वमेधादिषु प्रातरनुवाकाना पाठो न बभूवेति किं मन्तव्यम् ?

अन्यच्च; यथा सहस्रवार्षिकसत्रस्यासम्भवता माान्स्य मीमासाया मधिकरण मेक मारचितम्, तथैवेहोपसि सहस्रसङ्ख्याकाना मृचा पाठोऽसम्भव इति किं नात्र विचारित मित्यपि विचार्य मेवेति।

वस्तुतस्तु "महति रात्र्या अनूच्य' पुरा शकुनिवादात्"—इत्येव विधि'। 'रात्र्या' पूर्वस्यौपवसथाख्यस्य दिनस्य अग्निष्टोमीयपशुनुष्ठानयुक्तस्य या रात्रि: तस्या रात्रे: सम्बन्धिनि शेषे 'महति' अवतिष्ठमाने सति प्रातरनुवाकाख्याना मृचा पाठ आरब्धव्य, 'शकुनिवादात्' शकुनय: पक्षिण:, ते यस्मिन्नुष:काले प्रबुध्य वदन्ति ध्वनिं कुर्वन्ति, तत: 'पुरा' पूर्व मेव तत्पाठ समाप्य इत्यर्थ। अत्राह सायण'— "एतदुक्त भवति, यस्मिन् काले प्रारब्ध' प्रातरनुवाक' तमसोपघातात् पुरैव समापयितुं शक्य: स्यात्, तदा प्रारब्धव्य:"-इति (२, २ ५.)। अवश्यपाठ्य प्रातरनुवाकस्य सङ्ख्या त्रिकविंशतिरेव (ऐ० ब्रा० २ २. ६.), काम्यपाठ्यस्य तु शतादिका सहस्रान्ता। तदत्रावश्यपाठ्याना मृचा पाठस्तु प्रातरेव नून सम्भवत इति प्रातरनुवाकनामकरण मुपपद्यते। काम्यपाठ्याना शतादीना मृचा पाठस्त्वत्रोषस्यसम्भव इत्येव श्रुतं तत्र तदुत्तरम्— "अपरिमित मनूच्यम्"-इति (२. २. ७.)। "शत सहस्र मित्यादि सङ्ख्यापरिमाण परित्यज्य मध्यरात्रादूर्द्ध मुपक्रम्य सूर्योदयात् प्राचीनकाले यावतीरनुवक्तु शक्तिरस्ति तावतीरनुब्रूयात्"-इति च तत्र सायणभाष्यम्।

वस्तुतस्त्वस्ति न प्रातरनुवाकस्य सर्वदिवागाम्यत्वश्रुति —

"उदित आदित्ये प्रातरनुवाक मनुब्रूयात्; सर्वं ह्येवैतदहर्दिवाकीर्त्यं भवति"–इति (ऐ० ब्रा० ४. ३. ४.)। काम्ये बहुमन्त्रानुवाकस्य पाठपक्षे एतदेव व्याख्यानम्; नित्यपाक्षाना प्रातरनुवाकस्य मत्यल्पसङ्ख्यात्वेन प्रातःपाठस्य अवश्यम्भावित्वात् प्रातरनुवाक इति नामधेयस्यान्वर्थतापि नानुपपन्नेति सर्वं मनवदातम् ॥

उषोदीर्घत्वश्रवणपरं तदीयचतुर्थप्रमाणं मप्यकिञ्चित्करम्। तथाहि— "स ध्याप. परिपस्त्रजे"–इति (ऋ० सं० ८. ४१. २.) मन्त्रे श्रूयते "तस्य वेनीरनु व्रत मुषस्तिस्त्रो अवर्द्धयन्नभस्ताम्"–इति। तदिह उषसस्त्रित्वश्रवणात् दीर्घत्वं गम्यते, तच्च सुमेरावेव सङ्गच्छत इति तदीयम्। तत्वतस्त्विह वरुणविज्ञानोपदेशके मन्त्रे नोषस स्त्रित्व मभिहितम्, प्रत्युत 'तस्य' वरुणस्य 'व्रतम्' कर्म 'अनु'- लक्ष्य 'उष.' कालः 'तिस्र वेनी.' त्रिविधाः जरायुजाजरायुजो- द्भिज्जाः 'वेनी.' प्रजा. 'अवर्द्धयत्' वर्द्धयति इत्येवोपदिष्टम्। अन्यत्राप्यत्र च "प्रजा ह तिस्रो अत्याय मीयु."–इत्यादौ (ऋ० सं ८. १०१. १४.) प्रजानां त्रिविधत्वं श्रुत मेवेति द्रष्टव्यम्। 'अवर्द्धयत् + नभन्ताम्–इतिपदद्वयसन्धिजन्यम् अवर्द्धयन्नभन्ता मिति रूपम्; अपिवा व्यत्ययकृतं बहुवचनम्।

उषसो दीर्घत्वप्रमाणाय तेन यदिद मुपदाहृता— "कियात्या यत् समया भवति"–इति (मं० १, ११३, १०,), सैषा उषोविज्ञान सूक्तान्तर्गता उषसोऽनन्तत्वं वेदयति, न तु प्रादेशिकदीर्घत्वम्।

तथोषसः पञ्चविभागत्वाख्यानेन दीर्घत्वं सूचयितुं तस्य यत् तैत्तिरीयानुवाकस्योद्धरणम् (मं० ७. २. २०.), तदपि निरर्थकम्, तादृग्विभागस्यार्यावर्त्तेऽप्यसम्भवयोग इति।

किञ्चेद मपि विवेच्यम्,— सुमेरुप्रदेशीयोषसो दीर्घत्व

कि मायावसंवामिना मस्माक इष्वा प्रतिपाद्यते , उत तत्रत्याना मिति। इहत्याना मिति चेत् , तेन कथ सिध्येत् तत्राद्यार्याणा वास ? अथ तत्रत्याना तादृशमन्त्रस्तत्त्व प्रमेय मिति चेत , तदपि नोपपद्यते , दीर्घत्व ह्यापेक्षिक भवतीति न तत उपोऽन्तरदर्शन विरहादपि सङ्गच्छते। तत कि मेतेन उषोदीर्घत्वप्रकाशकमन्त्रान्वेषणेनेति धीपणावता तेनैव स्वय विवेच्य मिति ॥

यदिद श्रूयते— "तानीदहानि बहुलान्यासन् या प्राचीन मुदिता सूर्यस्य"—इति ( ऋ० म० ७ ७६ ३ ), तदित खलु पस कतिदिनव्यापित्व गम्यते स्फुट मिति तेषा माद्यार्याणा सुमेरुवासित्वे पञ्चम प्रमाण मित्याह। अस्माक तु नाच श्रुतौ तिल कोशावित्त मर्यतिलक प्रतीयते , प्रतीयते तु श्रद्धा मानन्त्यम् , तदिहाशेषपशेमुपीमन्तो भूमिदेवा एव प्रमाणम् ॥

उष शब्दस्यानेकात्व बहुवचनान्तप्रयोगोऽप्यत्रास्त्येक प्रमाणम् , तदिद षष्ठ स्यात्। तद्यथा तैत्तिरीयब्राह्मणे मन्त्र —

"इमा एव ता उषसो या प्रथमा व्यौच्छन्।

ता देव्य कुर्वते पञ्चरूपा। शश्वतीर्नावपृज्यन्ति।

न गमन्त्यन्तम्"—इति ( २ ५ ६ १३ )।

तत्तन्मतप्रदर्शिनो ह्येष मन्त्र पुनर्जन्मविषयो न तूषसो दैर्घ्य मावेदयति , तत् पश्चात्वेनतत्पूर्वमन्त्रावेतौ—

'पूर्व देवा अपरेणानुपश्यञ्जन्मभि । जन्मान्यवरै परााणि।

वेदानि देवा अय मस्मीति माम्।

अहं हित्वा शरीर जरस परस्तात्"—इत्येक ,

अथापर —"प्राणापानौ चक्षु श्रोत्रम्। वाच मनसि सम्भृताम्।

हित्वा शरीर जरस परस्तात्। आ भूति भूति वय मश्नवामहै"

"उदित आदित्ये प्रातरनुवाक मनुब्रूयात्, सर्वं ह्येवैतदहर्दिवाकीर्त्यं भवति"–इति ( ऐ० ब्रा० ४ ३. ४, ) । काम्ये बहुसङ्ख्याकर्चा पाठपक्षे एतदेव स्याच्छरणम्; नित्यपाठ्यानां प्रातरनुवाकर्चां मत्यल्पसङ्ख्यात्वेन प्रातःपाठस्य अवश्यम्भावित्वात् प्रातरनुवाक इति नामधेयस्यान्वर्थतापि नानुपपन्नेति सर्वं मवदातम् ॥

उषोदीर्घत्वश्रवणपरं तदीयचतुर्थप्रमाणं मप्यकिञ्चित्करम् । तथाहि— "स ञ्चप परिषस्वजे"–इति ( ऋ० सं० ८, ८१. ३. ) मन्त्रे श्रूयते "तस्य वेनीरनु व्रत मुषस्तिस्त्रो अवर्द्धयन्नभन्ताम्"–इति । तदिह उषसस्त्रित्वश्रवणात् दीर्घत्वं गम्यते, तच्च सुमेरावेव सङ्गच्छत इति तदीयम् । तत्वतस्त्विदं वरुणविज्ञानोपदेशके मन्त्रे नोषस स्त्रित्व मभिहितम्, प्रत्युत 'तस्य' वरुणस्य 'व्रतम्' कर्म 'अनु'- लक्ष्य 'उष' काल. 'तिस्रः वेनीः' त्रिविधा अरायुजाजरायुजो- द्भिज्जाः 'वेनीः' प्रजा 'अवर्द्धयत्' वर्द्धयति इत्येवोपदिष्टम् । अन्यत्रान्यत्र च "प्रजा ह तिस्रो अत्याय मीयु"–इत्यादौ ( ऋ० सं ८, १०१. १४, ) प्रजानां त्रिविधत्वं श्रुत मेवेति द्रष्टव्यम् । 'अवर्द्धयत् + नभन्ताम्–इतिपदद्वयसन्धिजन्यम् अवर्द्धयन्नभन्ता मिति रूपम्, अपिना व्यत्ययकृत बहुवचनम् ।

उषसो दीर्घत्वप्रमाणाय तेन यदिय मृगुदाहृता— "कियात्या यत् समया भवति"–इति (सं० १, ११३, १०), सैषा ऋषोविज्ञान सूत्रान्तर्गता उषसोऽनन्तत्वं वेदयति, न तु प्रादेशिकदीर्घत्वम् ।

तथोषसः पञ्चविभागत्वाख्यानेन दीर्घत्वं सूचयितु तस्य यत् तैत्तिरीयानुवाकस्योद्धरणम् (सं० ७. २. २०.), तदपि निरर्थकम, तादृगविभागस्यानार्यावर्त्तेऽप्यक्षुण्णप्रयोग इति ।

किञ्चेदं मपि विवेच्यम्,— सुमेरुप्रदेशीयोऽस्मै दीर्घत्व

–इत्यतस्तृतीय एवैष य पूर्वं प्रदर्शित। तथा च पूर्वजन्मनि दृष्टा एवेमा उपस इत्येव तत्फलितार्थं सम्पद्यते। एवञ्च न कथ मप्येष मन्त्र सुमेरुप्रदेशीयोषसो बहुदिनव्यापित्वे प्रमाण भवितु मर्हतीति स्फुटम्। किञ्च तत्रत्योषसो बहुदिनव्यापित्व तत्रत्याना कथ मवेदधिगन्तव्य मित्यपि विचार्य मेव॥

यदप्युक्त सूर्यस्य उपसश्च सुमेरुतो दक्षिणोदयदर्शनादेव "पुर श्चरति दक्षिणाया (ऋ० स० ३ ५८. १)"-इति दक्षिणापुरत्व व्यपदेशोऽपीति। तन्नैतत् सप्तम प्रमाण मपि मज्जमानस्य वह मानतृणावलम्बन मिवाकिञ्चित्करम्। उत्तर =ऊर्द्धस्य सूर्य, दक्षिणा=अध स्था पृथिवी, इत्येव मर्वत्र ज्ञेयम्। सुमेरु वासिना तु येव दिगस्माक पश्चिमा, सैव स्याद् दक्षिणा, यस्या दिशि सूर्योदयस्तस्या एव प्राक्त्वनियमात्। पुर, पुरस्तात्, प्राक्, पूर्वेत्यभिनार्था, सूर्योदयाद्यानिबन्धन एवात्र भवत्यस्माक दिग् व्यवहार प्राक्प्रत्यगुदगर्वागितीति। श्रुतिसिद्ध (ऐ० ब्रा० १ २ ३) युक्तिगम्यश्चैतत कि तेन स्वमतप्रतिपादनव्यग्रतया विस्मृत मिति विचारयन्तु धीमन्त एव॥

अहो चित्र मिदम्। "सप्तर्षिहस्तावचितावशेषाणधोविवस्वान्" –इति कुमारसम्भवश्लोकोऽपि तेन स्वमतप्रमाणत्वेनोपन्यस्त, तत् कि मद्ययुगीयस्य "अस्त्युत्तरस्या दिशि देवतात्मा हिमालयो नाम नगाधिराज"–इत्यादिना कालिदासस्यापि सुमेरुस्थत्व मन्तव्यम्? तदिद तदीय मष्टम प्रमाण मस्थानतीव विस्मापयतीत्यत्र मौनावलम्बन मेव श्रेय॥

"दीर्घतमा मामतेय"–इत्येतद्दृगुक्तौ 'दीर्घतमा'-इति शब्द पद मपि स्वमतप्रमाण ममानि तेन। तदिद तदीय नवम

एव पितृयानम्, अपि अन्तरिक्षस्थं यमनामवायुविशेषाधिष्ठितं चन्द्रलोकमपरं वा तत्सन्निहितं पितृलोकं त्यक्तस्थूलदेहा अर्चि-रादिमहाया गच्छन्ति येन, स एव मार्गः पितृयानाख्यः। तिलको-दाहृतमन्त्राभ्याचैव मेव बुद्ध्यते। तत्र प्रथम एषः—

"अतारिष्म तमसस्पार मस्य प्रति वां स्तोमो अश्विनावधायि।
एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुम्"—इति
ऋ० सं० १. १८३. ६।

अस्यार्थः— हे 'अश्विनौ' प्रातरुद्यमानप्रथमयुग्मदेवौ। 'देव-यानैः पथिभिः' द्युस्थैः स्वमार्गैः 'इह' पृथिव्याम् 'आयातम्' उद-यताम्। तथा चेह युवयोरुदयात् 'अस्य तमस.' रात्रिजन्यान्ध-कारस्य 'पारम्' पर्यन्तम् 'अतारिष्म' उत्तीर्णाः स्मः। 'वां प्रति' 'स्तोम.' कृतज्ञतासूचकं स्तोत्रम् अस्माभिः 'अधायि'। 'इषम्' अन्नम्, 'वृजन' मनोबलम्, 'जीरदानु' जरान्तव्यापिनं सुदीर्घं जीवनञ्च 'विद्याम' लभेम, वय मिति। एवञ्चाश्विनोरुदयकाले जायतः स्तोत्रगानं कुर्वतोऽश्वादीनि अवश्यम्भावीनीति समर्थनेन-स्तथा कर्त्तव्य मित्युपदेशः फलितः।

अथापरः ऋ० सं० १, २, १८ पूर्वार्द्धे.—
"परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात्"—इति।

अस्यार्थः— हे 'मृत्यो।' 'ते' 'देवयानात् इतरः यः स्वः' पन्थाः, 'तं' 'पन्था' पन्थानम् 'अनु'-लक्ष्य 'परेहि' इति। अत्र मृत्युर्माध्यमिको वायुविशेषः, आन्तरिक्षो मार्ग एव पितृयानाख्य-स्तस्य स्वकीयः। यथा भूस्थाना मग्निः राजा, द्युस्थानां सूर्यः, तथैव मध्यस्थानां पितॄणां मृत्युर्यमो वा राजेति। यायजूकानां स्वर्गगामिनां पितॄणा मग्निरादिमाहाय्येन पितृयान मेव गन्तव्यम्।

"आ न इन्द्रो शतग्विनम"—इति च ऋ० सं० ८ ,६७ ६।

वस्तुतस्त्वेवमादिषु खमतपोषकत्वदर्शनं तस्य नूनं पाण्डु रोगिणा सर्वत्र पीतदर्शनं मिवेति मन्यामहे वयम्॥

यच्च सिद्धान्तितं तेन,—वैदिकमन्त्रादिषु देवयानशब्दतः सूर्यस्य सुमेरुयान मुत्तरायण मवगम्यते, पितृयानशब्दतश्च सूर्यस्य कुमेरु गमनं दक्षिणायनम, तथा च सुमेरुप्रदेशेषु देवयानेऽह्न सम्पद्यते पितृयाने च रात्रिरतो देवयानपितृयानशब्दान्वितमन्त्राणां तत्रैव रचना सम्पन्नेति तत्रार्यादिवासश्चेद मेवादश्च प्रमाण मिति। एतच्च सर्वं स्यात् प्रेक्षावता परीक्षणासह मेव। तत्रैवम,— मध्यभूभागस्थ एव हि उत्तरायणदक्षिणायने परिदर्शनीये, उत्तरदक्षिणकेन्द्रभू वासिनान्तु नैते समधिगम्ये, तत् किन्तु देवयानपितृयानशब्दार्थतो दिवानिशेत्यादिसमुद्भावनादिविचारे णेति। यच्चोक्त मेतस्या एव पंक्ती देवयानपितृयानशब्दान्वितमन्त्रद्रष्टारो बभूवुरिति स्तोकाः येऽपि देवयानार्थम् सुमेरुगमनमार्गं, सुमेरोश्च देवस्थानत्वकथन मार्यपूर्वपुरुषाणामनिवन्धनगौरवसूचक मिति, एतदप्यसङ्गतम् शतपथब्राह्मणादौ ( १४ ८ १ ) देवयानपितृयानशब्दयोरपर विधार्थप्रतीतेः, सुमेरोर्देवस्थानत्वे स्वीकृतेऽपि तत्रास्मदादिपुरुषाणा वासस्य हेतुघनाभावाच्चेति स्वच्छधिया ध्यातव्यम्।

वस्तुतस्तु 'दिवा' द्युम्या 'अर्चिःप्रभृतयो 'यान्ति' गच्छन्ति येन मार्गेण, स एव भूमण्डलादिभ्रमणमार्गो देवयानाख्य, तथा 'दिवा द्युम्या रश्मय पृथिव्यादौ गच्छन्ति, येर्मार्गैस्तेषाञ्च सुतरां देवयानसञ्ज्ञा, तैरेव मार्गैः पृथिव्यादितोदेहान्तरिता मिनो विनिर्मुक्तस्थूलदेहा जीवा रश्मिभिराकृष्यमाणा द्युलोकं गच्छन्ति। तथैव पितृस्थानानां चन्द्रमण्डलादीनां भ्रमणमार्ग

एव पितृयानम्, अपि अन्तरिक्षं यमनामवायुविशेषाधिष्ठितं चन्द्रलोकमपरं वा तत्तद्विहितं पितृलोकं त्यक्तस्थूलदेहा अग्नि-रादिसहाया गच्छन्ति येन, स एव मार्गः पितृयानाख्य । तिस्रको-दाहृतमन्त्राभ्याचैव मेव वुद्यते । तत्र प्रथम एषः—

"अतारिष्म तमसस्पार मस्य प्रति वां स्तोमो अश्विनावधायि ।
एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुम्"—इति
ऋ० सं० १. १८३. ६ ।

अस्यार्थः— हे 'अश्विनौ' प्रातरुद्यमानप्रथमयुग्मदेवौ । 'देव-यानैः पथिभिः' द्युस्थैः सुमार्गैः 'इह' पृथिव्याम् 'आयातम्' उद-यताम् । तथा चेह युवयोरुदयात् 'अस्य तमसः' रात्रिजन्यान्ध-कारस्य 'पारम्' पर्यन्तम् 'अतारिष्म' उत्तीर्णाः स्म । 'वां प्रति' 'स्तोमः' कृतव्रतापूर्वकं स्तोत्रम् अस्माभिः 'अधायि' । 'इषम्' अन्नम्, 'वृजनं' मनोबलम्, 'जीरदानुं' जरान्तव्यापिनं सुदीर्घ-जीवनञ्च 'विद्याम' लभेम, वय मिति । एवञ्चाश्विनोरुदयकाले जाग्रतः स्तोत्रगानं कुर्वतोऽस्मादीनि चवश्यम्भावीनीति समर्थनेन-स्तया कर्त्तव्य मित्युपदेशः फलितः ।

अथापरः ऋ० सं० १, २, १८ पूर्वार्द्धं,—

"परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात्"—इति ।

अस्यार्थः— हे 'मृत्यो ।' 'ते' 'देवयानात् इतरः यः स्वः' पन्थाः, 'तं' 'पन्थां' पन्थानम् 'अनु'-लक्ष्य 'परेहि' इति । अत्र मृत्युर्माध्यमिको वायुविशेषः, पान्तरिक्षो मार्ग एव पितृयानाख्य-स्तस्य स्वकीयः । यथा भूस्थाना अग्निः राजा, द्युस्थानां सूर्यः, तथैव मध्यस्थानां पितॄणां मृत्युर्यमो वा राजेति । यायजूकाना स्वर्गगामिनां पितॄणा मग्निरादिमाश्रयेन पितृयान मेव गम्यम् ।

संहितायामन्यत्रान्यत्र चैवं श्रुतम्। तद्यथा ऋ० १०.२.७--
"पन्थामनु प्र विद्वान् पितृयाणं द्युमदग्ने समिधानो वि भाहि"
हे 'अग्ने।' 'पितृयाणं विद्वान्' त्वं 'समिधान' सन् 'द्युमत्'
यथा स्यात् तथा 'प्रविभाहि' इति तत्संक्षेपार्थः। एतेनाग्निशिखाना
पितृयानगामित्वम्, तदनु अनुष्ठितयागाना स्वस्वपार्थिवदेहा
नाञ्चेति ध्वनितम्॥

श्रुतं हि तैत्तिरीयब्राह्मणे-- "एकं वा एतद् देवाना मह
यत् संवत्सरः"-इति (३. ८. २२. २)। अथैतन्मूलकं स्यादे
तन्मनुवचनम् (१.६७)--

"दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः।
अहस्तत्रोदगयनं रात्रिः स्याद् दक्षिणायनम्"-इति।
तदेवमादिवचनानि तूपपद्यन्ते सुमेरावेवेत्यतः स एव देवलोको
मन्तव्यः। अत एव महाभारतीयवनपर्वणि--

"उदीचीं दीपयन्नेष दिशं तिष्ठति वीर्यवान्।
महामेरुर्महाभाग शिवो ब्रह्मविदां गतिः"
--इत्यादिकया च वर्णिता (१६३अ० १२श्लो०)।
तानीमान्येव वचनान्यवलम्ब्य प्रथमं सुमेरोर्देवनिलयत्वं सर्वसम्मत
मिति प्रमाणयितुं चेष्टितं तेन, ततस्तत्रार्यपितृपुरुषाणां वास
आसीदित्यत एव देवनिलयत्वेन स मेरुर्वर्णित इति सिद्धान्तितं
निराबाधमिवेति।

अहो बत! तस्यैष सिद्धान्तोऽपि दरिद्राणां मनोरथ
इवैव प्रतिभात्यस्माकम्। न हि युक्तमस्य देवानां निलयस्य
सुमेरुवासिनां निलयत्वावगतौ किञ्चिन्मात्रं मस्ति, अस्ति च
ततोऽन्यत्र। मनुमहिमायान्तु षण्मासयवत्सरकालमितं भवति देवानां

महर्षिलुलिखित मिति तु सत्यम्, परं न तत्र सुमेरोर्गन्धोऽप्यस्तीत्यपि नासत्यम्। एवं महाभारतादौ सुमेरुवासिना देवत्व वर्णित मिति-च सत्यम्, परं मिहापि न तेषां देवानां मासवर्ष-यनवत्सरमानान्यभिहितानीत्यपि नासत्यम्। श्रातव्यानि तु सुमेरु-प्रदेशीयदेवशब्दवाच्यानां तानि च भवन्ति कथम्भूतानि? आयुःपरिमाणञ्च तेषां तदव्दमानतो भवति कीदृश मित्यपि ज्ञेय मेव। यद्येवं "शतायुर्वै पुरुषः"-इत्यादिश्रुतिसिद्धं शतायुष्टं तत्प्रदेशवासिनां तद्देशीयाब्दमानेनैव भवति चेत् कथं न तत्र श्रुतिविरोधः सम्पद्यते? वेदेषु हि यच्छ्रूयते मानवानां पूर्णायुः शतवर्षाणीति तन्नून मस्मद्देशीयाहोरात्रमानत एवेति सर्व मेवैतच्चिन्त्य मेव। किञ्च यथा सुमेरुप्रदेशेषु "दैवे रात्र्यहनी वर्षम्"-इति मनुवचन मुपपद्यते, तथैव कुमेरावपि किं नोपपद्यते इत्यपि विचार्यम्। विचारितेषु चैतेषु सुमेरोरार्याद्यावासत्वनिर्णयाय तेन प्रदर्शितं प्रमाणपारायणं कुतो न जलमध्यगतलवणखण्डवद् विलीयेतेत्यपि ध्येयम्।

महाभारतादौ यद् वर्णितं सुमेरोर्देवलोकत्वम्, तत्त्वापेक्षिक मिति चेह वर्णयिष्याम एवाऽस्मि। वस्तुतो यथेह सौरजगति भूलोकान्तरिक्षलोकद्युलोकविभागास्तथैवास्मच्छरीरेष्वपि मन्यन्त एव शारीरविद्भिरस्मद्देशीयैः। एव मग्निवायुसूर्यज्योतिषां प्रधानतो भूरादीनि स्थानानीति स्वीकारकारिणोऽपि वय मिहैकत्र भुव्येव किं तेषां विद्यमानतां न स्वीकुर्महे? भुवि तेषां सत्त्वित्वस्य कथा तु दूरे चास्ताम्, भौमपदार्थेष्वस्मच्छरीरादिषु च सर्वत्रैव तेषां यथायथा मेव देवानां सत्ता स्वीकुर्महे एव। तदेवं यथास्य सौरजगत ऊर्ध्वभागे स्वर्गस्थितिः स्वीक्रियते, तथैवास्यां पृथिव्या मपि

वङ्गादिदेशत ऊर्द्धस्थाः काश्मीरादयो वङ्गादिदेशीयानां स्वर्गाः, तत ऊर्द्धस्थाः कैलास-गन्धमादन-रावणह्रद-मानससरोवरादयः काश्मीरीयादीना मपि स्वर्गाः, ततोऽपि ऊर्द्धस्था. सुवीर्यादिप्रदेशाः शाल्मलिद्वर्गादयश्च रावणह्रदादिवासिना मपि स्वर्गाः, तेभ्योऽप्यूर्द्धतन. सुमेरुप्रदेशस्तु सर्वभूवासिनां स्वर्ग एवेत्यत्र कः संशयः। अपि हि पृथिव्या उत्तरकेन्द्रस्योपरिभागे भुवस्य संस्थानदर्शनात् तत्केन्द्र भागस्योर्द्धत्वम्, तत एव तस्योत्तर इति व्यपदेशश्चेति सिद्धान्तः सर्ववैदिकसम्मतः। अत एव महाभारते उदीच्यां देवनिलयो वर्णितः, अपाच्यां यमनिलयश्च, एव मन्यत्रान्यत्र च। तदित्थं सुमेरुप्रदेशस्य तस्य स्वीकृतेऽप्यपेचिकदेवनिकेतनत्वे न सिध्यति तत्रार्य्यावास इति ध्रुवम्॥

यदपि स्वमतपोषिकेत्युक्ता मत्कृता सामटीपण्येका तेनानुमता, तदपि तथैव। पश्यतु तावत्,—अस्ति सामोत्तरामन्त्रः "समानो अध्वा स्वस्रो"–इति ( सा० स० ८. ३. १४. ३.), तत्रत्यात 'सुमेके'–इति पदम्; विवरणकृन्माधवाचार्य्येण तद्व्याख्यायां 'संवत्सरे दक्षिणायने रात्रेर्वृद्धिः', उत्तरायणे त्वह्नः'–इत्य लेखि, मयैवेव पङ्क्तिस्तत्र स्वकीयटीपन्या प्रकाशिता। सुमेरुप्रदेशवासिना मेव दक्षिणायने प्रसरति रात्रि., उत्तरायणे च तथा दिन मिति तद्दर्शनपरैवैषा ऋगित्याह स धीमान् वालगङ्गाधरः। तत्त्वतस्त्वेतदार्य्यावर्त्तीययोरेवाहोरात्रसमान्योर्वर्द्धनकालप्रकाशने एव तस्याः पङ्क्तेस्तात्पर्य्यम्, दक्षिणायने हि वर्द्धत एवेह रात्रिमानम्, तथोत्तरायणे च दिवामान मिति। किञ्चात्रैव मन्त्रे यच्छ्रूयते 'समानो ध्वा स्वस्रोः'–इति, भगिनीरूपयोः रात्र्यहनोः मध्यमार्ग एक एव, येनाकाशमार्गेणैषा निर्गच्छति तेनैव रात्रिरपीति

तदय । तदेव मिद स्वप्रद्दष्टाश्रुतपूर्वरन्नोड़रणाय वेदाविस्त्रादि जलधिप्लवमानस्याश्रयहीनस्य तस्य कुशकाशावलम्बनं सर्वथा निरर्थक मेवेति किमु तत्रास्ति मोच्य मिति दिक् ॥

अथैवम् "अनु प्रत्नस्यौकसो हुवे ( १. ३०. ८. )"—इत्यादि श्रुतिगम्य मार्य्याणां प्रत्नौकस्त्वं कतमस्य प्रदेशस्य स्यामन्तव्य मिति चेत्, अत्रोत्तरन्तु "स चार्य्यावासः पूर्वं तावत् हिमवत्पृष्ठस्य दक्षिण भागे सुवास्तुप्रदेशे एवासीत्"—इत्यादिनोक्त मिवेव द्रष्टव्यम् (२२पृ० १८प० )। अपि "अनु प्रत्नस्यौकसो हुवे"—इत्युक्यवचनमात्रेण किं सर्वेषा मेवार्य्याणा मादिवासोऽन्यत्र क्वचिदासीदित्यनुमानं स्यात् सङ्गतम्, किं स्यात् तन्मन्त्रद्रष्टुरेवेति च विवेच्यम् । अस्माभिस्तूक्तं पुरस्तात् 'जह्नुप्रदेशस्य पुराणौकस्त्वाभ्नान मिदं व्यक्तिगत न तु सार्वजनीन मिति च वेदितव्य मिति ( २५ पृ० २३प० )। तथा चास्य मन्त्रस्य द्रष्टु' शुन शेपस्येव पूर्ववास आसीद् जाह्नव्या मूले जह्नूनाञ्चाधिपत्ये ( ऐ० ब्रा० ७.३. ६. ) जह्नुसुन्याश्रम-कान्तारे ; तत एव हरिश्चन्द्रपुत्रो रोहित. तं क्रीत्वा सारस्वतप्रदेश मानीतवान् । तदाख्यान मैतरेयके ७. ३ १—६ युतम् । जह्नोस्तदाश्रमारण्य त्वद्यापि जाह्नवप्रदेश इति गङ्गाप्रभवे हिमवत्पृष्ठे प्रसिद्धम् । तत एव जाह्नवप्रदेशात् गङ्गायाः प्रकाशदर्शनाद् गङ्गायाश्चापर नाम जाह्नवीति । तदियम् "अनु प्रत्नस्यौकसो हुवे"—इति श्रुति. सिद्धान्तपक्षेऽपि सुसङ्गच्छत एव ।

अपिवा हिमवत्पृष्ठस्थौकोनामनदीतीरभूमय एव प्रत्नौकस ; तत्र चासीत् केषाञ्चिदार्य्याणां पुरा वास इत्यपि सुवच मिति ॥

इदानीं मेषार्य्यावर्त्तभूमिं पश्चिमत उत्तरतश्च क्रमात् सद् चिन्ता दक्षिणस्याश्राय. पूर्ववदेव, पूर्वस्यान्तु बङ्गपुण्ड्रतैलुत्कल राढ-

गौड वङ्ग नरक प्रदेशा आर्य्यावर्त्तान्तर्गता पुण्यभूमय एव गण्यन्ते, अतोऽत्रत्यवाङ्गालाचाय्य यूरोपादीना म्लेच्छदेशत्व मत्त्वा तत्र गन्तु न हृदयेनोत्सहन्ते। कालो हि बलवत्तर इति॥

अथाद्य प्रसङ्गत इद मप्यत्र वक्तव्य मस्ति,— वैदिककाल विदितार्य्यावर्त्तीयार्य्यानार्य्यमात्राणा शिक्षणाद्याभ्युदयिकार्थं मेवैषा त्रयी विद्या प्रादुर्भूता, न त्वन्यदेशीयानाम्, अन्यतद्देशीयनगनगर नदीग्रामसीमामात्राणा वर्णनश्रुते। यदि हि सर्वदेशीयमानवाना हितायैवैषोपदिष्टा स्यात, तर्हि नून मिह सर्वदेशीयभूधरादीना मप्युल्लेखो दृश्येतेति। किञ्च यदि पार्थिवसर्वदेशायैवेषेति स्वाभन्त व्या, तर्हि मङ्गलादिसर्वग्रहोपग्रहस्थितजीवार्यथतायस्या कि न मन्तव्या? अपि नाम, यथास्य सौरजगतो हितार्थताऽस्यास्त्रयी विद्याया, किन्न तथा ऽपरेषा मपि अनन्तसौरजगता मिति च भवेद्ध ध्येयम्। अत इद पुनर्ब्रूम — वैदिककालिका र्यावर्त्तप्रभववशीया आर्या आपश्चायप्रभावाय येऽस्मिन्नार्यावर्त्ते वा दाक्षिणात्ये वान्यवाऽन्यत्र वा यत्र कुत्रचिदासन्, तेषा मेव सर्वेषा मैहिकामुष्मिकाभ्युदयायैवैषा त्रयी विद्या, नान्यार्थेति। सूचित चैतदिह (१७ पृ० १७५०) पुरस्तादप्येति सङ्क्षेप॥

अथ प्रकृत मनुसराम। एतस्मिन्नेवार्यावर्त्ते ऽप्यैतरेयस्यासीद वास इति खीकृतेऽपि तदानीन्तनार्यावर्त्तस्वरूपेऽभिज्ञातेऽपि, कतम स्मिन् प्रदेशे स उवासेति निर्णयोऽसम्भव इव प्रतिभात्यस्माकम्, वक्ष्यमाणप्रकारेणास्य पाणिनियाम्यादिभ्योऽतिप्राचीनत्वनिर्णयात्। एव मपि तत्र श्रूतेऽतियत्नेऽवगम्यते स्याद्दृषद्वतीतटसन्निहिते क्वचित् प्रदेशे इति। अत एवैकत्र ऐरावतीपारदृष्टान्त – "यथा सैरावती नाव पारकामा समारोहेयु –इति (६, ४ ५)। इह 'सा इति

द्वितीयैकवचनस्य मौ रूपम्, ता मित्यर्थः। सायणेन तु मेरावती मित्येकं पदं नाव मित्यस्य विशेषणं कृतम्, समुद्र मित्यध्याहृतञ्च। तच्च रोचतेऽस्मभ्यम्; अकृतेऽध्याहारेऽपि सम्पन्ने ऽर्थेऽध्याहारस्यानौचित्यात्, समुद्रस्यैवं सर्वदैव नावा तरणं सर्वदेशीयानां सर्वेषा मनुपलब्धाद् दृष्टान्तयोस्तुल्यलाभावाच्चेति। सैषा नदी संहिताकाले परुष्णीति प्रसिद्धासीत्, तदुक्तं निरुक्तकारेण "इमं मे गङ्गे"-इति मन्त्रस्य व्याख्यानावसरे "इरावतीं परुष्णीत्याहुः"-इति (८. ३. ५.)। तदेव मन्त्रेवार्यावर्त्ते इरावत्या नद्याः सन्निधौ कस्मिंश्चिज्जनपदे स विरराज महिदास ऐतरेय इति सिद्धम्॥

---

(४)

अथ कः कालोऽस्यैतरेयस्येति विचार्यम्। श्रूयते हि ऋक्संहितायां चतुर्दशर्चं सूक्त मिदम्— "प्रैते वदन्तु प्र वयं वदामः"-इति (१०. ९४. १—१४.)। तदिदं सर्वचरनामजनपदे अर्बुदनामर्षिणा दृष्टम्। तदाहैतरेयः— "देवा ह वै सर्वचरौ सत्रं निषेदुः, ते ह पाप्मानं नापजघ्निरे। तान् होवाचार्बुदः काद्रवेयः सर्पऋषिर्मन्त्रकृत्"-इति (६. १. १.)। तस्मिन् सर्वचरौ अर्बुदोदासर्पणी, नामैका प्रपदासीत्। प्रपद्=जलप्रपातो निर्झरो वा। ऐतरेयकालेऽपि सा प्रपदासीत् प्रसिद्धा। तदुक्तं तदुत्तरम्— "तदाप्येतर्ह्यर्बुदोदासर्पणी नाम प्रपदस्ति"-इति। सैषा प्रपत् यास्ककालात् पुरैवाभवद् विलुप्तेति गम्यते, अन्यथा तदानीन्तनं तन्नाम निरुक्तेनैव तेन, यथा विपाशः। तथाहि— "आर्जीकीये शृणोह्या सुषोमया"

-इति (ऋ० म० १० ७५ ६) ऋग्‌ग्रथव्याख्यावसरे निरुक्त तेन— "आर्जीकीया विपाडित्याहु ०—० पूर्वं आसीदुरुञ्जिरा"-इति (निरु० ८ ३ ५)। तदेवम्, यास्कसमये या नदी विपाडिति प्रसिद्धा, सैवासीत तन्मन्त्रकाले आर्जीकीया, तत पुरा उरुञ्जिरेति च व्यक्तम। एव मेकस्या एव नद्या कालभेदात त्रिधा प्रसिद्धिर्दर्शिता, नात्र तया ऋवुदोदासर्पस्यास्ताल्कालिक नामादिक किमप्युक्तम, इतोऽवगम्यते तत पुरैव सा विलुप्ता, विभिन्न नामहेतुतोऽपरिचेया वाभूदिति। तथा चाय मैतरेयो निरुक्त कृतोऽभ्राद् यास्कात् पूर्वतन। उपलभ्यते चेत ऐतरेयतोऽपि बहूनि वचनान्युद्धृतानि यास्केनेति। तद्यथा— 'यस्यै देवतायै हविर्गृहीत स्यात् त मनसा ध्यायेत वषट करिष्यन्निति ह विज्ञायते"-इति निरु० ८ ३ ७, एतत्त्वाम्नात मैतरेये ३ १ ८।

भगवता पणिनिमुनिना यद्याय मितरागब्द शुभ्र दिगणे पठित (४ १ ११३), यत्र सम्पद्यते इतराया अपत्य पुमानैतरेय इति, गणकारश्च पाणिनिरेवेति ध्वनित पूर्वापरावरेतिसूत्रभाष्ये, अतोऽवगम्यते अय मैतरेय पाणिनितोऽपि पूर्वतन इति। अपि नडादिगणे (पा० सू० ३ १ ८८) आश्वलायनशब्द मूलस्य अश्वलशब्दस्य पाठाचावगम्यते तदेव, आश्वलायनाशाय पूर्वतनइतिसिद्धान्तात्। सूत्रितञ्चैतत् 'छन्दोगौक्थिकयाज्ञिक बह्वृचनटाञ् ञ्य"-इति (पा० ४ ३ १२९)। अनेनैव सूत्रेण छन्दोगाना धर्म्म आम्नायो वेत्यर्थे सिध्यति छान्दोग्य मिति पदम्, तथा च छान्दोग्यात् परभवत्व पाणिनेर्न मन्तव्यम्, श्रूयते च तत्र छान्दोग्ये "तद्विद्वानाह महीदास ऐतरेय"-इति (५ १६ ७)। इतोऽप्यसन्दिग्ध मस्य पाणिनिपूर्वजत्वम्।

कल्पकृदाश्वलायनोऽपि नून मैतस्मादैतरेयात् परतन , तत्र यहुत्र ऐतरेयनामश्रुते.। तद्यथा —"अन्तरेण हविषी विश्वु मुपाश्वैतरेयिण."—इति आश्व० श्रौ० सू० १. ३. १२. पुन: ३. ६. ३, १०. १. १३ इत्यादीनि च।

पञ्चशाकलशाखाप्रवक्तृभ्य. शिशिराद्याश्वलायनान्तेभ्य: पञ्चभ्य-श्राय मैतरेय. पूर्वतन ; इत्येतुतमन्त्राणा तत्रादर्शनात्। तदिद मनुपदं प्रतिपादयिष्याम शाखाविचारप्रसङ्गे ।

एतेन यत् सिद्धान्तितं केनचित् पाश्चात्येन विदुषा—"इहैतरेये 'पारिक्षितस्य जनमेजयस्य'—इति—( ७. ५. १. ) श्रवणात् स्यादय मैतरेयो जनमेजयाख्य राज्ञ परभव."—इति, तन्न समस्तम्। वस्तुत एतन्नामश्रुतित एव अर्जुनपौत्रस्य परिक्षिन्नाम बभूव, बभूव च तथा तत्पुत्रनाम जनमेजय इत्येव स्यात् सर्वसामञ्जस्य मिति।

अथ यदत्र श्रूयते ( ३. ४. ५. )—

"तदेषाभियज्ञगाथा गीयते—

यदस्य पूर्व मपरं तदस्य यद्वस्यापरं तदस्य पूर्वम्।

अहेरिव सर्पण शाकलस्य न विजानन्ति यतरत् परस्तादिति" —इति। तदेतेनास्य शाकल्याचार्यात् परभवत्वं स्पष्टम्। एष च शाकल: शकलस्यानन्तरापत्यं नूनम्, गोत्रे तु "गर्गा दिभ्यो यञ् (पा० ४. १. १०५)"—इत्येतेनैव भाव्यम्, तथाच सम्पद्यते शकलस्य गोत्रापत्य पुमान् शाकल्य इति। मुद्रिते ऐतरेयारण्यकभाष्ये ( ३. २. १, ) यदृ दृश्यते 'शकलस्य पुत्र: शाकल्य.'—इति, तद्यात् गोत्रविवक्षयैव; अनन्तरापत्यविवक्षया यत्नोऽप्रवृत्ते.। अपि वा मुद्राशोधकप्रमादत एव तत्र तथा पाठ: सम्पन्न.: 'शकलस्य पौत्र:'—इति, 'शाकलस्य पुत्र.'—इति, 'शाक-

ल्यस गोत्र '-इति वा स्यात् तत्रत्यपाठो विशुद्ध । ये तु शाकल्य शिष्या शिशिरादय, ते चासन् शाकला एवोच्यमाना , छान्तेऽपि विवक्षिते "गोत्रे लुगचि '-इति ( पा० ४ १ ८९ ) गोत्रप्रत्ययस्य यञो लुगविधानात्। पर नात्र यज्ञगाथाया तेषा मन्यतमस्य नामग्रहण सम्भाव्यते , कथ हि स्यादैतरेयतोऽतिप्राचीनगाथायाम ऐतरेयोत्तरभवस्य शाकलस्य नामश्रवण मिति। तेषा मैतरेयपर भवत्व तिद्वैवोपरिष्टादुपपादयिष्याम ।

"अपत्य पौत्रप्रभृति गोत्रम"-इति ( ४ १ १६२ ) पाणि न्युपदेशात शकलस्य गोत्रापत्यस्य तु शकलपौत्रस्य, शकलप्रपौत्रस्य, शकलाच्छततमाधिकपुरुषस्य च स्वीकार्य मेव, तदेव शकलगोत्र इति विवक्षिता सर्व एव पुरुषा शाकल्य इत्याख्याता भवन्ति। अत एव बह्वृक्प्रातिशाख्ये 'शाकल्यस्य'-इत्येतन्मात्रोक्ति प्रसि द्धस्य पदकारस्यैव शाकल्यस्य बोध स्यादिति क्वचित 'स्थविरस्य शाकल्यस्य'-इत्युक्तम ( १अ० २प० ८व० ), क्वचित् ( १ ४ १ ) 'शाकल्यपितु '-इत्युक्तम् , क्वचिद्विशेषणञ्च 'व्याडिशाकल्य गार्ग्या '-इति ( ३ १ ३ )। तदत्र व्याडिशाकल्यगार्ग्या इत्य त्रातिप्रसिद्धस्य पदकारस्य शाकल्यस्य ग्रहण भवति, शाकल्यपिते त्युक्त्या धास्यैव ग्रहण मिष्यते, स्थविरविशेषणविशिष्टस्तु ततोऽपि प्राचीन कश्चिद्बुद्धते। एव यत् श्रूयते शतपथब्राह्मणे—"अथ हैन विदग्ध शाकल्य पप्रच्छ कति देवा याज्ञवल्क्येति"-इत्यादि ( १४ ६ ९ १ ), सोऽय याज्ञवल्क्यसमसामयिक शाकल्योऽन्य एव। पद्यप्रचलिताया शाकलान्यतमाया आश्वलायन्या शाखाया प्रवर्त्तकाश्वलायनस्याचार्ययाभवदपर शाकल्य । त इमे सर्व एव शाकल्या प्रदर्शितगाथाम्नातशाकल्यात् परतना प्रतीयन्ते।

तत्र स्थविरात् शाकल्यात्, विशेषणशून्यात शाकल्याच्च नून मत्र परभव, एतदारण्यके तदुभयोरेव नामश्रवणात । तथाहि— 'अथ शाकल्यस्य''–इत्यादि ३आ० १अ० २ख०, तत्र "प्राणो वंश इति स्थविर शाकल्य ३आ० २अ० १ख०"–इति। किञ्चात्रैवार ण्यके (३ १ ३) श्रूयते—"पृथिव्यायतन निर्भुजम्, दिव्या यतन प्रतृण्णम, अन्तरिक्षायतन मुभय मन्तरेण"–इति, तत्रस्त्रि भुंजादिस्वरूपबोधनाय च श्रुत मिदम्—"यद्धि सन्धि विवर्तयति, तन्निर्भुजस्य रूपम, अथ यच्छुद्धे अक्षरे अभिव्याहरति, तत् प्रतृ णस्य, अग्र उ एवोभय मन्तरेणोभय व्याप्त भवति"–इति। 'निर्भुज शब्द संहितावाची, प्रतृण्णशब्द पदवाची, उभयमन्तरेणेत्यनेन क्रमो विवक्ष्यते'–इति चाह तद्भाष्ये सायण। तदेव पदपाठप्रादु र्भावात क्रमपाठप्रादुर्भावाच्च परतनोऽय मत्र कोऽस्ति सशय। पदकारस्त्वेक शाकल्य एव। तथाहि "वने न वायो" इति निगम व्याख्यानावसरे निर्णीत मिद भगवता यास्केन—"वेति च य इति च चकार शाकल्य"–इत्यादि (६ ५ ५)। क्रमप्रवक्ता त्वभवद् 'बाभ्रव्य'। तथाहि बह्वृचप्रातिशाख्यम—"इति प्र-वाभ्रव्य उवाच च क्रमम्"–इति (२अ० ५प० ६व० २श्लो०)।

तदित्थ मेष सहिदास ऐतरेयोऽयमप्रचलितशाखाप्रवक्तृ शाक लाश्वलायनस्याचार्यात शाकल्यात् प्राक्तनोऽपि पदसंहिताप्रवक्तृ शाकल्यात् परतन, अपीह (७ २ ११) यदिद श्रूयते— "पूर्वा पौर्णमासी मुपवसेदिति पैङ्ग्य मुत्तरा मिति कौषीतकम्"–इति, तदाख्या पैङ्ग्यकौषीतकाख्या मपि परभव इति च सिद्धम्॥

———

(५)

अथेदानीं विचार्यं मस्ति, कीदृशान्यासन् तदानीन्तनाचारव्यवहारविज्ञानानीति। तत्र प्रथमं तावत् तेषा माचारानालोचयितुं प्रवृत्ता वयं बहूना माचारपार्थक्याना मूलं जातिपार्थक्य मुपलभामहे, अतस्तज्जातिपार्थक्य मेव प्रथमं समासतो वर्णयामः—

यथा गोत्वोष्ट्रत्वमनुष्यत्वादयो जातयो निसर्गजा इति आकृतिग्रहणा भवन्ति, न तथा ब्राह्मणत्वादयः; ब्राह्मणत्वादयस्तु सामाजिकानाम् ऐहिकाभ्युदयिककार्यव्यवहारसौकर्य्याध्यात्माद्युन्नतिमिहार्थाः पूर्वं गुणकर्मानुसारतः पूर्वसामाजिकैः कल्पिताः। तदेतदिहापि श्रुतम्— "देवविशः कल्पयितव्या इत्याहुस्ताः कल्पमाना अनु मनुष्यविशः कल्पन्त इति"—इत्यादि १. २. ३.। तथा चाध्ययन मध्यापनं यजन मसन स्तवन मुद्गानं ब्रह्मत्वं मन्त्रणादान मुपदेशदानादिकञ्चेति मुख्यानि मुखकर्माणि च येषा ममाजिपूपलभ्यन्ते, तेषा मेव ब्राह्मणजातिः कल्पिता। क्षत्रियादीना मप्येव बलादिप्रकाशकबाह्वादिभिरौपम्य तत्तज्जातिकल्पनाबीजम्। तदेव श्रुत मृक्संहितायाम् १०. ९०. १२—

"ब्राह्मणोऽस्य मुख मासीद्बाहू राजन्यः कृतः।

ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत"—इति।

एवञ्च प्राचीनतमजातिविभागाः श्रेणिविभागा एव गम्यन्ते। अत एव देवतिर्यङ्‌ङ्गिच्छन्दःस्तोममन्त्राणा मपि सर्वेषां जातिविभागाः समासाताः। तद्यथा देवानाम्—

"ब्रह्म वै देवानां बृहस्पतिः"—इति तै॰ सं॰ २. २, ८. १।

एवमादिषु ब्रह्मशब्दार्थो ब्राह्मणः; तथाहि—

"ब्रह्म हि ब्राह्मणः"—इति च श॰ ब्रा॰ ५. १, १, ११।

"अग्ने ! महाँ असि ब्राह्मण ! भारत !"–इति तै० ब्रा० ३.५.२।
अन्यत्रान्यत्र च–"ब्रह्म ह्यग्निः"–इति श० ब्रा० १.५.१.११।

"ब्रह्म वै बृहस्पतिः."–इति श० ब्रा० ३.८.१.११।

'तच्छ्रेयोरूप मत्यसृजत चत्रं', यान्येतानि देवत्रा चत्राणि; इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति०—०स विश मसृजत, यान्येतानि देवजातानि गणश आख्यायन्ते; वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति०—०स शौद्रं वर्ण मसृजत पूषणम्"–इति श० ब्रा० १४.४.२.२३, २४, २५।

तिरश्चां जातिविभागो यथा—

"ब्रह्म वा अजः", "चत्रं वा अश्वः", "वैश्यश्च शूद्रश्चानु रासभः"

–इत्यादि श० ब्रा० ६.४.४.१२—१५।

उद्भिदां जातिविभागो यथा—

"ब्रह्म वै पलाशः."–इति श० ब्रा० १.१.१.४।

"चत्रं वा एतदोषधीनां यद् दुर्वा; चत्रं राजन्यः" ऐ० ८.२.४।

स्तोममन्त्राणां जातिविभागो यथा—

"ब्रह्म वै स्तोमानां त्रिवृत्, चत्रं पञ्चदशः,०—०

विशः सप्तदश, शौद्रो वर्ण एकविंशः"–इति ऐ० ८.१.४।

त्रिवृत्पञ्चदशसप्तदशैकविंशाः सामवेदीयस्तोममन्त्राः।

छन्दसां जातिविभागो यथा—

"गायत्रश्छन्दसा (ब्राह्मणः)", "त्रिष्टुभश्छन्दसा (चत्रियः)"

–इत्यादिरन्यो द्रष्टव्यः ऐ० ७.४.५, ६।

तैत्तिरीयसंहितायाम्त्वेकत्रैव स्तोमदेवताच्छन्दस्साममनुष्य पशूनां श्रेणीविभाग आम्नातो द्रष्टव्यः (७.१.६–८.)। तथाच त्रिवृत्स्तोम अग्निदेव गायत्रीच्छन्दो-रथन्तरसाम ब्राह्मणमनुष्य छाग-

पशूना मुख्यत्वेनैकार्थ्ये गीत्वम, पञ्चदशस्तोम इन्द्रदेव त्रिष्टुप्छन्दो बृहत्साम राजन्यमनुष्य मेषपशूना बलवत्त्वेनैकार्थ्ये गीत्वम, सप्तदश स्तोम विश्वेदेव जगतीच्छन्दो वैरूपसाम वैश्यमनुष्य गोपशूना बहुत्वेनान्नसाधकत्वेन चैकार्थ्ये गीत्वम्, एकविंशस्तोम अनुष्टुप्छन्दो वैराजसाम शूद्रमनुष्य वाजिपशूना पादोपजीविलेनैकार्थ्ये गीत्वमेति मुख्यक्रम्। एषु च स्तोमच्छन्दस्साम्ना पादोपजीवित्व त्वचरमड्डानुगतत्वात् बोध्य मिति।

तदेव यद्यपि गुणकर्मानुसारतो ब्राह्मणाद्या जातय कल्पिता इति स्पष्टम, तथापि पशूद्भिज्जमनुष्येषु सम्प्रति ता जन्मानुसारिण्य एव मन्यमाना भवन्ति। यथा मिष्टाम्रबीजतो मिष्टाम्राणा मेव फलन प्रायो नैसर्गिकम्, तथैव ब्राह्मणवीर्य्यादि जातानां ब्राह्मणादित्व मवश्यम्भावीत्येव तत्र हेतु। एव सत्यपि यथा देशादिदोषतो वस्तुगुणान्यथाभावोऽपि दृश्यते, तथैव ब्राह्मणादौ रसजाता अप्यब्राह्मणादयो भवन्तीत्यपि नाद्भुतम। अत एव "जातो नार्या मनार्यायाम"-इत्याद्यपि स्मृत मन्वादिभि, इह चोद्धृत तत् पुरस्तात (१० पृ० ८ प०)।

अथ तेषा ब्राह्मणादिचतुर्वर्णाना स्वभावादय इहैतरेये यथा वर्णितास्ते चेह क्रमात् प्रदर्श्यन्ते। तत्र स्वभावा —

ब्राह्मणानाम्— आदायित्वम्, आपायित्वम्, आवसायित्वम, यथाकामप्रयाप्यत्वञ्चेति चत्वारो धर्म्मा विशेषतो लक्षिता। 'आदायी' आदान ग्रहणम्, प्रतिग्रहादिना जीविकादीना मादान कारी। 'आपायी' अपायस्त्याग, दानादिना धनादीना त्याग कारी। 'अवसायी' अवसाय सिद्धान्त, विद्याबलेन सर्वतत्त्वाना निश्चयकारी। 'यथाकामप्रयाप्य' प्रयाण गुदाय प्रस्थानम् तत्र

राजादिभिः सेनानायकत्वादिना प्रेर्यः 'प्रवाप्य', काम मनतिक्रम्य यथाकामम्, स्वकामनानुरूप मिति यावत्; तदेवं राज्यरचणार्थं युद्धाय प्रयाण मिच्छेच्चेत् राज्ञा प्रेषणीयो 'यथाकामप्रयाप्य'। तदेतदिह ७.५.३ द्रष्टव्यम्। चत्रियाणान्तु— बलप्रतिष्ठा, आश्रितरचणम्, सर्वोपकारित्वम्, तेजस्वित्वम्, यशस्वित्वञ्चासीद् वर्णनीयम्। वैश्याना खलु— अन्यस्य बलिकृत्त्वम्, अन्यस्य आद्यत्वम्, यथाकामजेयत्वञ्चेति त्रीणि चिह्नानि। शूद्राणा हि— अन्यस्य प्रेष्यत्वम्, कामोत्थाप्यत्वम्, यथाकामवध्यत्वञ्चेति च वर्णितं तत्रैव (७.५.५, ६.)। अथ भक्ष्याः—

ब्राह्मणाना बलकरो भक्ष्यः सोमो निर्णीत., चत्रियाणा न्यग्रोधोदुम्बराश्वत्थप्लक्षफलानि बलहेतुभक्ष्याणि निर्णीतानि, तथा वैश्याना दध्येवैकं बलकरं भक्ष्य सूचितम्, शूद्राणा त्वाप एव भक्षिता सम्यग् बलकरा भवन्तीति च तत्र ७.५.३—६। अपर मपि—"एता वै प्रजा हुतादा यद् ब्राह्मणा अथैता अहुतादा यद्राजन्यो वैश्य शूद्र इति"–इति ७.४.१। यज्ञायुधानि—

"एतानि वै ब्राह्मणस्यायुधानि यद्यज्ञायुधानि; अथैतानि चत्रस्यायुधानि— यदश्वो रथः कवच इषु धन्व"–इति च तत्रैव। तानि च यज्ञायुधान्यन्यत्र परिगणितानि—"स्फ्यश्च कपालानि च, अग्निहोत्रहवणी च शूर्पं च, कृष्णाजिन च, शम्या च, उलूखलं च मुसल च, दृषदुपला चैतानि वै दश यज्ञायुधानि"–इति तै० स० १.६.८.२,३। तदानीं मासीदपि चत्रियतोऽपि भूयस्त्वं ब्राह्मणानाम्। तद्यथा— "भूयान् वै ब्राह्मण. चत्रियादिति" –इति ७.३.३।

शूद्राणा ब्राह्मणपङ्क्त्युपवेशनमप्यासीद्दोषावहम्। तथाहि

"दास्याः पुत्रः कितवो ऽब्राह्मण कथं नो मध्येऽदीक्षिष्टेति" –इत्यादि (२. ३. १.) समालोच्यम्। यज्ञकार्येषु गोदोहना-दिष्वपि तेषां निषिद्धोऽधिकारः, तथा च तैत्तिरीयकम्— "शूद्र एव न दुह्यात्, असतो वा एष सम्भूतो यच्छूद्र। अहविरेव तदित्याहुर्यच्छूद्रो दोग्धीति"–इति (ब्रा० १. २. ३.)। अत एव तेषां मयज्ञियत्वम्। यज्ञे दीक्षितस्य देवभाव मापन्नस्य यज-मानस्य तैरयाज्ञियैः सह वाक्यालापोऽपि निषिद्धः शतपथादौ— "स वै न सर्वेणेव संवदेत; देवान् वा एष उपावर्त्तते यो दीक्षते स देवतानामेको भवति, न वै देवाः सर्वेणेव संवदन्ते,— ब्राह्मणेन वैव, राजन्येन वा, वैश्येन वा (संवदन्ते); ते हि यज्ञियाः"–इत्यादिना (३. १. १. १०.)। मूर्खाणां सामीप्यमप्या-सीत्तदानीं क्लेशावहत्वात्मातम्— "तेभ्यो वै देवा अपैवाबीभत्सन्त मनुष्यगन्धात्"–इति ३ ३. ६.। अत्र देवा इति सत्यवादित्वा-दिनाप्तदेवत्वानां विदुषां मार्याणां ग्रहणमिष्टम्, मनुष्यशब्देन चानृतभाषणादिमनुष्यधर्मवतां मूर्खाणां शूद्राणा मित्येव। तदिदं शूद्राणां मयज्ञियत्वम्, मूर्खाणां सामीप्यायोग्यत्वञ्चातिमूर्खत्वक-श्मलत्वकदाचारत्वकदाकारत्वादिनिबन्धन मेव; नान्यथा तान् प्रति कृत-दुर्व्यवहारस्य प्रायश्चित्तशमनं विहितं श्रूयेत। तत्र यथा य० वा० सं० २० १७ १—

> यच्छूद्रे यदर्ये यदेनश्चकृमा वय
>
> यदेकस्याधिधर्मणि तस्यादयजन मसि"–इति।

शूद्राणां सुतत्वञ्च यथायोग्यज्ञानोपदेशविधिश्च विहिता संहिता-याम्, प्रदर्शितश्चेह पुरस्तात् (१७ पृ०)—

"यथेमा वाच कल्याणी मावदानि जनेभ्यः।

ब्रह्मराजन्याभ्याᳫ शूद्राय चार्याय च स्वाय चारणाय"—इति।

चतुर्णा मेव वर्णानां हितप्रार्थने साम्यञ्च श्रुत बहुत्र। तद्यथा तत्रैव यजुःसंहितायाम १८ ४८ १—

"रुच नो धेहि ब्राह्मणेषु रुच राजसु नस्कृधि।
रुच विश्येषु शूद्रेषु, मयि धेहि रुचारुचम्"—इति।

आथर्वणिका अप्यामनन्त्येव मेव १९ ७ ८—

"प्रिय मा कृणु देवेषु, प्रिय राजसु मा कृणु।
प्रिय सर्वस्य पश्यत, उत शूद्र उतार्ये —इति।

चतुर्णां वर्णानां माह्वानप्रयोगपार्थक्य मपि श्रुत मन्यत्र—

"तानि वा एतानि चत्वारि वाच,— एहीति ब्राह्मणस्य, आगह्याद्रवेति वैश्यस्य राजन्यबन्धोश्च, आधावेति शूद्रस्य'-इति श० ब्रा० १ १ ४ १२।

अन्योन्यकरग्रहणेनान्योन्यकुशलजिज्ञासारूप सम्मर्दननामशिष्टा चारआसीत् तदापीति च तत्रैव। तथाहि (३ ५ ४ १६, १७)—

'अथाध्वर्युश्च यजमानश्च सम्मृशेते। पूर्वयोर्द्वारि ध्वर्यु र्भवत्यपरयोरदारे यजमान, सोऽध्वर्यु पृच्छति यजमान कि मत्रेति भद्र मित्याह, तन्नौ सहेत्यपाऽध्वर्यु। अथापरयोर्द्वारि ध्वर्युर्भवति पूर्वयोरन्तरे यजमान, स यजमान पृच्छत्यध्वर्यों कि मत्रेति भद्र मित्याह, तन्न इति यजमानस्त्यद्वैव सम्मृशेते प्राणानेवैतत् मयुज कुरुतस्तस्मादिमे प्राणा पर मविद्धेश्च यत्पृष्टो भद्र मिति प्रत्याह कल्याण मेवैतन्मानुष्यं वाचो वदति तस्मात् पृष्टो भद्र मिति प्रत्याह"—इति। अद्यतनेङ्गलण्डीयादीना मस्त्येव सम्मर्दनम्, पर तेषामेकैककरग्रहणमेव दृश्यते, अस्माकन्तु करद्वयग्रहण मित्येव विशेष। अतएवेद निरुक्तम्— 'प्रगृह्य पाणी देवान् पूज

यन्ति"-इति (।२.७.४.)। "विद्वांसो वै देवाः"-इति वचनादिह वक्तव्यो वैदिकसिद्धान्तः; तेषां दर्शनमात्रतः सपाणिद्वयेन तत्पादद्वयस्य ग्रहण मेव प्रथमं पूजनम्, सम्प्रश्नेन नाम सत्कार इति तदर्थः।

प्रत्युत्थानशिष्टाचारश्चासीत् तदानीम्। तथाहि— "प्रति वै श्रेयांस मायन्त मुत्तिष्ठन्ति"-इति (२.३.२.)। 'श्रेयांस मतिप्रशस्त माचार्यपित्रादिक मायन्तं स्वसम्मुखत्वेन समागच्छन्तं प्रति शिष्यपुत्रादय उत्तिष्ठन्त्येव'-इति तत्र सायणः। मनुसंहिताया मेत देव स्मृतम्— "शय्यासनस्थश्चैवैनं प्रत्युत्थायाभिवादयेत्" -इत्यादि (२.११८, १२०.)।

न केवलं प्रत्युत्थानं किन्तु अनुवर्त्तन मपि विहितम्। तथाहि— "अनु वै श्रेयांस पर्य्यावर्त्तन्ते"-इति (२.३.२.)। 'श्रेयांस माचार्यादिक मनुगम्य शिष्यादयः परितः सञ्चरन्ति'-इति तत्र सायणः।

वाग्व्यवहारविषयेऽप्यासन्निह बहव उपदेशाः। तद्यथा-"वाक् तु सरस्वती" (३.१.१.), "वाग्वि सरस्वती" (३.१.२.), "वाग्वै सरस्वती" (३.१.१३.), "वाचो वाव तौ स्तनौ, सत्यानृते वाव ते" (४.१.१.), "कोऽर्हति मनुष्यः सर्वं सत्यं वदितुम्, सत्यसंहिता वै देवा अनृतसंहिता मनुष्याः" (१.१.६.), "विदुषा सत्य मेव वदितव्यम्" (५.२.८.), "एतद्वै मनुष्येषु सत्यं निहितं यच्चक्षुः, तस्मादाचक्षाण माहुरद्राक्षीरिति, स यद्यदर्श मित्याहाथास्य श्रद्दधाति; यद्यु वै स्वयं पश्यति न बहूनाञ्च नान्येषां श्रद्दधाति" (१.१.६.), "अवत्येनं सत्यं नैन मनृतं हिनस्ति" (४.१.१.), "विचक्षणवतीं वाचं वदेत्" (१.१.६.), "अस्थूर्य्य इवा इतरा गिरः" (३.५.५.), "मनसा वा इषिता वाग्

वदति, यां ह्यन्यमना वाचं वदति असुर्या वै सा वागदेवजुष्टा (२. १. ५; ४. ५.), "यां वै दृप्तो वदति, या मुन्मत्तः, सा वै राक्षसी वाक्" (२. १. ७.)। अवच्छेदकावच्छिन्नव्यवच्छिन्नासम्बद्धसम्बन्धसम्प्रदायान्यायभाषापीदानीन्तनन्यायभाषेतिविदितैवसम्प्रसिद्धा ननु का भाषा, वानरी वा राक्षसी वा, यावनिकी वा ? इत्यपत्र स्थाचिन्तनीयम्; अपौरुषेयवैदिकग्रन्थेषु, अतिप्राचीनसूत्रस्मृति-न्यायमीमांसावेदान्तादिषु, अनतिप्राचीनेतिहासपुराणतन्त्रवैद्यक-ज्योतिषसङ्गीतकाव्यादिषु वा क्वचिदपि तथाविधवाग्जालाच्छन्नो-च्छन्नहेतुनिर्गमप्रवेशाप्रतीतिः "वाक् च मनश्च वर्त्तन्यौ; वाचा च हि मनसा च यज्ञो वर्त्तते; इयं वै वागदो मनः" (५. ५. ८.), "श्रद्धा पत्नी, सत्यं यजमानः, श्रद्धा सत्यं तदित्युत्तमं मिथुनम्; श्रद्धया सत्येन मिथुनेन स्वर्गाल्लोकान् जयति" (७. २. ८.), "पापस्य या इमे कर्मणः कर्त्तार आसते अनृताये वाचो वदितारो यच्छापयर्षा इमापुत्रायवेमे भेऽन्तर्वेदि मासिमवेति" (५. १. १.), "सोऽब्रवीत् तदहं तुभ्य मेव ददामि य एव सत्य मवादीरिति; तस्मादेवं विदुषा सत्य मेव वदितव्यम्"-इति (५. २. ८.) च।

विवाहबन्धन मपि तेषा मासीद्धितकरत्वेनाभिप्रेतम्। अत एवैवं श्रूयते— "नापुत्रस्य लोकोऽस्ति"-इति, "ऋण मस्मिन्सन्न-यत्यमृतत्वञ्च गच्छति। पिता, पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्"-इति च ७. १३. १। पिता एव पत्नीगर्भं प्रविश्य पुत्र-रूपेण पुनः प्रकाश मापद्यत इति च तत्रैव। तथाहि—"पति र्जाया प्रविशति गर्भो भूत्वा स मातरम्। तस्यां पुनर्नवो भूत्वा दशमे मासि जायते"-इति। तदेव मुत्पादिते पुत्रे वंशपरम्परया अनृणत्व मेव स्वप्यापादितं भवतीति तेषा मभिप्रायः।

तत्र क्षत्रियाणां वैश्यशूद्रस्वभावपुत्रनिन्दायाम् का कथा, ब्राह्मणस्वभावपुत्रोऽप्यासीदनीप्सितः । तथाहि—"ब्राह्मणकल्पस्ते प्रजायां मा जनिषत'-इत्यादि ( ७ ३ ) द्रष्टव्यम्। वैश्य शूद्रस्वभावपुत्रानीप्सापि तत्रैवाम्नाता।

तदानीं सैकस्या तदधिकाया वा जायाया जीविताया अपि जायान्तरपरिग्रहणं नासीद् दोषावहम्, ततश्च जीवत्पत्नीकस्यापि पुंस, क्रमाद् युगपद्वा बहुविवाहो नैवासीदसामाजिकः । तदुक्तमिह— 'यदि ह वा अपि बह्व्य इव जाया पतिर्वाव तासां मिथुनम्"-इति ( ३ ५ ३ )। इतोऽपि व्यक्त माम्नातम्—'एकस्य बह्व्यो जाया भवन्ति"-इति ( ३ २ १२ )। अपि नासीच्च तदानीं अपि जीवत्पतिकाया स्त्रिया पत्यन्तरग्रहणाचारः। तदप्युक्तं तत्र उत्तरत्— नैकस्यै बहवः सह पतय "-इति। अत्र सहशब्द श्रुतेर्मृतपतिकाया त्यक्तपतिकाया वा पत्यन्तरग्रहणं न तदा लौकिकाचारविरुद्ध मित्यपि गम्यत एव। किन्तु तथाविधविधवा वेदनन्त्वासीदीदृशनातिप्रचुरैव प्रचलित मिति च पुराणेतिहासा ख्यानतोऽवगम्यते, तच्चेदानीं अपि वर्त्तत एवेत्यस्माकम्। स्वयम्वरसभायां समागतेषु कन्यापाणिग्रहणार्थिषु पणजयकारिणे कन्यादानप्रथाप्यासीत्तदापि तदाह— प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् सूर्यां सावित्रीम्, तस्यै सर्वे देवा वरा आगच्छ स्तस्या एतत् सहस्रं वहतु मन्वाकरोत् तदेतदाश्विन मित्याचक्षते -इति ( ४ २ १ )। तदानीन्तनस्त्रीणा मप्यासीदसाधारणं पाण्डित्यम्। तदग्निहोत्रकालनिर्णायिकाख्यायिकायाम्—"कुमारी गन्धर्वगृहीता वा आस "-इत्यादि ( ५ ५ ४ )।

तदानीं अपि स्नुषा श्वशुराल्लज्जते स्मेत्यार्याणाम्। तथाहि—

"स्नुषा श्वशुराल्लज्जमाना निलीयमानेति"–इति ( ३. २. ११. ।
अपि तदाप्यार्याणां सोदर्य्याणामपि भगिनीनां भ्रातृजायानुगतत्व
मेवासीत् । तत्राम्नात मिह यथा—"समानोदर्या स्वसा ऽन्योदर्यायै
जायाया अनुजीविनी जीवति"–इति ( ३. ३. १३. ) । तदेवं
सोदर्य्याया अपि स्वसुरनात्मीयत्व मन्यकुलतो लब्धाया अपि जायाया
आत्मीयत्वं पारम्पर्यागत मेवेति स्यात् स्वीकार्यम् ।

अथाग्निहोत्रस्य त्वतिकर्त्तव्यतया अपत्नीकस्यापि तत्कर्त्तव्यता
प्रतिपादिता । तथाच— "तदाहुर्यश्चापत्नीको ऽग्निहोत्रम्"–
इत्यादि (७. २. ८. ) । तस्य ह्यग्निहोत्रस्य दृष्ट मदृष्टञ्च फलं
तैरधिगतम्; अत एव तैर्नित्याग्निहोत्रिभिः सद्भिः सदैव स्वस्व-
गृहेषु अग्निरचणं कर्त्तव्य मिति सिद्धान्तितम् । तदिदं श्रूयते
— "मनुषो दुरोणे"–इति (ऋ० मं० १०. १११. १. ),
व्याख्यातञ्चैतद् यास्केन 'मनुषस्य मनुष्यस्य गृहे ( ८. २. २. )'
–इति । हिमानीवासिनां तेषां प्राचीनार्याणां हिमपातक्लेशनिवा-
रणाय स्वस्वगृहेष्वग्निरचणं नून मासीत् सुखावहम्; श्रुतं ह्येवम्
–"अग्निर्हिमस्य भेषजम्"–इति (वा० मं० २३. १०. ) । तत्र चाग्नौ
विविधसुगन्धादिद्रव्यदानविधानञ्च श्रुत मस्ति । तद्यथा—"कुल्माप
मिव ह्येतद् यत्रे क्रियते यत् पैतुदारवाः परिधयो गुग्गुलूर्णास्तुकाः
सुगन्धितेजनानीति"–इति ( १. ५. २. ) । तैत्तिरीये खल्व
आम्बायिकाख्यान मपि सं० ६. २. ८ द्रष्टव्यम् । तैः सुगन्ध्यादिभिः
गृहजातवायुदोषोऽपिप्रशमितो भवतीति च दृष्टम् । यदग्नौ आज्या-
शिरपयःपयस्यामावाय्यचरुपुरोडाशसोमाद्याहुतयः प्रदीयन्ते ततश्च-
अथयप्रसृता हविर्धारास्तत्तद्गुणयुक्ता भवन्त्वेवेति तज्जातौषधादीनां
भक्षणतः खल्वाप्यादिसाराहार एव सम्पद्यतेऽस्माक मिति च दृष्ट

मेव । अदृष्टं तु स्वर्गादि, श्रुतिमात्रगम्यम् । तदेव दृष्टादृष्टफल सि द्ध्यर्थ मेवासीत् तेषां नित्याग्निहोत्रानुष्ठान, मिति प्रतीयते स्फुटम् ।

अग्निहोत्रानुष्ठानाय प्रातः स्नानस्य कर्त्तव्यता चात्र सूचिता । तथाहि—"य आहिताग्निर्यदि प्रातरस्नातोऽग्निहोत्रं जुहुयात्, का तत्र प्रायश्चित्तिरिति"–इत्यादि ७ २ ८ । तत्रैव आग्रयणे नानिष्ट्वा नवान्नप्राशने, पाकपात्रे नष्टे, पवित्रनाशे, हिरण्येऽनुद्दिष्टे अपहृते च जीवत्यपि कस्मिंश्चिदाक्रोशे स मृत इति श्रुते, जायाया स्व गोत्रां यमसन्तानजननेऽपि प्रायश्चित्तं विहितम् । तथा तत्रैव सूतकान्नप्राशनकारिणा मपि प्रायश्चित्तं विहितम् । यथा विहितहोमादिरूपप्रायश्चित्तस्य एषु तथाविधपापाना भवति महत्त्व इति च तत्र तत्र सुव्यक्तम् । अग्निहोत्राद्यनुष्ठानाय तत्र प्राक् स्नानं तु विहितम्, न पुन किञ्चिद् भोजनं तु निषिद्धम्, प्रत्युत किञ्चिद् भुक्त्वैव कर्माणि कुर्वीतेत्येवेहान्यत्र ध्वनितम् । तथाहि—"घृत प्राश्य प्रसेद् यथा ह वा इदं मनो वा रथो वाक्तो वर्त्तत एव मेवास्यो वर्त्तते"–इति ४. ३ १ ।

मृतस्य शरीरालाभे पर्णशरीरदाहोऽप्यासीत्तदानी मपि प्रच लित । तदाह—"यदि शरीराणि न विद्येरन्, पर्णशर षष्टिस्त्रीणि च शतान्याहृत्य तेषां पुरुषरूपक मिव कृत्वा तस्मिंस्ता माहुतं कुर्युः । अथैनाव्छरीरैराहुते सम्भर्त्तोदाश्नयेषु, अर्धं प्रत कार्ये, एकविंशी दिपद्यायें च विंशी, षोडश दिपद्याशे, शेषस्तु शिरस्युपरि दध्यात्"–इति ७ ३ १ ।

तदानीन्तनार्याणां देवपितृमानुषार्थनपरताप्यासीत्, तदभावे 'अनद्धापुरुष'–इतिनिन्दाभाजनत्वं तेषां सत्यस्यास्येति । तदाह "कालनद्धापुरुषः ? इति, न देवान्, पितॄन्, न मनुष्यान्'–इति

( ७. २. ८. )। अत्रार्चतीति पदन्तु शेषयितव्यम्। स्फुट मेतच्छत-पथे—"एष ह वा अनद्धापुरुषो यो न देवानवति, न पितॄन्, न मनुष्यान्"–इति ( ६. ३. १. १४. )। 'अद्धा'–इति सत्यनाम ( निघ० ३. १०. ४. ), अनद्धा—असत्यः, तथाचानद्धापुरुषोऽसत्य-पुरुषः। एवं हि यः पुरुषो देवान् पितॄन् मनुष्यांश्च नार्चति, अजा गलस्तनस्येव तस्य जन्म निरर्थकम्'–इति भावः। तदेवं देवाद्यर्चन-विहीनस्य निन्दावादः सम्पन्नः। तदत्र समासतो देवादीनेव पूर्वं निरूपयामः।—

देवाः। निघण्टौ द्युस्थानभाजनेषु 'देवाः'–इति षड्विंशं पदम्। ततो गम्यते द्युलोक एव प्रधानतस्तेषां स्थानम्। 'देवाः रश्मय उच्यन्ते'–इति तद्भाष्ये देवराजः। महामुनियास्केनापि निरुक्ते देवा इत्यस्यैष एवार्थ उल्लिखितः—"रश्मयोऽत्र देवा उच्यन्ते"–इति ( १३. १ १२. )। यास्कप्रदर्शित मुदाहरण मेव च देवराजेन प्रदर्शितम्—"देवानां भद्रा सुमतिर्ऋजूयताम् ( ऋ० सं० १. ८९. २. )"–इति, निघ० ५. ६. २६। निरु० १२. ४. ५; १२. १. ११ द्रष्टव्यम्। पार्थिवस्याग्नेर्माध्यमिकस्य च विद्युतोऽपि रश्मिजन्यत्वेन, उत्तमाग्नेः सूर्यस्य तु रश्मिजनकत्वेन जन्यजनकयो-रभेदात् रश्मिभिन्नत्वम्। किञ्चास्त्वेषा प्रथममध्यमोत्तमानां त्रयाणा मेवाग्नीना रश्मिवत्त्वम्; "त्रयः केशिनः"–इत्यस्य व्याख्याने सुव्यक्त मुक्तञ्चैतद् यास्केन— "केशा रश्मयः, तैस्तद्वान् भवति०—० आदित्य माह, अथाप्येतेइतरे ज्योतिषी केशिनी उच्येते, धूमेनाग्नी रजसा च मध्यमः"–इति ( निरु० १२. ३, ६, ७, ८, )। एषा मेव त्रयाणां भक्तिसाहचर्यादितो बहवो देवा भवन्ति। तदपि व्यक्त मुक्तं यास्काचार्येण— "तिस्र एव देवता इति नैरुक्ताः०—०

तासां महाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति" -इत्यादि ७ २ १, २ १०। "यो देव सा देवता"-इति च निरु० ७, ४ २। विवरिष्यामश्चैतद्दिदैवोपाख्यप्रकरणे।

पितरः। निघण्टो अन्तरिक्षस्थानभाजनेषु 'पितर'-इति द्वादश पदम्। ततो गम्यते अन्तरिक्षलोक एव प्रधानतस्तेषां स्थानम्। 'पिता, पाता वा पालयिता वा -इत्यादिना (निरु० ४ ३ ५) व्याख्यातं, जनम्"-इति तद्भाष्ये देवराज। महामुनि यास्केन हि- "पितरो व्याख्यातास्तेषामेषा भवति"-इत्युक्तैव,

"उदीरतामवर उत परास
उन्मध्यमाः पितरः सोम्यासः।
असुं य ईयुरवृका ऋतज्ञास्
तेनोऽवन्तु पितरो हवेषु"-इति (१०. १५ १)।

एषा ऋगिह उदाहृता। व्याख्याता च सा एवम्— "उदीरता मवर उदीरता पर उदीरता मध्यमाः पितरः सोम्याः सोमसम्पा दिनस्तेऽसुं ये प्राणं मन्वीयुरवृका अनमित्रा सत्यज्ञा वा यज्ञज्ञा वा ते न आगच्छन्तु पितरो ह्वानेषु"-इति (निरु० ११ २ ६)।

तथाच तस्या ऋच एषोऽर्थः सम्पद्यते— "हवेषु' 'ह्वानेषु' अस्मदाह्वानेषु सत्सु 'ते' 'पितर' पितृगणाः "नः" अस्मान् "अवन्तु" आगच्छन्तु'। ते कीदृशाः? इत्याह— "ये' 'असुं' 'प्राणम्' "ईयु' 'अन्वीयु' प्राप्तवन्तः, पुत्र प्राणान्विता आसन्निति यावत्। तत्र जीवितकाले "अवृका" 'अनमित्रा' सर्वत्र सर्व देवसाधुव्यवहारत अमित्रशून्या, 'ऋतज्ञा" 'सत्यज्ञा वा यज्ञज्ञा वा' कर्तृतया कारयितृतया वा यज्ञानुष्ठानविद, "सोम्यास' 'सोम्या =सोमसम्पादिन' च आसन्निति। ते च कतिविधा ?

इत्याह—"अवरे", "परास" 'परे', "मध्यमाः" चेति त्रिविधाः।
तत्र, 'परे' द्युस्थान्तरिक्षचारिणः, "ये चेमेऽरण्ये श्रद्धा तप इत्युपा-
सते"–इत्यादिना छान्दोग्ये (५. १०. १, २.) वर्णिता देवयान-
मार्गेण सूर्यलोकं गताः; 'मध्यमाः' द्यावापृथिव्योरन्तरेण
स्थायिनः, "य इमे ग्राम इष्टापूर्ते दत्त मित्युपासते"–इत्यादिना
छान्दोग्ये (५. १०. ३–६.) वर्णिताः पितृयानमार्गेण चन्द्रलोकं
गताः; 'अवरे' भूपृष्ठस्थान्तरिक्षचारिणः, "अथैतयोः पथोर्न कत-
रेण च"–इत्यादिना छान्दोग्ये (५. १०. ८.) वर्णिताः पृथिव्या
मेव निरन्तरावर्त्तिनः। तदेषां त्रिविधानां पितॄणा मध्ये येऽवरास्तेषा
मप्राप्तमार्गाणा मसकृदावर्त्तित्वेन क्वचिदपि दीर्घकालस्थिति-
सम्भावनाभावात् न पितृलोकस्थत्वम्; ये परास्तेषा मपुनरावर्त्तित्व-
श्रुतेस्तथात्व मेव; ये तु मध्यमाश्चन्द्रलोकं पितृलोकं वा गता-
स्तेषा मेव स्वस्थानस्थत्वेन प्राधान्य मिदम्। अतएव अन्तरिक्षस्थाने-
ष्वेव पठितं पितर इति पदम्। यास्केनाप्युक्तम्— "माध्यमिको
यम इत्याहुस्तस्मान्माध्यमिकान् पितॄन् मन्यन्ते"–इति (११. २.
५. ६.)। 'स हि तेषा राजेति'- इति च तत्र दौर्गी वृत्तिः। "परे-
यिवांसं प्रवतो महीरनु"–इत्यादिसूक्तद्वये (ऋ० सं० १०. १४, १५)
यमस्य पितृराट्त्व पितॄणां स्वरूपञ्च सुव्यक्तम्।

तत्वतस्तु अन्नरससाहाय्येन स्वजनकदेहे प्रविष्टो जीवो रेतो-
ऽन्तःस्थ प्रथमगर्भः सम्पद्यते; यदैव तद्रेतो योनौ षिक्तं भवति,
तदैव तस्य प्रथमं जन्म। ततस्तद्रेतो मातृयोनौ द्वितीयगर्भा-
कारेण परिणतं भवति; भूमिष्ठे हि तस्मिन् गर्भे पुरुषस्य द्वितीयं
जन्मेति मन्तव्यम्। ततो मृते च यत् पित्राद्यन्यतमं शरीरं
लभते, तदेव तस्य तृतीयं गर्भरूपम्; तत पित्राद्यन्यतमलोक-

प्राप्तिरेव तत्तृतीयं जन्मेति मन्यते। तदाहुरैतरेयिणः— "अप-क्रामन्तु गर्भिण्यः। पुरुषे ह वा अय मादितो गर्भो भवति, यदे-तद् रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूत मात्मन्येवात्मानं बिभर्ति, तद्यदा स्त्रियां सिञ्चत्यथैनं जनयति; तदस्य प्रथमं जन्म। तत् स्त्रिया आत्मभूयं गच्छति, यथा स्वमङ्गन्तथा तस्मादेनां न हिनस्ति, सास्ये-त मात्मान मत्र गतं भावयति, सा भावयित्री भावयितव्या भवति, तं स्त्री गर्भं बिभर्ति, सोऽग्र एवं कुमारं जन्मनोऽग्रेऽधिभावयति, स यत्कुमारं जन्मनोऽग्रेऽधिभावयत्यात्मान मेव तद्भावयति एषां लोकानां सन्तत्या एवं सन्तता हीमे लोकाः; तदस्य द्वितीयं जन्म। सो ऽस्याय मात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते; अथास्याय मितर आत्मा कृतकृत्यो वयोगतः प्रैति, स इतः प्रयन्नेव पुनर्जायते; तदस्य तृतीयं जन्म"–इति (२ आ॰ ५. १.)।

शतपथे तु मृत्युप्रकारो मृतस्य तस्य पित्र्यादिदेहलाभप्रकारः। तथाहि— "स यत्रायए शारीर आत्मावल्यं नीत्य सम्मोह मिव न्वेत्यथैन मेते प्राणा अभिसमायन्ति, स एतास्तेजोमात्राः समभ्या-ददानो हृदय मेवान्ववक्रामति। स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्ततेऽथारूपज्ञो भवत्येकीभवति न पश्यतीत्याहुरेकी-भवति न जिघ्रतीत्याहुरेकीभवति न रसयतीत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजाना-तीत्याहुः। तस्य हैतस्य हृदयस्याग्रं प्रद्योतते, तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्य-स्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राण मनूत्क्रामन्तए सर्वे प्राणा अनूत्क्रामन्ति, सज्ञान मेवान्ववक्रामति, स एष ज्ञः सविज्ञानो

भवति ; तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च। तद्यथा तृणजलायुका तृणस्यान्तं गत्वान्य माक्रम माक्रम्यात्मान मुपसंहरत्येव मेवायं पुरुष इदं शरीरं निहत्याविद्यां गमयित्वान्य माक्रम माक्रम्यात्मान मुपसंहरति। तद्यथा पेशस्कारी पेशसो मात्रा मुपादायान्यन्नवतरं कल्याणतरं रूपं तनुत एव मेवायं इदं शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं रूपं तनुते, पित्र्यं वा गान्धर्वं वा, ब्राह्मं वा प्राजापत्यं वा, दैवं वा मानुषं वान्येभ्यो वा भूतेभ्य."–इति १४ ७. २, १—५.। अत्र पित्र्यं गान्धर्वञ्च मिथो गुणकर्मादितः किञ्चिद्भेदयुक्तमन्तरिक्षलोकगं रूपम् ; ब्राह्मं प्राजापत्यं च तथा मिथः सामान्यभेदयुक्तं द्युलोकगं रूपम् ; एवं दैवं मानुषञ्च विद्वत्त्वाविद्वत्त्वभेदभिन्न मिहत्यं रूपम्। इत्थ मपि छान्दोग्याद्युक्तं पितॄणां गतिवैविध्यम्, उदीरतामितिमन्त्राम्नातपितृवैविध्यञ्चोपपन्नं भवति। तदेवं यास्कव्याख्यातस्योदीरतामितिमन्त्रस्य 'असु य ईयु'–इत्यंशस्य पितरान्यतमदेहगतं प्राणं ये अन्वीयुरित्येवार्थः सुष्ठुतर इत्यस्माकम्। पिण्डपितृयज्ञप्रकरणादौ च (य० वा० २. २०—३४. ; श० ब्रा० २. ४. ४. १—२४. ; तै० ब्रा० १. ३. १०, २. ६. ३.) पितृगणस्वरूपं पर्यालोच्यम्। यमपितृलोके पुनर्निर्णेष्याम इत्यैवास्यप्रकरणे।

मनुष्याः। ऐतरेये त्विहैतच्छब्दनिर्वचन मेवं प्रोक्तम्—"मैदं प्रजापते रेतो दुष्पदिति॰—॰तस्मादुष मनुष मित्याचक्षते परोक्षेण"–इति (३. ३. ८.)। "मनुष्याः कस्मात् ? मत्वा कर्माणि सीव्यन्ति, मनस्यमानेन सृष्टाः, मनस्यतिः पुनर्मनस्वीभावे ; मनोरपत्यम्, मनुषो वा"–इति त्वाह यास्कः (निरु॰ ३, २. १.)। "मनोर्जातावञ्यतौ षुक् च"–इति च पा॰ ४. १. १६१ सूत्रम्। 'समुदायार्थो जातिः ; मानुष, मनुष्य.'–इति

तत्र दीक्षितः। तत्राप्यस्तु "षडर्घ्या भवन्ति,—आचार्य ऋत्विक् स्नातको राजा विवाह्यः प्रियोऽतिथिरिति"–इति गो॰ गृ॰ सू॰ ४. १०। मातृपितृआचार्याणां पूजनीयत्वं तु तैत्तिरीय-(आ॰ ७. ११.) मन्वादि (२. २२५.)-प्रसिद्धम्॥

शतपथब्राह्मणे तेषां देवपितृमनुष्याणा मेकत्रैव विशेषपरिचय आम्नात उपासनाप्रकारश्च। तथाहि—"ततो देवा., यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदन्। तानब्रवीत्—यज्ञो वोऽन्नम्, अमृतत्वं व', ऊर्ग् व', सूर्यो वो ज्योतिरिति। अथैनं पितर', प्राचीनावीतिनः सव्यं जान्वाच्योपासीदन्। तानब्रवीत्—मासि मासि वोऽशनं, स्वधा वः, मनोजवो वः, चन्द्रमा वो ज्योतिरिति। अथैनं मनुष्याः; प्रावृता उपस्थं कृत्वोपासीदन्। तानब्रवीत्—सायम्प्रातर्वोऽशनम्, प्रजा वो, मृत्युर्वो, ऽग्निर्वो ज्योतिरिति"–इति (२. ४. २. १, २, ३.)।

एषा मेव देवपितृमनुष्याणा मर्चनं कर्त्तव्यत्वेनैतरेये समाम्नातम्— "एष ह वा अनद्धापुरुष इत्यादिना। तत्र हि अग्निहोत्रादिभिः श्रौतै वैश्वदेवादिभिश्च गृह्यैर्देवाना मर्चनं सम्पद्यते; पिण्डपितृयज्ञादिभिः श्रौतैः स्वस्वगृह्योक्तप्रकारैः अन्वष्टक्यान्नजलादिप्रदानात्मकश्राद्धादिभिश्च पितॄणा मर्चनं सम्पद्यते, निष्कपटविनीतभावप्रदर्शनाशापालन-ससमादरपक्वापक्वाद्याद्याहारादि-प्रदानैर्मनुष्याणा मर्चनं सम्पद्यते।

अतिथिसत्कारविषये गाथाप्येकाम्नाता— "तद् यददो गाथा भवति— अनेनम मैनसा मो ऽभिगम्तादेनस्वतो वापहरादेनः। एकातिथि मप साय रुणद्धि बिसानि स्तेनो अहरेति"–इति ५. ५. ५। गाथेयं नैतद्ब्राह्मणप्रवक्तृ. कल्पिता, प्रत्युत बहुप्राचीना,

प्रनेनात्र सूतेत्येव । तदाह तद्भाष्ये सायणः—'पुरा कदाचित् सप्तर्षीणां संवादप्रसङ्गे कश्चित् पुरुषो बिसस्तैन्यलक्षण मपवादं प्राप्य तत्परिहारार्थं ऋषीणा मग्रे शपथं चकार, तदीयशपथोक्तिरूपेयं गाथा'-इति । तच्छपथस्वरूपञ्च तत्र तेनैवैवं व्याख्यातम्—'बिसानि पद्ममूलानि, तेषा मपहर्त्ता (एवं) प्रत्यवायपरम्परा प्राप्नोतु ;— पापरहिते पुरुषे विसस्तैन्य मपवादं कृतवतो यः प्रत्यवाय., पापिनः पुरुषस्य सम्बन्धि पापं स्वीकुर्वतो यः प्रत्यवायः, सायङ्काले गृहे समागच्छत एकातिथेर्वैदेशिकस्यारोधने यः प्रत्यवाय, सेयं प्रत्यवायपरम्परा बिसस्तैन्ये सति मम भूयादित्येवं शपथः'-इति । अस्माकं त्वस्या गाथाया ऋजुतरोऽर्थान्तरः प्रतिभाति । तद्यथा—यः कश्चित् 'अनेनसम्' अपापम् आरोप्यमानपापशून्यं जनम्, 'एनसा' आरोप्यमानेन पापेन 'अभिशस्तात्' निन्देत्, 'स' निन्दकः 'एनस्वत.' स्वभावजातपापिनः तस्य निन्दितस्य यत् किं मपि स्वभावजम् 'एनः' पापम् अस्ति, तदेव 'अपहरात्' अपहरणं कुर्यात् । सन्ति हि सर्वेषा मेव मानवानां स्वभावजानि पापानि । तदप्याहात्रैव—"व्यतिषक्त इव वै पुरुषः पाप्मना"-इति (४. १. ४. । इत्थं गाथापूर्वार्द्धेन वृथापवादकीर्त्तनं निषिद्धम्, अथापरार्द्धेनातिथिविमुखीकरणं निषिध्यते— यः कश्चिद् 'सायं' काले समागतम् 'एकातिथिं' सर्वातिथिलक्षणसम्पन्न मत एव प्रधानातिथिम्, एकसङ्ख्यामात्र मतिथिं वा 'अपरुणद्धि' स्वागतासनाशनपानादिक मदत्त्वा विमुखीकरोति, 'स.' 'स्तेनः' चोरः सन् 'बिसानि' मृणालानि, तद्वतानीव सूक्ष्मतन्तुरूपाणि तद तिथिशरीरस्थानि स्नायुनामजीवनहेतुवद्बन्धनानि 'अपजहार' तज्जीवनापहरणपातकभाग् भवतीति भावः ।

अद्योऽतिथिसत्काराथासीत् तदाश्वघातश्च प्रचलित । तत एव सामि राजन्यागते या आतिथ्येष्टिर्विहिता, तत्र पशुघाता नुकल्पश्च विहित — "तद्यथैवादो मनुष्यराज आगते, ऽन्यस्मिन वार्हति उक्षाणं वा वेहतं वा क्षदन्त एवं मेवास्मा एतत क्षदन्ते, यदग्निं मन्थन्ति, अग्निर्हि देवानां पशु"–इति (१ ३ ४)। अप्युप शब्दस्य पौपार्थतानिर्णयाय चाम्नात मेवम्— "एतद्धि गव्य मीमांसमाना पृच्छन्ति, सन्ति तत्रोपाः इति"–इति (४ ४ ५)। सायणकृत मेवैतद्व्याख्यान द्रष्टव्यम्। मांसभक्षणविधिस्त्वाम्नात इत्यन्यत्रापि । तथाहि—'नाग्नीषो मीयस्य पशोरश्नीयात्०—० तस्माद्दत्यम्०—० तस्याशितव्यञ्चैव लीप्सितव्यञ्च"–इति (२ १ २)। अमेध्यमांसभक्षणे दोषो मेध्यमांसभक्षणेऽदोषश्चाम्नात । तथाहि— "एत उत्क्रान्तमेधा अमेध्या पशवस्तस्मादेतेषां नाश्नीयात्"–इति २ १ ८। 'एते' पुरुषकिम्पुरुषगौरगवयोष्ट्रशरभा इति मत अमेध्या, अजगोऽश्व जद्दशिवीभवा पञ्च मेध्या । पृथिवीभवत्वेनेह व्रीह्यादीनां ग्रहण मिष्टम्। अतएव श्रुतम्— "स वा एष पशुरेवालभ्यते यत् पुरो डाश"–इत्यादि २ १ ८। तत्राप्यजमांसस्यासीद् बहुप्रचलन मिति च प्रतीयते, तत्रैव 'एष एतेषां पशूनां प्रयुक्ततमो यदज"–इतिश्रुतेः । 'छागो वा मन्त्रवर्णात्'–इति चाह मी० द० ६ ८ ३१ सूत्रम्। तथापशुघातनिन्दाप्यस्ति — "अथ येऽतो ऽन्यथा मेडगा वा पापकृतो वा पशु विमथ्नीरस्तादृशा–इति ७ १ १। सैषा पशुहिंसा यद्यप्यस्मभ्य न रोचते, तथाप्युदाहृत व्यवहाराणां यावद्वैदिकत्व प्रतिपद्यते, तावदेवमादिषु "आम्नाय वचनादहिंसा प्रतीयेत (१ ५ २)"–इति निरुक्तवचन मेव शरणम्।

अतिथिसत्कार इवेहान्येऽप्युपदेशाः समाम्नाताः। तद्यथा—"अभिद्दिपते पिपासते चिप्रं प्रयच्छेत्"–इति (६.२ ५.)। एतेन स्थानविशेषे द्रव्यविशेषस्य दानचिप्रता विहिता। "अप्रहुतः करोत्यकृतं तदकृत मकारिति वै निन्दन्ति"–इति (२.५.६.)। एतेन सर्वत्रैव विचार्य्यकर्मसु गुर्वाद्यनुज्ञा स्वाम्यनुज्ञा वा ग्रहणीयेत्युपदिष्टम्।

आसीच्च तदानीं मार्त्विज्यप्रागल्भ्यम्, अयाज्ययाजननिषेधश्च। तदाह—"यशसा वा एषोऽभ्येति, य आर्त्विज्येन। स यः प्रतिरुन्धेद्, यशः स प्रतिरुन्धेद्; तस्मान्न प्रत्यरीत्सोदिति। यदि त्वयादपोज्जिगासेद्, यज्ञेनास्मादपोदियात्। यदि त्वयाज्यः स्य मपोदितं तस्मात्"–इति ६.४.८। तदेव मार्त्विज्याय आहूतस्य तत्त्यागो दोषाय भवति, त्यागायोपदेशो बाधनं वापि दोषायैव। यदि तु स्वयं यष्टु सिष्णुः स्यादन्यत्र हृतो वा भवेत्, तर्हि परार्त्विज्य त्यागो न दोषाय। एव मयाज्ययाजनं च न कर्त्तव्यम्। पापपुरुषयाजनस्य निषेधस्त्विहाप्यत्राम्नातः— "न पाप पुरुषो याज्यः" –इति (४.४.३.)। अपि यथा पापपुरुषाणां मयाज्यत्वं विहितम्, तथैवार्त्विज्याय पापपुरुषाणां वरण मपि निषिद्धम्— "पापस्य वा इमे कर्मणः कर्त्तारं आमते इपूतायै वाचो वदितारो यच्छापणां इमानुत्थापतेमेऽन्त्ययेदि मामिमवेति"–इति ७.५.१। अपरन्च चेह लोभाद्याहतचित्तानां तेज शून्यानाम्, मात्सर्य्यादिपूर्णानां च तम प्रकृतीनाम्, पापानुष्ठातॄणां दुर्मतीनामार्त्विज्याय वरणं निषिद्धम्। तथाहि— "त्रीणि ह वै यज्ञे क्रियन्ते,— जग्धं गीर्णं वान्त•—•स एतेषां तयाधा माशा नेशात्"–इति ३.५.२। य. यत्तु धनलोभादार्त्विज्य कामयमान क्व मपि यजमानं

तत्कर्मकारयितार मपर वा चाटुवृत्त्यादिभिस्तोषयन्नार्त्विज्यं लभते, तादृशेन तेन कृत तत् कर्म 'जग्ध' भक्षित, मुखमध्ये प्रविष्ट मिव दूषित भवति। यो हि समाजाधिपत्येन ग्रामप्रभुत्वेन वापरेण केनापि वा हेतुना यजमानादेर्भीति मुत्पादयन्नार्त्विज्य लभते, तादृशेन तेन कृतं तत् कर्म 'गीर्ण' गिलित , गलाध कृत मिव दूषित भवति। यस्तु विद्वानपि पापकर्मा भवति, तत्कृतं यत् किञ्चन कर्म तत् सर्वं 'वान्त' उद्गीर्ण , छर्दित मिव घृण्य भवति देवानाम्। तदेव-विधाना विविधाना मृत्विजा वरणाय यजमानो मनसि आशा मपि न कुर्यादिति। मूर्खस्यार्त्विज्यदूषणन्तूक्त मिहान्यथापि— "न ऋत्विजो यजमान कर्त्व मन्यस्य वित्त मादाय द्रवन्ति, य मनेव विदो याजयन्ति"-इति ८, २. ७।

अथ व्यवहार ।— राज्ञा पुरोहितस्यावश्यकता चात्र बहुधा प्रख्यापिता। तद्यथा — "न ह वा अपुरोहितस्य राज्ञो देवा अन्न मदन्ति , तस्माद्राजा यक्ष्यमाण ब्राह्मण पुरो दधीत, देवा मेऽन्न मदन्त्विति"-इति ८ ५ १। इत्थ ब्राह्मणजातेरेव पौरोहित्य मिति च ख्यापितम्। एतद्वचनोपक्रमे व्यक्तमाम्नातम्— "ब्राह्मण' पुरोहित."-इति। राजन्यवैश्ययो पुरोहितार्षेयेण दीक्षावेदनञ्च विहितम्— "पुरोहितस्यार्षेयेण दीक्षा मावेदयेयु , पुरोहितस्यार्षेयेण प्रवर प्रवृणीरन्"-इति (७, ४. ७.)। इतो वैश्याना मपि पुरोहितापेक्षा सूचिता। बुद्धिमत्तमाना मार्याणां पुरोहितविधे. कथा तु दूरे आस्ताम् , जडाना मपि पृथिव्यादीना पुरोहिता सन्तीति च कल्पितम्— "अग्निर्वाव पुरोहित पृथिवी पुरोधाता, वायुर्वाव पुरोहितो ऽन्तरिक्ष पुरोधाता, आदित्यो वाव पुरोहितो द्यौ पुरोधाता , एष वै पुरोहितो य एवं वेद, अथ स

तिरोहितो य एवं न वेद"–इति ८. ५. ४। तदेवं यथा पृथि-
व्यादिष्वग्न्यादीनां प्राधान्यम्, तथैव यजमानगृहेषु पुरोहितानां
प्राधान्यं ध्वनितम्, विहितञ्च पुरोहितानामेतद्विज्ञानवत्त्वम्;
ब्राह्मणानामपि येषां पृथिव्यादिनिष्ठाग्न्यादिपुरोहितत्वविज्ञान
मविदितम्, तादृशामविदुषां पौरोहित्यं सुतरां निषिद्धम्। तस्यै-
तस्यैतदुपसंहारवचनम्— "यो ह वै त्रीन् पुरोहितान् वेद, स
ब्राह्मणः पुरोहितः"–इति। एतेन च वचनेन वेदविदामेव
ब्राह्मणानां पौरोहित्यं व्यवस्थापितम्। "अयुव मार्यस्य राष्ट्रं
भवति, नैनं पुरायुषः प्राणो जहाति, आजरसं जीवति, सर्व मायु-
रेति, न पुनर्म्रियते, यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः
(८. ५. ३.)"–इत्यादिना पुरोहितानां यजमानमङ्गलकारित्वं
बहुधैव प्रपञ्चितम्। "तदप्येतदृषिणोक्तम्"–इत्युपक्रम्य सांहितिक-
मन्त्रत्रयप्रमाणेनाप्येतदेव (ऋ० सं० ४. ५०. ७, ८, ९.)
दृढीकृतम् (८. ५. ३.)। तत्रैव— "बृहस्पतिर्ह वै देवानां
पुरोहितः, तमन्वन्ये मनुष्यराज्ञां पुरोहिताः। बृहस्पतिं यः
सुभृतं बिभर्त्तीति यदाह, पुरोहितं यं सुभृतं बिभर्त्तीत्येव
तदाह"–इत्यादि द्रष्टव्यम्। बृहस्पतिशब्देनात्र सूर्यो निरुक्तादि-
प्रसिद्धः। स यथा वाय्वादिदेवानां पुरोहितः पुरःस्थितः, प्राधान्य-
भाक्पकारी च; मनुष्येष्वपि राजपुरोहितास्तथैव भवेयुः; तदत्र
संहितावचनमपि प्रमाणमित्याह—"बृहस्पतिं यः सुभृतं बिभ-
र्त्तीति (४. ५०. ७.)। "अग्निर्वा एष वैश्वानरः पञ्चमेनिः"–
इत्यादिना (८. ५. १.) पुरोहितानां कोपनत्वं संवर्ण्य, यजमानानां
तदुपशमने यत्नस्य कर्त्तव्यता चात्र विहिता। तदेतत्सर्वं मालोच्य
प्रतीयते, – तदानीन्तनराजपुरोहितानामसाधारणसम्मानभाक्त्वं,

राजसु राजगृहेषु च प्राबल्यं विशिष्टशक्तिमत्त्वारितत्त्वासीदिति। यपि तेषा मद्यतनपुरोहितानामिव कर्मकारयितृत्वं तत्तत्कर्ममन्त्र-पाठयितृत्वं च न क्वापीह गम्यते, न वा क्वचिदिह ब्राह्मणस्य पुरोहितापेक्षा सूच्यत इति च सुधीभिरालोच्य मेव॥

कर्मकारयितृभ्यो दक्षिणादानस्यातिकर्त्तव्यता चासीत् तदानी मपि। तदाह— "दातव्यैव यज्ञे दक्षिणा भवत्यल्पिकापि"-इति ६. ५. ८। केनापि हेतुना सा परित्यक्ता चेन्न पुनर्ग्रहणीया, केनापि प्रकारेणागतापि सा आपत्प्रशमनभावाय कस्मैचन प्रदे-येति चेहैव। तथाहि—"न निष्टतदक्षिणां प्रतिगृह्णीयात्" -इति, यदि त्वेनां प्रतिगृह्णीयात्, अप्रियायैनां भ्रातृव्याय दद्यात्"-इति च ६. ५. ८। यशोलिप्साप्यासीत्तदातिप्रबला। तदाह—"यम् ब्राह्मण मनूचानं यशो नर्च्छेदिति ह स्माहारण्यं परेत्य दर्भस्तम्बानुद्ग्रथ्य दक्षिणतो ब्रह्माण मुपवेश्य चतुर्होतॄन् व्याचक्षीत"-इति ५. ४. ४। कस्मिंश्चिद् दानादिकर्मणि स्व-श्रेष्ठताभिमानस्य पापहेतुत्वञ्चाभिमतं तेषाम्। तत्र एवैव माम्ना-तम्—"यो वै भवति, यः श्रेष्ठता मश्नुते स किल्बिषं भवति" -इति १. ३. २। 'श्रेष्ठता प्रयोगपाटवाभिमानम्'-इति सायणः।

आम्नातमेव बहुत्र हस्त्यश्वगवादिधनदानप्रर्श्तमागाद्याभिगानम्। तथाहि दीर्घतमिभरतस्य ( ८. ४. ८. )—

"हिरण्येन परीवृतान् कृष्णाञ्छुक्लदतो मृगान्।

मष्णारे भरतोऽददाच्छतं बद्धानि सप्त च"-इत्यादि।

इह श्रुतस्य मृगशब्दस्य हस्तिपरव्याख्यानं सायणीयम्; अस्तु तत् तथैव मन्तव्यम्, परं तत्कृतं बद्धशब्दस्य वृन्दमञ्ज्ञापरत्वं तु नाप्यभ्यं रोचते ; ताद्दग्दानं त्वत्यधिकं मित्यसम्भव मिति।

ऐतरेयाद्यराजदानगाथाश्लोकेषु दासीदानं च श्रुतम् – "दासी-सहस्राणि ददामि ते"–इति ( ८. ४. ८. )। एतेन तदानीमासीदार्यावर्त्तेऽत्र च मनुष्याणा मपि हस्त्यश्वादीना मिव क्रय-विक्रयदानप्रथेति स्पष्टम्। अत एव शौन:शेपाख्यानेऽपि श्रुतम्– "तस्य ह शतं दत्त्वा स त मादाय सोऽरण्याद् ग्राम मेयाय"–इति ( ७. ३. ३. )। 'तस्य' तस्मै शुन:शेपपित्रे मौयवसयेऽजीगर्ताय 'स:' हरिश्चन्द्रपुत्रो रोहित: 'शतं' बहु, शतसङ्ख्याकं वा मुद्रात्मकं धनं 'दत्त्वा' 'तम्' शुन:शेपम् आदायेत्यादर्थ:। निरुक्ते तु "स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते, न पुंस: ; पुंसोऽपीत्येके ; शौन:शेपे दर्शनात्"–इत्युक्तम ( ३. १. ४. )।

एवं पुत्रेषु पितु: स्वेच्छाजनितोऽन्यान्यविधोऽप्याचारोऽप्यासीत् तदानीं सुदुर्वार:। तद्यथा ( ७. ३. ५. )—

"अथ विश्वामित्र: पुत्रानामन्त्रयामास,
मधुच्छन्दा: शृणोतन ऋषभो रेणुरष्टक:
ये के भ्रातर: स्थ नास्मै ज्यैष्ठ्याय कल्पध्व मिति"–इति।

एव मन्यत्राप्यदपि—' ऐतशो ह वै मुनिरग्नेरायुर्ददर्श ;०—० सोऽमन्यत पुत्रान्; पुत्रका अग्नेरायुरदर्शं तदभिलपिष्यामि, यत् किञ्च वदामि तन्मे मा परिगातेति०—०। तस्याभ्यग्निरैतशायन एत्याकाले ऽभिहाय मुखं मभ्यगृह्णादहपत: पितेति ; तं होवा-चापेह्यलमभूर्यो मे वाच मवधी:०—० पापिष्ठां ते प्रजां करोमि यो मह्य ममकथा इति"–इति ६. ५,७।

पुत्राणां पितृदायभाक्त्व मपीह सूचितम्। तद्यथा— "नाभा-नेदिष्टं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन्सोऽब्रवीदेत्य किं मह्य मभाक्तेति"–इत्याद्याख्यानं ( ५. ७, ८. ) द्रष्टव्यम्।

वाणिज्यार्थं समुद्रयानारोहणपूर्वकं महासमुद्रे परिप्लवन-मासीत् तदानीं सुप्रचलितम्। अतएव तद्दृष्टान्ततयाम्नातं एवम्—"यथा समुद्रं प्रप्लवेरन्नेवं हैव ते प्रप्लवन्ते, ये संवत्सरं वा द्वादशाहं वा ऽऽसते'–इति ६ ४ ५। वनदस्युना मप्युपद्रव आसीत्तदानी-मिति चात्र सूचितम्। तद्यथा –'निषादा वा सेलगा वा पाप-कृतो वा वित्तवन्तं पुरुषं मरण्ये गृहीत्वा कर्त्तं मन्वस्य वित्त-मादाय द्रवन्ति"–इति ८ २ ७। एवं नागरिकग्रन्थिच्छेदकाना-मपि दृष्टान्तविषया समुल्लेखोऽत्र श्रुतः—"तं मृत्विजो यजमानं कर्त्तं मन्वस्य वित्त मादाय द्रवन्ति"–इति ८ २ ७।

आसीत्तदानीं चौर्य्य मपि तन्निन्दा च। तद्यथा सायणमते,—पुरा कदाचित् महर्षीणां मवादप्रसङ्गे कश्चित् पुरुषो बिसस्तैन्यलक्षण-मपवादं प्राप्य तत्परिहारार्थं मुनीनां मग्रे शपथं चकार, तदीयशपथो-क्तिरूपेयं गाथा— "अमेनस मेनसा सोऽभिशस्तादेनस्वतो वापहरा-देन। एकातिथि मप सायं रुणद्धि बिसानि स्तेनो अप सो जहार'–इति (५ ५ ५)। सायणमते गाथयैतया मृषापवादकारिणा-साय मतिथिप्रत्याख्यातृणा स्तेनकारिणाञ्च पापविशेष ख्यापितम्।

एकराट् सार्वभौमोऽप्यासीत्तदानीं सविज्ञातः। ततस्तत्प्र-विचयोऽप्येवम्—'स य समन्तपर्यायी स्यात् सार्वभौमः सार्वायुष आन्तादापरार्धात् पृथिव्यै समुद्रपर्यन्ताया एकराडिति"–इति ८ ४ १। तथाविधसार्वभौमनरपतेः सर्वेभ्यो मित्रराजेभ्य उप-ढौकनग्रहणञ्चैवाम्नातम्—"सर्वे हैव महाराजा आसुरादित्य इव ह स्म श्रिया प्रतिष्ठितास्तपन्ति, सर्वाभ्यो दिग्भ्यो बलिं मावहन्तो'–इति ७ ५ ८। 'सर्वे च ते इमे— कावषेय तुर, साहदेव्य सोमक, साञ्जेय सहदेव दैवावृधो बभ्रु, वैदर्भो भीम,

गान्धारो नग्नजित, अरिन्दम इति विश्रुत जानकि क्रतुवित, पैजवन सुदासैत्यष्टावेतरेयपूर्वपूर्वजा सार्वभौमा बभूवु रिति च तदुपक्रमग्रन्थत प्रतीयते।

महाराजस्य प्रियतमभार्य्याया सन्निधौ प्रजाना मावेदनप्रथा प्यासीत् तदानीम्, अत एव इन्द्रस्य प्रियायै वावातायै देवाना स्वाभिप्रायज्ञापनम्, तस्याश्च इन्द्र ज्ञापयामीति प्रतिश्रुत्यादिकथा श्रूयते चात्र— "ते देवा अब्रुवन्निय वा इन्द्रस्य प्रिया जाया वावाता प्रासहा नाम, अस्या मेवेच्छामहा इति। तथेति तस्या मैच्छन्त । सैनानब्रवीत्,— प्रातर्वै प्रतिवक्तास्मीति"–इति ३. २ ११।

राजभ्रातॄणा राजसहचरणव्यवहारश्चासीत। तत एवैव साम्नातम— "अदतयो वे सोमस्य राज्ञो राजभ्रातरो यथा मनुष्यस्य, तैरेवैन तत्सहागमयति" इति १ ३ २।

राजधानीपरिरक्षणाय तदभित प्राकारनिर्म्माणप्रथाप्यासीत्त दानीम्। तदाह— "देवासुरा वा एषु लोकेषु समयतन्त, ते या असुरा इमानेव लोकान पुरोऽकुर्वत"–इत्यादि १ ४ ६। 'पुरो ऽकुर्वत, प्राकारवेष्टितानि नगराणि कृतवन्त'–इति तत्र सायण। एतदाख्यायिकाया मसुरै सद्रोपस्थिते सङ्ग्रामे असुरेभ्यस्त्रिपुररक्षणार्थं मयोरजतसुवर्णमयप्राकारा निर्मिता देवैरिति सूचितम्। असुरोप द्रवतो यज्ञरक्षार्थं मग्निलोऽग्निप्राकारनिर्म्माणञ्च देवै कृत मिति च श्रुत मेतस्या माख्यायिकायाम्—' देवा वै यज्ञ मतन्वत०—०अग्नि मयी पुरस्त्रिपुर पर्य्यास्यन्त"–इति २ २ १। प्रबलतरै शत्रुभि राक्रान्ते राज्ये तद्रक्षणाय तदानीन्तनप्रजाना मपि परस्पर मन्त्रणा करणम, अत एव योधप्रवृत्ति, परस्पर मैकमत्याय प्रतिज्ञा रक्षणम, राजगचिरचितगृहार्दी पुत्रकम्बलादीन् समाप्य युद्धाय

प्रयाणञ्चेति सर्वं मिह १.४.७ द्रष्टव्यम् । प्रियवसुदानादिरूपसाम-कौशलतो रक्षपात सन्तरेण स्वकार्योद्धारचेष्टाप्याद्दतासीत् तदानीम् (१.५.१.)। परस्परैकमत्यस्थितये आज्यस्पर्शपूर्विका प्रतिज्ञा-पद्धतिश्च तदानीन्तनी प्रशंसनीया। तथाविधं प्रतिज्ञानं हि तानू-नप्त्रं मिति सर्ववेदेषु विश्रुतम्। तदिदम् ऐ० ब्रा० १.४.७, श० ब्रा० ३.४.२, तै० सं० १ २.११,६,२.२-६ श्रुति-वाक्येषु विहितं द्रष्टव्यम्। "न सतानूनप्त्रिणे द्रोग्धव्यम्"-इति चेह (१.४.७.) तदुपसंहारः। 'सतानूनप्त्रिणे' सहशपथकारिणे न द्रोग्धव्य मिति तदर्थः। शतपथे चैवम्— ३.४.४.८।

सैनापत्यनिर्णयः, तत्र च सेनापतेर्भागश्च: शत्रुसेनाक्रमणो-पायश्चेह वर्णित:— "स त्रिश्रेणिर्भूत्वा त्र्यनीकोऽसुरान् युद्ध मुप-प्रायद् विजयाय"-इत्यादि (३.४.१.)। युद्धकाले राजसाहाय्य कारिणा प्रजानां सामन्तानाञ्च प्रसादलाभकथाप्यस्त्यत्र— "सो-ऽवेदिमे वै किल मे सचिवा इमे माऽकामयन्त हन्तेमानस्मिन्नुक्थ-आभजा इति, तानेतस्मिन्नुक्थ आभजत्"-इति ३.२.१०। युद्ध-जयानन्तरं राज्ञो मर्यादाहदिश्चेह सूचिता; तदत्र "इन्द्रो वै वृत्रं हत्वा"-इत्याद्याख्यायिका द्रष्टव्या (३.२.१०.)। पराजितानां सन्तर्हस्तीनानि धनानि समुद्रतीरे प्रोथितानि भवन्ति सोऽप्यत्रेह श्रुतम् (५.२.६)। हस्तमुष्टिमध्ये एव गोपनीयं यद् बहुमूल्यं रत्नादिकं धनम्, तदेवान्तर्हस्तीनम्। एवञ्च तदाप्यासीदेव बहु-मूल्यहीरकादीनां व्यवहार इति साक्षात् प्रतीयते स्फुटम्॥

प्राय: सर्वसभ्यदेशेषु विद्यमान एव उपविमोकव्यवहारो-ऽप्यासीत् तदानीम्। तथा चाम्नायते— "यावेशोनङ्वाहिर्वान्ये-रन्येष्वान्ततरेष्वान्ततरे रुपविमोकं यान्ति"-इति ४.४.५।

तदिदं श्रुत सुपविमोकस्वरूप मद्यतन मिवैव। दूराध्वगमने एवेहशोपविमोकस्यावश्यकता चाम्नाता—'दीर्घाध्व उपविमोक यायात'–इति ( ६ ४ ७ )।

स्कन्धतो भारवहनाय वीवधस्य व्यवहार आसीत्तदानी मिति च प्रतीयते — "बृहत्पृष्ठ सवीवधतायै'–इत्येवमादिश्रुत ( ८ १ १ )। 'उभयत शिक्यद्वयेन जलकुम्भद्वय वोढु य काष्ठविशेष पुरुषाणां मंसे ध्रियते, स वीवध इत्युच्यते'–इति तत्र सायण। 'विवधवीवधशब्दौ उभयतो बद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्तेते' इति सि॰ कौ॰ (पा॰ सू॰ ४ ४ १७)। वीवधदण्डस्तु प्रायेण वशस्यैव भवति, तत स इह तेजनीति श्रुतम्— "तेजन्या उभयतोऽन्तयोरपस्त्तसाय वर्मो नह्यति'–इति ( १ २ ५ )।

सूच्या स्यूताना मध्यजनोचिताङ्गरक्षादीनाञ्चासीत्तदापि व्यवहार। श्रुत ह्येतत्— "सूच्या वास सन्दधदियात्"–इति ३ २ ७।

एव तदानी मपि कर्मठत्व श्रमकारित्व मुद्योगित्वञ्चैवासीत प्रशसनीयम्, अलसस्य श्रमकातरस्योद्योगहीनस्य त्वासीन्निन्दनीयतैव। तत एवैव मिह ( ७ ३ ३ ) श्लोकपञ्चक माम्नातम्—

'नानाश्रान्ताय श्रीरस्ति, इति रोहित शुश्रुम।
पापो नृषद्वरो जन इन्द्र इच्चरत सखा॥ १॥
पुष्पिण्यौ चरतो जङ्घे, भूष्णुरात्मा फलेग्रहि।
शेरेऽस्य सर्वे पाप्मान, श्रमेण प्रपथे हता॥ २॥
आस्ते भग आसीनस्य ऊर्ध्वस्तिष्ठति तिष्ठत।
शेते निपद्यमानस्य, चराति चरतो भग॥ ३॥
कलि शयानो भवति, सञ्जिहानस्तु द्वापर।
उत्तिष्ठंस्त्रेता भवति कृत सम्पद्यते चरन्॥ ४॥

चरन् वै मधु विन्दति, चरन् स्वादु मुदुम्बरम्।

सूर्यस्य पश्य श्रेमाणं, यो न तन्द्रयते चरन् ॥ ५ ॥'—इति।

यद्यप्येते गाथारूपा श्लोका अनेनैतरेयेणैव प्रमद्वत उद्गता इति नैतरेयकाल्लिकाम्नायार्थैतरेयकाल्लैऽप्येव विधोपदेशाना भार्गोदेयादर इत्यपि प्रतीयत एव। श्लोकाना मेषा मर्थास्तु सुगमा, तथापि प्रथम चतुर्थयो किञ्चिद् ब्रूम ।— यथा घोटवादयो मनुष्याणा वहन कुर्वन्तीति मनुष्यवाहा उच्यन्ते तथैवास्मच्छरीरस्थो लोहित एवाग्नि शारीरताप वहतीत्यग्निवाहत्वेन व्यपदिष्टो वेदे ( निघ० १ १५ २ ), लोहित एव रोहितो वैदिक । स च सूर्यचन्द्रो दयप्रत इति याज्ञीरात्रजन्य इति वा हरिचन्द्रीयो हरिचन्द्रीय इतीहाख्यात, रसहरणात् हरि = सूर्य इति हि सर्ववेदप्रसिद्ध । तथाचाग्निवाहनरूपशोणितधारिण सर्वानेव पुरुषान सम्बुध्य अपि राद्वेम सुपदेश मिति फलितम। नानेति। हे 'रोहित' इति' वय शुश्रुम' — 'अनायासात्' आभिमुख्येन श्रान्त आश्रान्त, तद्विपरीतोऽनाश्रान्तोऽनमस्तस्मै श्री नास्ति । अथवा नानाविध कार्येषु श्रान्तो नानाश्रान्तस्तस्मै श्रीरस्तीति। 'वर' तप कर्म विद्यादिभि श्रेष्ठोऽपि जन 'नृषत' नरि सीदन, व्यक्तिविशेष स्थायित सन् 'पाप' भवति। 'चरत' भ्रमणकारिण पुरुषस्य गिरिगिरिनदीग्राममीमादिसङ्कटेषु च सर्वत्रैव 'इन्द्र' अनुपम श्वयवान् ईश्वर इत् एव सखा' विद्यते। य किल नगरे स्वगृहे च रक्षक स एव अरण्यान्यादावपीति अर्थाद्यजनाय भ्रमणशीलस्य नाऽस्ति चिन्ताविषय इति भाव। कलिरिति। सर्वविधकर्तव्यकार्यस्य शयान' गत्यागत, अलस इति यावत्। एतदेव कलिलक्षणम्। तदेव कलियुगे धर्मार्थकाममोक्षाद्यर्जन

कर्मसु आलस्यबाहुल्य भवतीति निष्पन्नम्, निष्पन्नञ्च यस्मिन् कस्मिन् वा युगे यदैवालस्यपरतया कर्त्तव्यानुष्ठानावहेलन कार्त्त भवेत्, तदैवेदानी कल्यास्मिन कल्याश्रयो वाह मिति ज्ञेय मिति। 'सञ्जिहान' शय्या, शयनभाव वा त्यक्तु प्रवृत्तस्तत्रैवोपविष्ट। 'उत्तिष्ठन्' शय्या शयनभाव वा परित्यज्यान्यत्र, शय्यायां मेव वा दण्डायमान। 'चरन्' अनलस कर्म्म कुर्वन्निति।

मनुसहितायां मप्येवमेव युगलक्षण सस्मृतम् ९अ० ३०२श्लो०-

"कलि प्रसुप्तो भवति, स जाग्रद् द्वापर युगम्।

कर्मस्वभ्युद्यतस्त्रेता, विचरस्तु कृत युगम्' -इति।

तत्रैतदपि प्रतीयते,— कलिरवाद्य युगम, द्वापर द्वितीयम्, त्रेता तृतीयम, चतुर्थन्तु कृत मिति। द्वापरत्रेतेतिनामान्तरगत द्वित्रिशब्दतश्चैव मेव लभ्यते। तथा च कृतादेकपादावनत काल उच्यते त्रेतेति, ततो द्विपादावनती द्वापरम्, ततस्त्रिपादावनत एव कलियुग मिति। पुनरेकपादाद्युन्नत्या द्वापरादीनि युगानि भवन्ती त्येव मेव मद्दवावर्त्तन्ते युगानि। व्यक्तञ्चेद युतम्— "विवर्त्तेते अहनी चक्रियेव"-इति ऋ० स० १ १८५ १। प्रकृतिनियमो ऽप्यत्रानुकूल, न हि कश्चित् कुमार खल्वेकदैव तारुण्य यौवन चोल्लङ्घ्य वृद्धायते, नापि हि कश्चित् शयानोऽसञ्जिहानोऽनुत्तिष्ठन् स्यात् कार्यकुशल इति। -एव हि कलियुगानन्तर कृतयुगागमन-प्रतीक्षण भवेविसर्गव्यापारानुकूलवेदार्थानभिज्ञाना मेव। तत्त्वतस्तु कलियुगानन्तर द्वापरागमनम्, ततो त्रेतागमनम्, तत कृता गमनम्, चक्रवद् वम्भ्रम्यमानेऽस्मिन् जगति पुन त्रेतागमनम्, ततो द्वापरागमनम्, ततश्च पुन कलौ प्रादुर्भाव इत्येव वैदिकाग, क्रमाद्वतिक्रमावनतिविभ्रामभ्रमतश्च। क्रमोन्नतिपक्षस्तु प्रदर्शित

युगद्वोक्रश्रुतिन सुष्ठम एव, क्रमावनतिश्च तत्रायात् किन्न मत्तथ्यादित्यत एतद्विपरीत मत वेदविरुद्ध मित्ययदेय मेवार्थानाम्। अपर मपि,— यथा वर्षर्तौ सर्वर्त्तुसद्भाव 'वर्षा वै सर्व ऋतव'—इत्युपक्रम्य वर्णित शतपथे—"यदेव पुरस्ताद् वाति, तद् वसन्तस्य रूपम्, यत् स्तनयति, तद् ग्रीष्मस्य, यद् वर्षति, तद् वर्षाणाम्, यद् विद्योतते, तच्छरद, यद् वृष्टोद्गृह्णाति, तद्धेमन्तस्य"—इति (२ २ १ ०)। तथैव हि सर्वयुगधर्माणा प्रतियुगाश्रितत्व स्वीकारोऽपि नासमञ्जस इति ॥

अथ तदानीन्तनविज्ञानानि। तत्र,

पृथिव्या गतिहेतुविज्ञानम्, द्यावापृथिवीसम्बन्धविज्ञानम्, वृष्टिहेतुविज्ञानम्, उदकाना मतिज्ञाशहद्रभावहेतुविज्ञानम्, द्यावापृथिव्योरुभयोरेव प्रतिष्ठात्वविज्ञानञ्च यथा—'असौ वै लोक इम लोक मभिपर्यावर्त्तते ततो वै द्यावापृथिवी अभवता न द्यावान्तरिक्षान्तरिक्षाद् भूमि" इति ४ ४ ५। 'असौ' द्युलोक सूर्यलोक इति यावत्, 'इम' भूलोकम् 'अभिपर्यावर्त्तते सदैव अभित परितश्च 'आवर्त्तते' भ्रामयति। 'तत' तस्माद् वै' एव 'द्यावापृथिवी' द्यावापृथिव्यौ परस्परसम्बद्धे 'अभवताम्'। अन्तरिक्षात्' व्यवधानाद् 'द्यावा' द्युलोक 'न' भूमितो विच्छिन्न, तथा 'भूमि अपि तस्मात् 'अन्तरिक्षात्' व्यवधानाद् 'न विच्छिन्न। अतोऽस्यानुपद सूक्तम् "इमौ वै लोकौ सहास्ताम्, तौ व्यैताम्'—इत्युपपन्नम्। इमौ लोकौ' 'सहास्ता' वै परस्परसम्बद्धावेव विद्येते, 'तौ लोकौ 'व्यैताम्' विवाहसम्बन्ध युक्तौ स्त्रीपुरुषाविव। एतयो सम्बन्धज्ञापकहेतुरेव निर्दिष्ट इहैव—'नावर्षत् न समतपत् ते पञ्चजना न समजानत' इति। एतेन

विज्ञायते द्युपर्यायः सूर्य एवात्र वृष्टिहेतुस्तापहेतुश्चेति । 'पञ्चजनाः' ब्राह्मणक्षत्रियवैश्या इति त्रिविधा आर्याः, दस्युदासाविति द्विविधावनार्याविति च पञ्चविधा मनुष्याः । तादृशविवाहस्य पुरोहिताः 'देवाः' रश्मय एवेमे इत्याह– "तौ देवाः समनयंस्तौ संयन्ताविते देवविवाहं व्यहहेताम्"–इति । काव्योऽप्य एषः । तत्रैवं विवाहितयोस्तयोः स्त्रीपुरुषयोर्मिथः प्रीतिहेतुं निगमयति—"धूमेनैवेयं समूं जिन्वति, वृष्ट्यासाविमाम्"–इति ४. ४. ५ । 'धूमेन' रसहेतुवाष्परूपेणेत्यर्थः । संहितायां मथ्येव माम्नातम् ( १. १६४. ५१. )—

"समान मेतदुदक मुच्चैत्यव चाहभिः ।

भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः"–इति ।

'अहभिः' रश्मिभिः आकृष्टम् 'एतत उदकम्' 'उदेति' ऊर्ध्वं मागच्छति, 'अव च' नीचैरपि आगच्छतीत्येव । अत एव 'पर्जन्याः' मेघाः 'भूमिं' 'जिन्वन्ति' प्रीणयन्ति, 'अग्नयः' अग्निजन्यानि धूमोद्गतवाष्पाणि 'दिवं जिन्वन्ति' । अस्मादेव हेतोरुदकस्य क्रमहृदिराशित्वं चिरं तुल्य मित्याह 'समानम्'–इति । अन्यथोदकस्योर्ध्वगमनाभावे क्रमादतिहृदिरेव स्यात्, तथा नीचैस्त्वात मस्तरा क्रमात् समुद्रोऽपि शुष्येदिति वृष्टिनिदानविज्ञान मुदकसमत्वविज्ञानञ्च । एतयोः प्रतिष्ठारूपत्व माम्नातं यथा— "द्यावापृथिवी वै प्रतिष्ठे ; इय मेवेह प्रतिष्ठा असावमुत्र"–इति ३. ३. ५ । 'इह' भूलोके, 'इयम्' पृथिवी 'प्रतिष्ठा' प्रतिष्ठानम्, 'अमुत्र' द्युलोके 'असौ' सूर्यः, प्रति ष्ठेत्येव तदर्थः । इत्थं द्युलोकभूलोकयोरुभयोरेवाश्रप्रतिष्ठाहेतुत्वं च विज्ञापितम् ।

अथ पृथिवीभ्रमणविज्ञानम्, सूर्योदयास्तमयविज्ञानम्,

अहोरात्रविज्ञानञ्च यथा—"स वा एष न कदाचनास्त मेति नोदेति। त यदस्त मेतीति मन्यन्ते, अह्न एव तदन्त मित्वा थात्मान विपर्य्यस्यते, रात्री मेवावस्तात् कुरुतेऽह परस्तात्। अथ यदेन प्रातरुदेतीति मन्यन्ते, रात्रेरेव तदन्त मित्वाथात्मान विपर्य्यस्यते, अहरेवावस्तात् कुरुते रात्रो परस्तात्। स वा एष न कदाचन निम्रोचति, न ह वै कदाचन निम्रोचति"-इति ३ ४ ६। तदेतस्मादाम्नायात् सूर्य्यकर्त्तृक पृथिव्या भ्रामणादिक विस्पष्ट मवगम्यते। एव मेवान्यत्रापि श्रूयते। तद्यथाथर्व्वणिकाना गोपथे—'एतत् सुमस्ततर मिव भवति,—स वा एष न कदाच नास्त मयति, नोदयति, तद्यदेन पथादस्त मयतीति मन्यन्ते, अह्न एव तदन्त गत्वाथात्मान विपर्य्यस्यते, अहरेवावस्तात् कुरुते रात्री परस्तात्। स वा एष न कदाचनास्तमयति, नोदयति। तद्यदेन पुरस्तादुदयतीति मन्यन्ते, रात्रेरेव तदन्त गत्वाथात्मान विपर्य्यस्यते, रात्रि मेवाधस्तात् कुरुते, अह परस्तात। स वा एष न कदाचनास्त मयति, नोदयति, न ह वै कदाचन निम्रोचति" -इति (२ ४ १०)। छान्दोग्येऽपि ब्राह्मणे एव मेव सूर्य्यस्यो दयास्तमयाभाव आम्नात, विशेषतोऽसहायस्य तस्य मध्यस्थत्व गतिराहित्य मपि। तथाहि—'नैवोदेता नास्त मेता, एकल एव मध्ये स्थाता। तदेष श्लोक —

'न वै तत्र निम्रोचति नोदियाय कदाचन।

देवास्तेनाह सत्येन मा विराधिषि ब्रह्मणा'-इति।

न ह वा अस्मा उदेति, निम्रोचति"-इति (५ ३१ १-३)। अत्र स्थातेति पद गतिनिवृत्त्यर्थस्य स्थाधातोरिति सूर्य्यमण्डलस्य गत्यभावय बोधित। अध्यात्मपक्षेऽप्येषा श्रुतिर्व्याख्येया।

अथ देवताविज्ञानं यथा — "परोक्षप्रिया इव हि देवा."–इति ३. ३. ८। "न वै देवा अन्योऽन्यस्य गृहे वसन्ति, नर्तुर्ऋतोर्गृहे वसतीत्याहु."–इति ५. २. ४। "सत्यसंहिता वै देवा:"–इति च १. १. ६। व्याख्यास्यामश्चैमाः श्रुतीः सप्तमे प्रकरणे।

अथ सूर्यविज्ञानं यथा — "तेषु हि वा एष एतदध्याहित-स्तपति"–इति ४. ३. ४। 'तेषु' पूर्वोक्तेषु लोकेषु 'अधि' मध्ये 'आहित' परमेश्वरेण स्थापितः 'एषः' सूर्यः 'एतत्' सर्वं जगत् 'तपति' इत्यर्थं। तदेव मेषा पृथिव्यादिगनेचरान्ताना सर्वेषा मेव लोकाना मध्यस्थित एष सूर्यः, सर्वेषा मेषा तापकश्चेति विज्ञायते। सर्वेषाञ्च लोकाना शिरसा मुपर्य्येव दृश्यते सूर्य इत्यतस्तस्य सर्वेत उत्तरत्व मपि विज्ञायते। तद्यथा — "स वा एष उत्तरो ऽस्मात् सर्वस्माद् भूताद् भविष्यतः, सर्व मेवेद मतिरोचते यदिदं किञ्च"–इति ४. ३. ४। "उत्तर' — उद्धततरो भवति"–इति यास्कः (निरु० २. ३. २)। "विश्वस्मादिन्द्र उत्तरः"–इति त्वसकृत् समाम्नातम् (ऋ० म० १०. ८६. १–२३.)। इन्द्रश्च तत्र सर्वत्रैव सूर्य.। सूर्यकर्तृकं पृथिव्या धारणं तु वेदेषु "द्याधर्थ पृथिवी मभितो मयूखैः (ऋ० म ७. ९९. ३; वा०स० ५. १६.)" –इत्यादिभिर्मन्त्रैराम्नात मेव। 'अमतिः (निघ० ४९.)'–इतिपद-निर्वचनप्रसङ्गे (६ १. ३.) यास्केन चेष निगम प्रदर्शितः—

"अभि त्यं देवए सवितार मोण्योः कविक्रतु
मर्चामि सत्यसवए रत्नधा मभि प्रियं मतिम्।
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत् सवीमनि
हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः॥"

—इति मा० म० ह० भा० ५. २. ३. ८,— य० वा० म० ५.

२५. १, २ ;— तै० स० १. २, ६. २ ,— अथ० सं० १४. १, २। 'प्रमतिशब्देनात्मप्रकाशगत मादित्यस्य विज्ञान मुच्यते ; स हि प्रकाशसतत्त्व एव नान्यप्रकाशान्तर मपेचत इत्युपपत्तिः'–इति तत्र दुर्गाचार्य.। सूर्यस्य तापहेतुत्वेन जीवनहेतुत्वमप्यत्र श्रुतम् — "प्राण तदादित्येन समिन्धे, तस्मादय मुख्य' प्राण ;०—० सर्व तदात्मान मादित्येन समिन्धे, तस्मादयं सर्व एवात्मोष्ण। तदेतदेव जीवियतय मरियतय विज्ञानम्— उष्ण एव जीविष्यञ्छीतो मरिष्यन्निति"–इति श० ब्रा० ८. ७. ३. ११। 'सूर्यो नो', 'उदु त्य', 'चित्र'–इत्येवमादीनि सौरसूक्तान्यपीहालोच्यानि।

अथ चन्द्रविज्ञानं यथा— "एतद्वै दैवसोम यच्चन्द्रमा."–इति ७ ३. १०। देवेन सूर्येण, देवैः सूर्यरश्मिभिर्वा पेय सोमो दैवसोमः। 'योऽय चन्द्रमा अस्ति, एतदेव 'सोम' देवाना मपेचितं सोमद्रव्यसदृशं वस्तु'-इत्यर्थ' क्रतोऽत्र सायणाचार्येण। "एकया प्रतिधा पिबत् साकं सरासि त्रिंशतम्। इन्द्र सोमस्य काणुका (ऋ० सं० ८. ७७. ४.)"–इतिमन्त्रस्य व्याख्यानाय प्रोक्त मेतद् यास्कमुनिना— "एकेन प्रतिधानेन पिबन्ति तान्यत सरास्युच्यन्ते त्रिंशदपरपचस्याहोरात्रास्त्रिंशत् पूर्वपचस्येति नैरुक्ता', तद्या एता चान्द्रमस्य आगामिन्य आपो भवन्ति, रश्मयस्ता अपरपचे पिबन्ति" –इति (५. २. ६.)। "य मक्षिति मक्षितय. पिबन्ति"–इत्यपि तत्रैव निगमः। त पूर्वपचे आप्याययन्तीति च प्रमाणित तत्र "यथा देवा अशु माप्याययन्ति"–इतिनिगमप्रदर्शनेन। निगमावेतौ तैत्तिरीयसंहितायाम् (२. ४. १४. २ ), अथर्वसंहितायां (७ ७ १. ११.) च पाठभेदत' समाम्नातौ , तत्त्वतस्त्विमाद्दम्बे दीयाचेष विलुप्तशाखी प्रविलग्नाकम। अन्यत चोक्तम्— "सोऽस्याम

तेन न म्रियते, य अचितिं अचितय. पिबन्ति"–इति (निरु० ३. भा० ३८८पृ०)। 'यम्' 'अचितिं' सोमम् 'अचितय.' रश्मयः 'पिबन्ति', 'सः' सोमः सूर्यस्य 'भक्षम्' भक्ष्यम्, 'तेन' भवेन 'न म्रियते' नोपचीयते, सूर्य इति तदर्थः। शतपथेऽपि — "सोमो राजा देवाना मन्न यच्चन्द्रमा"–इति (२. ३. ४. ७.)। तैत्तिरीयब्राह्मणे च— "सोमो वै चन्द्रमा यम इव वै साक्षात् सोमं भक्षयन्ति"–इति (३. ४. १०)। "अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते, तदेतेनोपेक्षितव्यम्, आदित्यतोऽस्य दीप्तिर्भवतीति"–इति च निरु० २. ३. २। "अत्रा ह गोरमन्वत नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे"–इति (ऋ० सं० १. ८४. १५.) मन्त्रश्चात्र मानम्। अत एव गा सुषुम्णनामसूर्यरश्मिं धारयतीति गन्धर्वश्चन्द्रमा उच्यते। तत एवोक्त मिद यास्केन— "सुषुम्ण. सूर्यरश्मिश्चन्द्रमा गन्धर्व (वा० स० १८. ४०.) इत्यपि निगमो भवति, सोऽपि गौरुच्यते"–इति २. ३. २। यत्र चन्द्रमसि यः कलङ्को दृश्यते, स खलु देवयजनस्यास्य कर्मभूमेर्मर्त्यलोकस्य छायापातसम्भूत इति चाम्नात मैतरेयेण— "एतद्वा इय ममुष्यां देवयजन मदधाद् यदेतच्चन्द्रमसि कृष्ण मिव"–इति ४. ४. ५।

अथ वायुविज्ञानं यथा— "वायु प्राण"–इति ३. १. २, "मविद्यमसतो सेव एतत् पवते"–इति १. २. १, "वायुर्वै यक्ता, वायुना हीदं यत मन्तरिक्ष न मगृच्छति"–इति च ३. ५. ८। वायो मध्यायकत्वनर्पहेतुत्वे पुरस्ताद् व्याख्याते (५पृ०)। अत्र "इषे त्वोर्जे त्वा"–इत्यादिनिगमा अपि पर्यालोच्या.।

अथाग्निविज्ञानं यथा— "अग्निर्वै देवाना मवम."–इति १. १। "अग्निर्वै परिचिदग्निर्हीमा. प्रजाः परिचेति, अग्नि हीमा

प्रजा परिचिन्वन्ति' –इति ६ ५ ६। अत्रैव 'पारिचिती यजति' –इति तिसृणा ऋचा यजन विहितम्, ता सर्वा एवर्चोऽग्नि विज्ञानपरा। "अग्नेर्वा एतास्तन्वो यदेता देवता (३ १ ४)" –इत्यादिग्रन्थश्चाग्निविज्ञानपर एव। "अग्निर्वै शर्माणि अन्नाद्यानि यच्छति, अग्नि मेव तत् कल्पयति, अग्नि मप्येति"–इति २ ५ ८। "आग्नेयो ह्योषधय (१ २ १)"–इत्येवमादिश्वलयश्चैतदालोच्या।

अथाब्विज्ञान यथा— 'अद्भिरभिषिञ्चन्ति, रसो वा आप, सरेतम मेवैन तत् कृत्वा दीक्षयन्ति" इति (१ ४ ६), "अमृत वा एतदस्मिल्लोके यदाप '–इति (८ ४ ६), "आपो वरुणस्य पत्नय आसन्, ता अग्नि मभ्यध्यायन, ता समभवन् तस्य रेत परापतत, तद्धिरण्य मभवत –इत्यादि चान्यत्र (तै॰ ब्रा॰ १ १ ३ ८)। श्रुता चैषा ऋक्, ऋक्संहितायाम् (१ २३ २०)—

"अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा।

अग्निञ्च विश्वशम्भुव मापश्च विश्वभेषजी "–इति।

इतो ज्ञायते सोमाग्निभागसम्मिलनेन जात जल मिति। तथा तैत्तिरीयारण्यकेऽपि— "आपो ज्योतिरसोऽमृतम्'–इति (१० १५)। इतश्चावगम्यते— अप्सु ज्योतिर्भागो रसभागश्चेत्युभौ विद्येते, अमृतत्वञ्चास्तीति। यदुच्येत, पाश्चात्यविज्ञानत एवैव लभ्यते तदेतदिह तत इष्टैव कल्प्यत इति। अत्र ब्रूम,— इत्थ मेव भवति सर्वत्र सर्वविधान्तर्हितवस्तूना मुपलम्भ,— कालप्रभावतो भूगर्भेऽन्तर्हितानां हर्म्यवर्म्मकरिकरपञ्जरमुद्रादीना लाभोऽप्येव मेवानुसन्धानतो भवति, न हि तथा लब्धान् पदार्थान् सृष्टान् कर्त्तु कोऽपि शक्नोति, तथैव आदिविज्ञानानि यानि तम कालप्रभावादित क्रमाद नुपलभ्यमानानि तेषा मपेषा मेकस्य

षा कस्यचित कथ मपि सन्धान माप्य यदि कश्चित्तदाविष्करणे मनो निवेशयेत्, स श्रुतकल्पनाक्षदिति कथ मप्राप्तवचनो भवेदिति। तद्यथा, भ्राम्यमानेऽस्मिन्नुन्नतवनतिकरे कालचक्रे यद्या पाश्चात्यविज्ञानप्रभावजा विद्युतक्रिया दृश्यते, श्रायास्यति हि तम काले सैषा भविष्यत्येवान्तर्हिता, पुन प्रकाशकाले समुपस्थिते कश्चित् कथ मप्येतदनुसन्धान मुपगत्यास्याविष्कारं कर्त्तुमेषिष्यति चेत, स किं कल्पनाक्षदिति वाच्यो भविष्यतीति ते पाश्चात्यविज्ञानविद एव विचारयन्तु। "अप्सु ज्योति प्रतिष्ठितम्"–इति च स्पष्टम् (तै० ब्रा० ८ ८)। "अपा रसस्य यो र"–(तै० स० १ १२ २)–इत्यादयश्च श्रुतयोऽत्रालोचनीया। अपान्नपादिति ज्योतिर्नाम तन्निरुक्त्यादिकञ्च पर्यालोच्यम् (निघ० ५ ४ ११, निरु० १० २ ५ ६)। पुरातनाद्रूर ज्योति प्रकाशो ह्युक्तमहिताया श्रुत। तद्यथा — "आदित् प्रत्नस्य रेतसो ज्योति पश्यन्ति वासरम्। परो यदिध्यते दिवि"–इति ८ ६ ३०।

विष्णुविज्ञान यथा—"विष्णु परम"–इति १ १ १। विष्णो स्त्रिविक्रमणादिक च स्पष्ट माम्नात शतपथे— १ ८ ३ ७–१२। इद विष्णुविचक्रमे०—०व्यस्कभ्नाद्रोदसी। विष्णुरेते दाधार पृथिवी मभितो मयूखै"–इति च तै० स० १ २ १३ २। स एव विष्णु सूर्य एव। विष्णुविवरणन्त्विह पुन सप्तमे प्रकरणे विशेषतो वर्णयितव्य मस्तीतोऽत्राल पल्लवितेन।

अथ गर्भादिविज्ञान यथा— "पराञ्चो गर्भा धीयन्ते, पराञ्च सम्भवति,०—० मध्ये गर्भा धृता ०—०अमुतोऽर्वाञ्चो गर्भा प्रजायन्ते'–इति (३ १ १०)। 'रेतस्तत् सिक्त विकरोति, सिक्तिर्वा अग्रेऽथ विकृति ०—८ रेतस्तद् विकृत प्रजनयति, विकृ

तिर्वां यथेऽग्र जाति."–इति (२. ५. ७.)। "स्त्रूने वै रेत सिक्तं मध्यं स्त्रियै प्राप्य स्वविष्टं भवति"–इति (६. ३. १.)। "तद्या गर्भो योन्या मन्तरेवं सम्भवच्छेते, न वै सकृदेवाग्रे सर्वः सम्भवति, एकैकं वा अङ्गं सम्भवतः सम्भवति"–इति (६. ५. ५.)। षड्विधं वै पुरुषः षडङ्ग आत्मान मेव तत् षड्विधं षडङ्गं विकरोति –इति (२. ५. ७.)। "चक्षुः पुरुषस्य प्रथमं सम्भवतः सम्भवति" –इति (३. १. २.)। "ज्यायानसन् गर्भः कनीयांसं सन्त योनिं न हिनस्ति"–इति (५. ३. १०)। "मुक्ता गर्भा जरायो र्जायन्ते०—० सहैवोल्वेन कुमारो जायते"–इति (१. १. ३.)। "मुष्टी वै कृत्वा गर्भो ऽन्तः शेते, मुष्टी कृत्वा कुमारो जायते" –इति (१. १. ३.)। "कुमारं जातं संवदन्ते प्रतिधारयति वै गीवा ग्रयो गिर इति"-इति (३. १. २.)। "कुमारं जातं मय-दन्ता उप वै शुश्रूषते नि वै ध्यायतीति"–इति (३. १. २.)। "कुमारो जातः पयेव प्रचरति"–इति (३.१. २.)। "कुमारं जात जघन्या वागाविशति"–इति (३. १. २.)। अथाप्यस्थे वारण्यके— "पुरुषे ह वा अय मादितो गर्भो भवति, यदेतद्रेतस्त देतत्सर्वेभ्योऽङ्गेभ्यस्तेज सम्भूत मात्मन्येवात्मानं बिभर्त्ति; तद् यदा स्त्रियां सिञ्चत्यथैनज्जनयति"–इति (२. ५. १.)। अत्रैवास्मे मृतानां जन्तूनां मातिवाहिकदेहधारण पुनर्जन्मविधानप्रत्याख्यानम्– "अथास्याय मितर आत्मा कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते"–इति। आतिवाहिकदेहधारणमप्यन्यत्रापि सुव्यक्तम्– "तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽऽत्मान मुपसंहरति"– इत्यादि श० ब्रा० १४. ७. २. ४ द्रष्टव्यम्।

अथ शारीरादिविधानं यथा— "रेतः पुरुषस्य प्रथमं सम्भ

वतः सम्भवति"–इति( ३.१.२. )। "ऊर्द्धाः पुरुषस्य भूयांसः प्राणाः" –इति ( ६. ३. ५. ) ।,"प्राणास्तु इमेऽवाञ्चो रेतस्यो मूत्रः पुरीष्य-इति"–इति, "प्राणो वा अय सन् नाभिरिति, तस्मान्नाभिस्तन्नाभि र्नाभित्वम् , प्राण मेवास्मि'स्तद्दधाति"–इति ( १. ४. ३. ) । "पुरा नाभ्या अपि शसी वपा सुत्खिद्यात्"–इत्यादीनि वचनानि च ( २. १. ६. ) शारीरतत्त्वबोधकानि । "मुखतो वै प्रजा अन्न मदन्ति०-० मध्यतो वै प्रजा अन्नं धिनोति "–इति ( ५. १. ३. ) । एकं अध-चुर्द्धेधा"–इति ( २. ४. ८. ) । "अनन्तर मक्ष्ण' तत्पष्म्०—०यैव कनीनिका येन पश्यति"–इति, "अन्तरं कर्णस्य येनैव शृणोति" –इति, "अन्तरं नासिकयोः येनैव गन्धान् विजानाति"–इति, "अन्तरं मुखस्य जिह्वा-तालु दन्ताः०—० येनैव वाचं व्याकरोति, येन स्वादु चास्वादु च विजानाति"–इति च (५. ४. ३.) । "पाङ्क्तोऽयं पुरुषः पञ्चधा विहितो लोमानि त्वङ् मांस मस्थि मज्जा"–इति ( २. २ ४. ) । "षड्विधो वै पुरुषः"–इत्यादि च (२. ५. ७.) ।

अथ खाद्यविज्ञानं यथा— "अमृतं वा एतदस्मिंल्लोके यदाप." –इति ( ८. ४. १. ), "रेतो वा आप."–इति ( १. १. ३. ), "आज्यं वै देवानां सुरभि, घृतं मनुष्याणाम् , आयुत पितॄणां, नव नीतं गर्भाणाम्"–इति ( १. १. ३. ), "इन्द्रियं वा एतस्मिं ल्लोके यद् दधि'–इति ( ८. ४. ६. ), तेजो वा एतद् घृतम्" –इति ( ८. ४. ६. ), "यद् घृतं तत् स्त्रियै [ स्त्रियाः ] पयो ये तण्डुलास्ते पुंसः"–इति ( १. १. १. ) । "रसो वा एष ओषधि वनस्पतिषु यन्मधु"–इति ( ८. ४ ६. ), "स वा एष पशुरेवाल-भ्यते यत् पुरोडाश."–इत्यादि च ( २. १. ८. ) । मिसाना मपि खाद्यत्वं तदासीत् प्रशस्तम् । तदिदं ५. ५. ५ द्रष्टव्यम् ।

'विसानि=पद्ममूलानि'-इति तद्भाष्ये सायण । अस्मन्मते तु तृणखानीति विशेष । अन्यच्च पयोविकाराणां दशानां खाद्यानामपि नामान्याम्नातानि— "गौर्वै प्रतिधुक, तस्यै शृत, तस्यै शर, तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चन, तस्यै नवनीत, तस्यै घृत, तस्या आमिक्षा, तस्यै वाजिनम"-इति श० ब्रा० ३ ३ ३।

अथ भेषजविज्ञानं यथा— "तेजो वा एतदक्ष्योर्यदाञ्जनम"-इति १ १ ३। "ज्योतिर्वै शुक्रं हिरण्यं,०—० मृत्युर्वै तमश्छाया, तेनैव तज्ज्योतिषा मृत्यु तमश्छाया तरति"-इति ७ २ ११। आयुषार्थं तत्प्रयोगविधिरप्यन्यत्राम्नात — "हिरण्याद् घृतं निष्पिबति, आयुर्वै घृतममृतं हिरण्यम्, अमृतादेवायुर्निष्पिबति शतमानं भवति"-इति तै० स० २ ३ ११ ८। अत्राह तत्सूत्रकार — "खादिरं पात्रं चतुः स्रक्ति प्रयुनक्ति सौवर्णस्य प्रवर्त्त शतमानस्य छतम्"-इति, "भुक्त्वा खादिरं सादयित्वा तस्मिन् प्रवर्त्त मवदधाति" -इति च तत्रैव। 'प्रवर्त्त कर्णाभरणं कुण्डलम्-इति, 'शतमानं पञ्चपलपरिमितम्'-इति, 'मानशब्दो गुञ्जावीज ब्रूते'-इति च तत्रैव सा० भा०। वपाया रेतोरूपत्वाख्यानेन रेतोवृद्धिकरत्वं शुक्रम्, सुसूक्ष्मसुवर्णपत्रसम्पिडिता तत्तौषधार्थं तथा व्यवहारेऽपि ध्वनित। "सा वा एषा रेत एव यद्वपा, प्रेव वै रेतो लीयते, प्रेव वपा लीयते, शुक्लं वै रेत, शुक्ला वपा, अशरीरं वै रेतोऽशरीरा वपा, यद्वै लोहितं यन्मांसं तच्छरीरं तस्माद् यावदलोहितं तावत्परिवासयेति०—० वपाऽऽज्यस्योपस्तृणाति हिरण्यशल्कं आज्यस्योपरिष्टादभिघारयति" -इति (२ २ ४)। पयस्याया कुक्कुरविषनाशकत्वञ्चेह सूचितम्— "आसुरी वै दीर्घजिह्वी देवानां प्रातःसवनं मवालेट्"-इत्यादिना (२ ३ ४)।

ब्राह्मणस्य भिषग्व्यवसायनिषेधोऽप्यन्यत्र— "ब्राह्मणेन भेषजं न कार्यम् ; अपूतो ह्येषोऽमेध्यो यो भिषक्"–इति तै० सं० ६. २. ८. २। भेषजकरणकाले ब्राह्मणस्य तत्रोपवेशनन्तु विहितम्— "उदपात्र मुपनिधाय, ब्राह्मणं दक्षिणतो निषाद्य, भेषजं कुर्यात्"–इति च तत्रैव (४.)।

भैषज्यस्य त्रिधात्व मपि विहितं तत्रैव— "अग्नौ तृतीयम्, अप्सु तृतीयम्, ब्राह्मणे तृतीयम्"–इति। तृतीयं = तृतीयांशम्; रोगनिर्हरणसामर्थ्य मिति यावत्।

सामान्यरोगनाशाय धीराणां प्रकृतेरानुकूल्याय कालप्रतीक्षण मेव भेषज मिति च सिद्धान्तित मिह दृश्यते। तथाहि— "अश्विनौ वै देवानां भिषजौ"–इति (१. ४. १.)। अश्विनौ = अहोरात्रौ (१२. १. १.) इत्यपि निरुक्तसिद्धान्तः, "विद्वांसो वै देवाः"–इति च श० ब्रा० ३. ७. ३. १०।

अथ कालविज्ञानम्— "उषस्यागताया मरुण मिवैव प्रभात्यु-षसो रूपम्"–इति ४. २. ३। "तम इव हि रात्रिर्मृत्युरिव"–इति ४. १. ५। "द्वादशमासाः संवत्सरः"–इति १. १. १। "त्रयोदशो मासो नानुविद्यते"–इत्यादि ३. १. १। "षडर्तवो हैमन्तशिशिरयोः समासेन, तावान्संवत्सरः"–इति १. १. १। "पञ्च वा ऋतवः संवत्सरस्य, यद् षडेवर्त्तवः"–इति शतपथे ४. ५. ५. १२। "त्रयो वा ऋतवः संवत्सरस्य"–इति च तत्रैव १४. १. १. २८। "त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि" –इति २. २. ७, "सप्त च वै शतानि विंशतिश्च संवत्सरस्या-होरात्राः"–इति च २. २. ७।

अथ दिग्विज्ञानं यथा— "असौ वै (आदित्येनैव) प्राचीं दिशं

प्रजानायाग्निना दक्षिणा सोमेन प्रतीचीं सवित्रोदीची मिति। ०—० पुर उदेति पश्चास्त मेति०—०, दक्षिणतोऽग्र ओषधयः पच्यमाना आयन्त्याग्नेय्यो ह्योषधय ०—०, प्रतीच्यो ह्यापो बह्व्यः स्यन्दन्ते, सौम्या ह्याप ०—०, उत्तरतः पश्चादय भूयिष्ठं पवमान पवते, सवितृप्रसूतो ह्येष एतत् पवते"–इति १. २. १।

अथ देशप्रकृतिविज्ञानं यथा— "उत्तरत पश्चादयं भूयिष्ठ पवमान. पवते"–इति, दक्षिणतोऽग्र ओषधयः पच्यमाना आयन्ति" –इति, "प्रतीच्योऽह्यापो बह्व्यः स्यन्दन्ते"–इति च १. २, १। प्रत्यञ्चि दीर्घारण्यानि भवन्ति"–इति ३. ४, ६। प्राच्यो ग्रामता बहुलाविष्टा"–इति ३. ४. ६। प्राच्या वै दिशि देवा. सोमं राजान मक्रीणन्"–इति च ३, ३. १।

अथ शिल्पविज्ञानं यथा— "देवशिल्पान्येतेषा वै शिल्पाना मनुकृती ह शिल्प मधिगम्यते,— हस्ती कंसो हिरण्य मश्वतरी· रथ शिल्प मिति"–इति १, ३. ५, २, १. २। अथान्यत्रापि— "यद्वै प्रतिरूप तच्छिल्पम्"–इति (शत० ब्रा० ३, २, १, ५,), "एतच्छिल्प मेव वर्ण."–इत्यादि च तत्रैव (१. १. ७. ३.)। तैत्तिरीयब्राह्मणाम्नातमन्वयोस्तथाविध मपि (२, ७. १५ २, ३. ३. २. १.) "दिवः शिल्प मवततम्"–इत्यादि, "येभिः शिल्पे' पप्रथाना मदृंहत्"–इत्यादि चेति।

अथ शब्दार्थविज्ञानं यथा— "यद्वै देवाना नेति तदेषा मो म्"–इति ६. ५. १। शतपथेऽप्येवम्— "यद्वै नेत्यृचि ओ मिति तत्"–इति १. १. १, ३०। एतदुदाहरण मेवेद गम्यते— "गौतम ! क त्व वैश्वानरं वेत्थ ? इति, पृथिवी मेव राजन्निति होवाच, ओम् इति होवाच"–इति १०. ६. १. ४। पुनस्तत्रैव

तत उत्तरं देवसङ्घानिर्णयप्रसङ्गे— ११. ६. ३. ४। "ओ३मित्यृचः प्रतिगर एवं तथेति गाथायाः ; ओ मिति वै दैवं तथेति मानुषम्"–इति ऐतरेये ( ७. ३. ६. )। "तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति, तानेकधा समभरत्, तदेतदो मिति"–इति, "ओ मिति वै स्वर्गो लोकः, ओ मित्यसौ, योऽसौ तपति"–इति, "ओ मिति प्रणौति"–इति चात्रैव ( ५. ५. ७. )। "ये वा अनूचानास्ते कवयः"–इति २. १. २, "ये वै ते न ऋषयः पूर्वे प्रेतास्ते वै कवयस्तानेव तदभ्यतिवदति"–इति च ६. ४. ४। "विश्वस्य ह वै मित्रं विश्वामित्र आस"–इति ६. ४. ४। "हिरण्यकशिपावासीन आचष्टे, हिरण्यकशिपावासीनः प्रतिगृह्णाति ; यशो वै हिरण्यम्"–इति च ७. ३. ६। शतपथतैत्तिरीययोस्त्वितोऽधिकतरं शब्दार्थविज्ञानं द्रष्टव्यम्।

इत्थोदाहृतेभ्योऽन्यान्यपि बह्वन्याचारव्यवहारविज्ञानवचनानीहोपलभ्यन्ते, तानि चालोचनयोग्यानीत्यकथित मपि सिद्धम् ॥

---

## ( ६ )

अथैतद् विचार्य मस्ति, कस्याः शाखाया इद मैतरेयकं ब्राह्मण मिति। तत्रादौ शाखापदार्थो निरूपणीयः, ततः कति शाखा ऋग्वेदस्य ?, किन्नामिका चाद्य प्रचलितेय मिति निर्णेतव्यम्, तत्रैव लुप्तालुप्तविचारणा चेति।

अस्ति बहुषु पुराणेषु शाखाकथा वर्णिता, तत्र च विष्णुभागवतयोर्विशेषेण। तद्यथा ऋक्शाखानिर्णयप्रसङ्गे –

"बिभेद प्रथमं विप्र पैल ऋग्वेदपादपम् ।
इन्द्रप्रमतये प्रादात् वाष्कलाय च संहिते ॥
चतुर्धा स बिभेदाथ वाष्कलिर्निजसंहिताम् ।
बोध्यादिभ्यो ददौ तास्तु शिष्येभ्य. स महामुनिः ॥
बोध्याग्निमाठरी तद्वद् याज्ञवल्क्यपराशरौ ।
प्रतिशाखास्तु शाखायास्तस्यास्ते जगृहुर्मुने ॥
इन्द्रप्रमतिरेकां तु संहिता स्वसुत तत' ।
माण्डुकेयं महात्मानं मैत्रेयाध्यापयत् तदा ॥
तस्य शिष्यप्रशिष्येभ्य. पुत्रशिष्यान् क्रमाद् ययौ ।
वेदमित्रस्तु शाकल्यः संहिता ता मधीतवान् ॥
चकार संहिता' पञ्च शिष्येभ्यः प्रददौ च ताः ।
तस्य शिष्यास्तु ये पञ्च तेषा नामानि वै शृणु ॥
मुद्गलो गालवश्चैव वात्स्यः शालीय एव च ।
शिशिरः पञ्चमश्चासीत् मैत्रेय सुमहामुनि. ॥
संहितात्रितयं चक्रे शाकपूणिरथेतरम् ।
निरुक्त मकरोत् तद्वत् चलाकश्च महामति ॥
निरुक्तकृच्चतुर्थोऽभूद् वेदवेदाङ्गपारगः ।
इत्येता प्रतिशाखाभ्योऽप्यनुशाखा द्विजोत्तम ॥
वाष्कलिश्चापरस्तिस्रः संहिताः कृतवान् द्विजः ।
शिष्य' कालायनिर्गार्ग्यस्तृतीयश्च कथाजव ।
इत्येते बह्वृचा. प्रोक्ताः संहिता यैः प्रकीर्त्तिताः ॥"

—इति वि० पु० ३. ४. १६ -२५ ।

अथ भागवते १ स्क० ४ अ० २१ श्लो०—
"त एत ऋषयो वेद स्व स्वं व्यस्यन्ननेकधा ।

शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन् ॥"–इति ।
पुनस्तत्रैवान्यत्र ऋक्शाखावर्णनप्रसङ्गे १२ स्क० ६ अ०—

"पैल. स्वसंहितामूचे इन्द्रप्रमितये मुनिः ।
बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् ॥
चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव ।
पराशरायाग्निमाठरायेन्द्रप्रमतिरात्मवान् ॥
अध्यापयत् संहितां स्वां माण्डूकेयमृषिं कविम् ।
तच्छिष्यो देवमित्रश्च सौभार्यादिभ्य ऊचिवान् ॥
शाकल्यस्तत्सुतः स्वां तु पञ्चधा व्यस्य संहिताम् ।
वात्स्यमुद्गलशालीयगोखल्यशिशिरेष्वधात् ॥
जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम् ।
बलाकपैङ्गवैतालविरजेभ्यो ददौ मुनिः ॥
बाष्कलिः प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम् ।
चक्रे वालायनिर्भज्यः काशारश्चैव तां दधौ ॥
बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः ।
श्रुत्वैवं छन्दसां व्यासं सर्वपापे. प्रमुच्यते ॥"–इति ।

इत्थं तु गम्यते वेदाशा इति, शाखा इति चाभिन्नार्थे पदे । एवं हि यथा भागवतोऽयं द्वादशभि स्कन्धैर्विभक्त, पुनस्तत्स्कन्धाश्चबहुभिरध्यायैर्विभक्ताः, तथैव एको वेदः प्रथमं चतुर्धा विभक्तः, पुनस्ते चत्वारो भागाश्च बहुधा विभक्ताः ; स एवैकैको भाग-भागः शाखेति व्यपदिश्यत इति । तथा च यथा भागवतीय प्रत्य-ध्यायस्य पाठो भिन्नो विषयश्च विभिन्न एव एव प्रतिशाखं मन्त्रा-म्नायोऽपि भिन्न उपदेशाश्च विभिन्ना एव ; किन्तु यथा भागवतस्य कस्मिन्नप्येकस्मिन्नध्यायेऽधीते न त्वेकस्यापि स्कन्धस्याध्ययनं सम्पद्यते

तथैव कस्या मप्येकस्या शाखाया मधीताया नैवैकस्य वेदस्याध्ययनं भवेत् सम्पाद्य मिति। आह चैतत् समासतः कूर्मपुराणे—

"एकविंशतिभेदेन ऋग्वेदं कृतवान् पुरा।
शाखानान्तु शतेनाथ यजुर्वेद मथाकरोत्।
सामवेदं सहस्रेण शाखानाञ्च विभेदत।
अथर्वाण मथो वेदं बिभेद नवकेन तु।
भेदैरष्टादशैर्व्यासः पुराणं कृतवान् प्रभुः।"—इति १. ५१।

एवञ्च यथा पुराणानि एकव्यक्तिकृतानि अष्टादशसङ्ख्याकानि, तथैव वेदशाखाः सर्वा अप्येकव्यक्तिनैव वेदानां खण्डखण्डीकरणेन सम्पादिता मिव पार्थक्य मापन्ना इत्येवाभिमतं तेषाम्। अत एवोक्तं वाङ्गतर्कवाचस्पतिना स्वकृते वाचस्पत्ये— "शाखा वेदैकदेशे"—इति, "चरणो वेदैकदेशे शाखापरपर्याये ; 'गोत्रं च चरणैः सह' महाभाष्य का॰"—इति च। वाङ्ग विश्वकोषकारादयोऽप्येतच्चरणानुसारा एव। तथाच वेदपरिच्छेदविशेषो वेदाश शाखापदार्थं निष्पद्यते, बहूना मनधिगतवेदानां तत्त्वतो ब्रह्ममन्यूना मेव मेव विभ्रमय।

तदेवं पुराणवर्णितं शाखाविभागमतं प्रेक्षावतां वेदविदुषा स्यादुपेक्षणीयम्, आप्तवचनानुमानप्रत्यक्षतस्तथाप्रतीतेः।

तथाहि— शाखात मिद कौषीतक्यारण्यके वंशब्राह्मणे— "अथ वंशो नमो ब्रह्मणे नम आचार्येभ्यो॰—॰ गुणाख्याच्छाङ्खायनादस्माभिरधीतं, गुणाख्यः शाङ्खायनः कहोलात्"—इत्यादि (१४ अ॰)। एतस्यैव कहोलशिष्य शाङ्खायनस्यैरध्ययनभेदादितः— मज्ञाता शाङ्खायनी शाखा ; सैव ऋक्शाखातीय प्रसिद्धा। गी! अस्या नामापि न स्मृतं विष्णुभागवतपुराणयोरिति

स्फुट मिहाप्तवचनानैक्यम्। यच्चोक्तं कौर्मे वैयासिक्य एव सर्वाः शाखा इति, तदप्येतत्सदाप्तवचनविरुद्धम्।

अपरथाप्याप्तवचनविरोध उपलभ्यते यथा— अस्ति शौनकीया अनुवाकानुक्रमणी, तत्र शाकलबाष्कलशाखयोः प्रथममण्डलगत क्रमपार्थक्यप्रदर्शनायोक्तम् –

"गौतमादीमिजः कुत्सः परुच्छेपाद्दपेः परः।

कुत्साद् दीर्घतमा इत्येष तु बाष्कलकः क्रम."–इति (२१.)।

"अथ बाष्कलकैस्य विशेष माद्यमण्डले आह,— उपप्रयन्तो नासत्याभ्याम् अग्निं होतारम् इमं स्तोमं वेदिषद इति बाष्कलकः क्रमः ; उपप्रयन्त इमं स्तोम नासत्याभ्याम् अग्नि होतारं वेदिषद इति शाकलकः क्रम इत्यर्थ । अथैव सुक्तेष्वसरमण्डलनवके न क्रम-विपर्यासः"–इति तट्टीका षड्गुरुशिष्यकृता। एवं हि शाकलबाष्कलयो क्वचित् क्वचिन्मन्त्रपाठक्रमान्यत्वेऽपि ग्रन्थैकत्व मुच्यताम्।

किं बहुना, महामुनिवेदव्यासप्रणीत इति यः प्रसिद्धचरण व्यूहाख्यः स्वल्पो ग्रन्थः, तत्राप्युक्तम्— "तेषा मध्यायाश्चतुष्षष्टि."-इत्यादि शाखापरिच्छेदादीना मैकविध्यम्, 'तेषा माम्नायनादि-शाखाना समानाध्ययनं सूचयति'–इति हि तद्व्याख्यानम्। तदेवं ब्रह्मविष्णवादिपुराणाना शाखाभेदप्रकरणे माप्तवचनानैक्यविरोधा दितो जलमध्यस्थमसिचोदवत् विलीयत इति सुतरा मभ्युपेयम्।

सन्ति च प्रदर्शितपौराणिकमतविरोधप्रमापकानि स्मृतिवच-नानि। तद्यथा— "वेद कृत्स्नोऽधिगन्तव्य "–इत्यस्ति (२.१६५) मनुशासनम्, ततदिदं कृत्स्नाध्ययनं तन्मये सहस्रशाखसामवेदिना नेकजन्मायुषि कथङ्कारं भवेत् सम्भाव्यम्? विहितश्च तद ध्ययन द्वादशस्वेवाब्देषु तत्रैव – "षट्त्रिंशदाब्दिकं चर्यं गुरोस्त्रै-

वैदिक यज्ञम्''-इति (३. १.)। विष्णुगौतमयाज्ञवल्क्यसंहिता स्वपि प्रतिवेद द्वादशाब्द ब्रह्मचर्यं विहितम्। 'वेदानधीत्य वेदौ वा वेद वापि यथाक्रमम्। अविप्लुतब्रह्मचर्यो गृहस्थाश्रम मावसेत्'' -इ त्येवमादीनि वचनानि च (म०३ २) द्रष्टव्यानि। तस्मात् पौराणिक शाखाभेदो मन्वादिमतविरुद्ध इत्यनुमानञ्च नासङ्गतम्।

अत्रापि संशयोत, कस्याप्येकस्य वेदस्य कतमयोरपि द्वयो शाखयोराद्यन्तपाठदर्शनादेव स विनेय, विनीयेत च तदा 'वेदाशाखा' इति पौराणिकं मतं सूर्योदये यथान्धकार, प्रत्यक्ष इव लीनम्।

वस्तुतोऽतिप्राचीनकाले लिपेरभावात् लिखितपाठकस्य निन्दा श्रवणाद्वा वेदानां लिखितपाठ्यत्वाभावादाभेदानुश्रविकत्वम्, तत कालभेददेशभेदव्यक्तिभेदादिभिरध्ययनक्रमोच्चारणादिभेदात क्रमभेदा पाठभेदाश्च सम्भवा, तत एवैकैकस्य वेदस्य बहुनासतो बह्व्य संहिता प्रसिद्धिङ्गता, तासु मन्त्रपाठन्यूनातिरिक्तता च किञ्चित सञ्जाता; आचार्याणां प्रकृतिवैषम्यात् तत्सद्य आम्नायानुरोधाच्च अनुष्ठेयभेदा प्रयोगभेदाश्चाभवन्निवार्या, तत एव ब्राह्मणबाहुल्य कल्पबाहुल्यञ्च सुतरा सम्भवम्। इदमेव शाखाभेदनिदानम्। तदित्थ मेकैकस्य वेदस्य बहुशाखत्वेऽपि एकैकस्या शाखाया अध्ययनत एव भवेदधीत एवैकैको वेद, सर्वास्वेव शाखासु मूलसंहितैक्यदर्शनात्, किञ्चित्पाठन्यूनाति रिक्तेन, किञ्चित् पाठक्रमोच्चारणभेदेन, किञ्चिदनुष्ठानपद्धतिभेदा दिना च न ह्येवाभवत् वास्तविक संहिताभेद।

अतोऽत्र त्वेव मेवावधार्यम्—एष किल वेदशाखाभेदो न लौकिककर्तृका, न च ब्रह्मविष्णुपुराणादिपन्थभेदवत्, नापि प्रथमाय

ध्यायभेदतुल्यः ; प्रत्युत भिन्नकालदेशस्थलिखिताना मेकग्रन्थीयाना बहुतरादर्शपुस्तकाना मवश्यम्भाविन एव पाठभेदादिभावा', तथाभूतपाठभेदादिहेतुक एवेति । एव मपि यजुष कतिपयशाखाभि कतिपयशाखाना महानस्ति प्रभेद, अत एव तयोर्द्विविधयो' शाखासमूहयो शुक्लकृष्णत्वेऽसमत प्राचीना । तथा च माध्यन्दिन्यादीना यजु शाखाना शुक्लयजुरिति समाख्या, तैत्तिरीयादीनान्तु कृष्णयजुरिति । ईदृशासदृशभेदकारणन्तु बहुविवेच्य मित्यल मिह प्रसङ्गकीर्त्तनाडम्बरेणेति ।

तत्त्वतो न हि वेदशाखा, वृक्षशाखेव, नापि नदीशाखेव, प्रत्युताध्येतृभेदात् सम्प्रदायभेदजन्याध्ययनविशेषरूपैव, अत एव शिष्यशाखापरम्परेति वचन मद्यापीह भारते प्रसिद्धम् । चरण शब्दोऽपीह न तु पादार्थत्वसूचको भागार्थ., अपि त्वाचरणार्थ, सन्ति हि शाखास्वनुष्ठानाचरणभेद इति शास्त्रवचन । तदुक्त 'गोत्रञ्च चरणै सह"–इत्यस्य ( पा॰ सू॰ ६. १. ६३ ) व्याख्याने कैयटेन— 'चरणशब्दोऽध्ययनवचन इह तूपचारादध्येतृषु वर्त्तते' –इति । 'शाखाध्येतृवाची च जातिकार्य लभते । कठी, बह्वृची' –इति च तत्त्वबोधसिद्धान्तकौमुदी । 'चरण शाखाध्येता॰—॰ कठेन प्रोक्त मधीयाना वा कठी'–इत्येव तट्टाख्या तत्त्वबोधिनी । "अनुवादे चरणानाम् ( पा॰ सू॰ २. ४. ३. )"–इत्यस्य व्याख्याया नागेशोऽप्याह— 'चरणशब्दोऽत्र शाखाध्येतृपर '–इति । 'शाखाध्येतृवाचिना मित्यर्थ '–इति च तत्त्वबोधिनी । "चरणे ब्रह्मचारिणि"–इत्यस्य ( पा॰ सू॰ ६. ३ ८६ ) व्याख्याने व्यक्त माह दीक्षित — "चरण =शाखा"–इति । 'तस्य समानत्वं वेदस्य व्रतस्य वा समानत्वात्, तस्य तत्त्वञ्च अध्येतृभेदात् वेदभेद व्रत

भेदश्च परिकल्प्य बोध्यन्ते'–इति च तत्र शेखरः। "चरणाद्धर्मा-म्नाययोः"–इत्यस्य ( पा० सू० ४, ३, १२०, वा० ११. ) व्याख्यायां "कठानां धर्म्म आम्नायो वा काठकम्, पैप्पलादक मिति"–इत्याह पतञ्जलिः। 'आम्नायः सम्प्रदायः'–इति च तत्र नागेशः।

एवं हि 'चरण वेदैकदेशे'–इति वाचस्पत्युक्तं नूनं भ्रमविजृम्भितम्, तदुत्तरत्र तल्लिखितं 'गोत्रञ्च चरणैः सह, महाभाष्य का०' –इति तत्प्रमाणसूचनञ्च तथैव; तत्र भाष्ये 'गोत्रञ्च चरणानि च' –इत्येतावत एवांशस्य दर्शनात्। पातञ्जलसूक्तिरेव सा वाचस्पत्युक्तिरिति भ्रमाद् वाङ्गविश्वकोषप्रणेत्रादयोऽप्यत्राभवन् विमुग्धाः॥

तदत्र पुनरपि ब्रूमोऽध्ययनादिभेद एव शाखाभेदनिदानं न तु ग्रन्थभेद इति। अत एव एकैकवेदस्यानेकशाखत्वेऽपि तात्त्विकभेदाभावात् श्रीमत्सायणाचार्य्यैरेकैकशाखाव्याख्यानेनैव सर्ववेदभाष्य-कर्तृत्वं प्रसिद्धम्; किञ्चैव मपि कृष्णयजुः-शुक्लयजुः शाखासमूहयो-र्विशेषपार्थक्यस्यास्तित्वादेव कृष्णयजुषो तैत्तिरीयशाखा व्याख्यायापि न स कृष्णयजुर्व्याख्याने कृतकृत्यम्मन्य इति शुक्लयजुः काण्वशाखा अपि व्याख्यातवान्। तथा एकशाखाध्ययनेनैवैकवेदाध्ययनं सम्पद्यत इत्येव "वेदः कृत्स्नोऽधिगन्तव्य."–इत्यादीनि मन्वादिवचनानि च सङ्गच्छन्ते। वेदशब्दस्य शाखापरत्वव्याख्यानञ्च प्रामाणिकम्।

एवञ्च यदुक्तं विष्णुपुराणभागवतयोः 'चिभेद प्रथमं', 'बोध्यादिभ्यो ददौ तास्तु', 'चतुर्द्धा व्यस्य बोध्याय'— इत्येवमादि, तदर्थं नूनं *शाखाप्रदानमध्ययनविशेषविधानमेव*; विशेषतः कूर्म्मपुराणोक्ता शाखानां महादशपुराणतुल्यता तु चर्यते सर्वोपरीति॥

अपरे तत्र। वेदवैदिकसम्प्रदायाणामर्षतज्जीवनेनाध्ययन शर्य्यवर्णेनाप्यच्छूद्राभाजनेनाप्यध्ययनस्वामिनापि शाखानां

वेदव्याख्यानरूपत्वेन वेदभिन्नत्वं पुराणाद्युक्तरूपमिथोभेदवत्त्वञ्च मत्वैवालेखि स्वकृतवेदभाष्यभूमिकायाम्— "एकादशशतानि सप्त विंशतिश्च वेदशाखा वेदव्याख्याना अपि वेदानुकूलतयैव प्रमाण मर्हन्ति"–इति (२८।१४०)। शौचत्वे त्वेतच्छिपिसविधौ नून पौराणिकी शाखाभेदकथाप्यपास्तेति मन्यामहे वयम्। यदुक्तं पातञ्जले पस्पशायाम्— "एकविंशतिधा बाह्वृच्यम्, एकशतं मध्वर्युशाखा, सहस्रवर्त्मा सामवेद, नवधाथर्वणो वेद"–इति। तदेतत्सङ्कलन यैवोक्तं स्यादिदं परिगणन मेकादशशतानीत्यादि, पर तत्रापि किञ्चित्पार्थक्यम्प्रतीयते। अस्तु तत्तथैव, पर मतो। काश्यानन्दोद्यान विचारे, यत्र वयं मास्म मध्यस्था, विशेषतो वादिप्रतिवादिवचसा मनु लेखनेऽद्य सेक एवोभयपक्षतो नियुक्त, तत्र तेनैव व्यासितो क्रम्— "सहस्रवर्त्मा सामवेद इत्यस्य सहस्र गीत्युपाया इति भाव" –इति। वस्तुत सामवेदस्य गीतिकौशलबहुत्वादेव बहुशाखावत्त्वम्, शाखासङ्ख्या तु त्रयोदशैवेत्यस्माक मपि सम्मत मेव। इन्त। का नाम संहिता शाखेतिव्यपदेशशून्या तेन महाशनोररीकृता, यस्या मूलवेदत्व मत्वा शाखेतिप्रसिद्धाना मन्यासा तद्व्याख्याग्रन्थत्व मतव्यत्ववेदिति त्वस्माक मधीन मेव। तदत्र सम्भाव्यते,— विमिश्रमन्त्रब्राह्मणयोस्तत एव वान्त इति प्रथितयोस्तैत्तिरीय-शाखीयसंहिताब्राह्मणग्रन्थयो विशेषतस्तदारण्यकग्रन्थीयनिखिल खिलकाण्डदर्शनादेव तथाशेषशेमुषीमम्पन्नस्यापि स्वामिन एव भ्रम स। त इति। अपि वा शाखातत्त्वानभिज्ञेन केनचित्तच्छिष्येण तत्रैव स्याद् विनिवेशित मिति॥

अथ ऋगवेदशाखासङ्ख्यानिर्णयाय यतमानाश्च प्रथम शयोरेव विष्णुभागवतयो पुराणयो प्रविशाम, पर तत्रोभयत्र मिथोऽनैक्य

चरणव्यूहादिशाखादर्शनकाद्यन्यविरोधश्च सकलधाभीष्टसाधनेऽकृत-कार्योऽस्मिन् पर्येत्य वाल्यपठित पातञ्जलवचन मेवेहावलम्बामहे। तत्रेदम्—'एकविंशतिधा बाह्वृच्यम्'–इति। षड्गुरुशिष्येण च वेदार्थदीपिकाया भूमिकाया मेतद्विषयाणि कतिचित् पद्यान्युद्धृतानि, तत्र दृश्यते चेतत्—"एकविंशत्यध्ययुक्त मृग्वेद मृषयो विदु" इति। आह च तत्र तद्व्याख्यायाम्—'अध्वा, गति, शाखा इति पर्याया '–इति। कौन्मेऽप्येवम्। इत सुनिर्णीत मृग्वेदस्य शाखा एकविंशतिरिति।

तदेकविंशतिशाखाना सर्वासा मेवाभिधानानि यद्यानिर्णेयानीव, यावतीना यथा यथावगम्यन्ते तावतीना मेव तया-तया व्यक्तीकर्त्तु यतामहे। —

यस्मि प्राचीनोऽष्टविकृतिविवृतिनामा लचणग्रन्थो महामुनि व्याडिकृत। तस्य प्रथमवल्लीगतचतुर्थश्लोक एष—'शैशिरीये समाम्नाये व्याडिनैव महर्षिणा। जटाद्या विकृतीरष्टौ लच्यन्ते नातिविस्तरम्"–इति। अस्य व्याख्यानावसरे सटीकाकृता कति चिदितिहासश्लोका उपन्यस्ता, तमितिहास मुपगत्य व्याख्यायि च व्याख्यातव्यश्लोकगत एवकार। तथाहि–'एवकारस्य विस्म योऽर्थम्'। श्लोच्यत इतिहास —

शाकल्यस्य शत शिष्या नैष्ठिकब्रह्मचारिण।
पञ्च तेषा गृहस्थास्ते धर्मिष्ठाश्च कुटुम्बिन।
शिशिरो वाष्कल शाङ्ख्यो वात्स्यश्चैवाश्वलायन।
पञ्चैते शाकला शिष्या शाखाभेदप्रवर्त्तका।'–इत्यादि।

ततश्च शिशिरवाष्कलशाङ्ख्यवात्स्याश्वलायनप्रवर्त्तितासु शाकल शाखासु शौनकाचार्याणा मते जटाद्यष्टविकृतिलचणस्य व्याडि

प्रणीतत्वेसिद्धत्वात् न माण्डूकेयप्रोक्तस्य अटालचणस्येवाभिप्रायार्थ एवकारः"—इति। अस्ति सूत्रं पाणिनीयम् — "गोत्रे लुगचि ( ४, १, ८९, )'—इति, तेन हि छात्रेऽपि विवक्षितेऽत्र गोत्रप्रत्ययस्याणो लुग् कृतं भवति; तथाच सम्प्रदायन्ते शाकल्यस्य शिष्याः शिशिरादयः पञ्चेमे शाकलाः। तेषां शाकलाना माम्नायाः = सम्प्रदायाः = शाखा वा पञ्चैव "शाकलाद्वा ( ४, ३, १२८, )"—इतिपाणिनीयशासनात् शाकलाः शाकलकाख्योच्यन्ते। तदेव ऋग्वेदस्य शैशिरीया, बाष्कला, साङ्ख्या, वात्स्या, आश्वलायनीति पञ्च शाखानामानि विज्ञायन्ते, ज्ञायते चासां सर्वासा मेव शाकलशाखेति नामैक्य मपि। अपि यदुक्त मनुवाकानुक्रमण्युपक्रमे—

"ऋग्वेदे शैशिरीयायां संहितायां यथाक्रमम्।
प्रमाण मनुवाकानां सूक्तैः शृणुत शाकलाः"—इति।

अत्र शाकला इति सम्बोधनश्रवणाच्चावगम्यते, तासां पञ्च शाकलशाखाना मेकतमा शैशिरीया मेवावलम्ब्य क्रियमाणामेपानुक्रमणी पञ्चाना मेव शाकलानां हिताय सम्पाद्येति।

अस्ति चात्र मतान्तरता ;—शाकलस्य शिष्यः अतएव शाकल इत्येव प्रसिद्ध आसीत् कश्चन एक आचार्यः, तेनाध्यापिता ये पञ्च शिष्याः शिशिरादयः, तेषां पञ्चानां पञ्च शिष्यसम्प्रदाया एव शैशिरीयादयः पञ्च शाखाः सम्पन्नाः, तैः पञ्चभिरधीतानां देशकालपात्रभेदतोऽध्ययनशैलीक्रमोच्चारणभेदात् किञ्चत्पाठन्यूनाधिक्याच्च पञ्चधात्व मापन्नानां पञ्चाना मृहितानां शाकलप्रोक्तत्वेनैव शाकलशाखात्वम्। तथा च प्रदर्शितविकृतिवल्लीटीकाकृदुपन्यस्तः 'शाकल्यस्य शतं शिष्याः'—इति पाठः स्यात् प्रामादिकः, तत्र 'शाकलस्य शतं शिष्याः'—इति निर्यकारपाठेनैव भवितव्य मिति। अतएवोक्तं

महामुनिश्याडिना स्वविकृतिग्रन्थारम्भे— "नत्वादौ शौनकाचार्यं गुरुं वेदमहानिधिम्। ०—०। नमामि शाकलाचार्यं शाकल्यं स्थविरं तथा"—इति। अत्र शौनकस्य गुरुत्वम्, शाकल्यस्य तु परमगुरुत्वं व्याख्यातं तट्टीकायाम्।

तदित्थं शाकल्येनाध्यापिता शाकलेनाध्यापिता वा एकैव एषा ऋक्संहिता देशकालपात्रभेदतः शिशिरादिपञ्चाचार्यकृताध्यापनशैलीपाठक्रमोच्चारणानुष्ठानभेदात् किञ्चित्पाठन्यूनाधिक्याच पञ्चविधत्वं गता, शैशिरीयादिपञ्चनामभिः शाकलेकनाम्ना च प्रसिद्धाद्यापीति सर्वं निरवद्यम्।

शाखानिर्णयकें चरणव्यूहे तूक्तम्— "ऋग्वेदस्य * * शाखाः पञ्च भवन्ति; आश्वलायनी, शाङ्खायनी, शाकला, बाष्कला माण्डूकेया चेति"—इति। इहोक्ता आश्वलायनी तु पूर्वोपात्तातोऽभिन्नैव; शाङ्खायनी स्यात् पूर्वोल्लिखिता साङ्ख्या शाङ्ख्या वेति चरणव्यूहटीकाकृन्महिदासमतन्तु नून प्रामादिकम्; प्रमापयिष्यामो ह्यनुपदं शाङ्खायन्या अशाकलत्वम्। तत्त्वतः शाङ्खायनी नाम शाखा पूर्वप्रदर्शितशैशिरीयादिभ्यः पञ्चभ्यो विभिन्ना षष्ठेव। शाकलेति शैशिरीयाया ग्रहणं मन्तव्यम्' तस्याः शाकलाद्यत्वेन तथाव्यवहारोपपत्तेः। तद्यथा सामवेदीयार्चिकग्रन्थयोरुभयोरपि छन्दोमयत्वसाम्येऽपि पूर्वस्यैव छन्द इति व्यवहारः, उत्तरस्य तूत्तरेति। अन्यथा च बाष्कलाया, आश्वलायन्याश्च शाकलैत्वेव ग्रहणसिद्धे पुनर्ग्रहणस्यापार्थता कथं वार्येत। बाष्कलापि पूर्वपरिचितैव। माण्डूकेया त्विहाधिका पूर्वोपात्ताभिः शैशिरीयादिभिः पञ्चभिः अतोपात्तया शाङ्खायन्या च परिगणनया सप्तमी सम्पद्यते। इत्थं ऋग्वेदस्य सप्तशाखानामान्यवगम्यन्ते, गम्यते च चरणव्यूहकाले शाकलानां

पश्चानां साङ्ख्या वाष्कला चेति द्वे शाखे विलुप्ते, शाङ्खायनी माण्डूकेया चेति द्वे अद्यकाले तदाप्यविलुप्ते इति। एवञ्च तदानीं मिश्रोपात्ता आश्वलायन्यादयः पञ्चैव शाखाः सम्प्रचलिता आसन्। अन्यास्तु षोडश विलोपं गता इति स्यान्नन्तव्यम्।

देवीपुराणे तु त्रिश्रेणीना तिसृणां वा शाखानां मुल्लेखो दृश्यते तथाहि तत्र सप्तमेऽध्याये —

"शाखास्तु त्रिविधा भूप। शाकला यास्कमण्डुकाः"–इति।

तत्र शाकलास्तु स्युः पूर्वप्रदर्शितनामान एव शैशिरीयाद्याः पञ्च, मण्डुका अपि स्युर्माण्डूकेयाद्याः कतिचिदस्माभिरज्ञातसर्वनामिकाः यास्कशाखा तु स्यान्नवीना निरुक्तकृद्यास्काच्च परभवा अथवा यास्कगोत्रीयेण केनचित् प्रोक्ता निरुक्तकृद्यास्कपूर्वतनैव, स्याच्च सा अध्येतृबाहुल्याद् बहुसङ्ख्याकापीति सम्प्रति सम्पूर्णतमसाच्छन्नेवेत्यत्र नास्माकं वाक् प्रसरति। 'शाकलयास्कमण्डुका.'–इति पाठे त्रिविधेत्यस्य यदि तिस्र इति भावार्थः स्यात्, यथा 'एकविंशतिधा बाहृच्यम्'–इति (पा० म० भा० १ आ०), तर्हि शाकलेति सम्प्रति प्रचलितायाः ग्रहणं न दोषावहम्, मण्डुकेति माण्डूकेय्या एव ग्रहणं भवेत् स्वीकार्यम्, अनन्यविदिता यास्कशाखैवात्राधिकेति। एवं हि पूर्वकीर्त्तितसप्तानामभिरेतदनन्यविदितयास्कनाम्नः सङ्कलनया अष्टशाखानामानि परिज्ञातानि भवन्ति।

अस्ति चाश्वलायनीयगृह्ये तर्पणप्रकरणे— 'जानन्ति-वाहवि-गार्ग्य-गौतम शाकल्य बाभ्रव्य माण्डव्य माण्डूकेयाः'–इति माण्डूकेयगणोल्लेखः। 'कहोलं कौषीतकं पैङ्ग्यं महापैङ्ग्यं सुयज्ञं शाङ्खायनम्'–इति च शाङ्खायनगणोल्लेखः। 'ऐतरेयं महैतरेयं शाकलं सुजातवक्त्रं मौदवाहिं महौदवाहिं सौजामिं शौनकं आश्वलायनम्'

-इति चाश्वलायनगणोल्लेखः। तदुक्तं चरणव्यूहटीकायां महिदासेन—'जनान्तिवाहवीत्यारभ्य माण्डूकेया इत्यन्तो माण्डूकेयगणः, × × × शाङ्खायन इत्यन्तः शाङ्खायनगणः, ऐतरेय इत्यारभ्य श्वाश्वलायनान्त श्वाश्वलायनगणः'-इति। इत्थ मृग्वेदस्य प्रधानत स्तिस्र एव शाखाः पर्यवसिताः, तासां मेव स्युरनुशाखा इतराः। ता एव मूलशाखाः मनुलक्ष्य देवीपुराणे "शाखास्तु त्रिविधा भूप! शाकलबाष्कलमाण्डुका"-इत्युक्तम् (१३१पृ०)। तत्रापि बाष्कलस्थाने श्वाङ्खेति पठितव्यम्, तथ शाङ्खायनस्यैवापदेशपठणं मन्तव्यम्, बाष्कलपाठस्तु स्यात्लिपिकरपाण्डित्यमूलकः। तदेवं देवीपुराणे तदानीमप्रचलितप्रचलितानां सर्वासां मेव मृक्शाखानां नामग्रहणं सम्भव मित्यपि वक्तु शक्यते।

नून मनाश्वलायनीयम् ; तदन्ते बृहद्देवतायामन्यवर्णितानां मण्डूका-नादिमहानाम्न्यन्तसूक्तानां विद्यमानत्वात्, बृहद्देवताया श्च शाकलीयत्वनिर्णयात्। द्वितीयाष्टकोऽपि स्यादनाश्वलायन्याः ; तदन्ताध्याये द्वादशवर्गादनन्तर मेको वर्ग आश्वलायनीतोऽधिक आम्नात इत्येव तस्यानाश्वलायनीत्वप्रतीतेः। उद्धृता चैतदीयैका ऋक् निरुक्ते (८. १. ५.) निगमत्वेनेति नास्ति च तद्वर्गस्य खेलिकात्व मतः शाखान्तरीयत्व मेवोररीकर्त्तव्यम्। परन्त्वेतत्पुस्तकस्य तयोरेव द्वितीयाष्टमाष्टकयोः षोडशाना मेवाध्यायाना पुष्पिकासु 'महानाम्नीशाखायाम्'-इत्यादि लिखित मस्ति, परं नासीन्नास्ति च काचिन्महानाम्नीशाखा ; अत. किलेय मेव महानाम्न्यन्ता महानाम्नीति च व्यपदिष्टा शाखा, स्याच्छाङ्खायनीति सम्भाव्यते।

अष्टविकृतिविवृतौ पञ्चाना शाकलाना मन्यतमा यैका साङ्ख्येति ज्ञायते, मैव साङ्खायनी शाङ्खायनी चेति मन्यते चरणव्यूहव्याख्यानकृन्महिदासः, तथा च सम्पद्यते शाङ्खायन्या अपि शाकलत्वम्। तदिदं नादरणीयम् ; श्रुतिविरोधात्। श्रूयते हि कौषीतक्यारण्यके (१४ अ॰)— "शाङ्खायनः कहोलात् कौषीतकेः", विद्याजग्राहवानिति तच्छेषः। तदेव श्रुतिसिद्धस्य कौषीतकिवंश्यस्य शाङ्खायनस्य शाकल्यशिष्यत्व कथन्नामोपपद्येतेति न च साङ्खायनी नाम काचिच्छाखा मन्तव्या ; तत्रैवारण्यकेऽसकृच्छाङ्खायनीनामश्रुतेः। नापि महानाम्न्यन्तायाः शाङ्खायन्याः शैशिरीयादिशाकलशाखापाठसाम्य सुपपद्यते ; "ऋग्वेदाख्यो द्वादशकोऽनुवाकः"-इत्याद्यनुवाकानुक्रमस्वुक्तेः। एव मथर्त्वनुक्रमण्यादिष्वपयास्या अशाकलत्वं प्रतीयत एव। अत एव सत्स्वपि शाकलीयदेवतानुक्रमण्यादिग्रन्थेषु शाङ्खायन्यर्थ मेव बृहद्देवतानाम-

ग्रन्थोऽप्यमार्यीत्यस्माकं मभिमतम्। अत एव अशाकलीयानां सञ्ज्ञानसूक्तीयानां मन्त्राणां ऋषा मपि देवतानिरूपण मेव कृतं वृहद्देवतायाम् (८अ० ८३श्लो०)—

"उशना वरुणश्चेन्द्राग्निश्च सविता स्तुता।
सञ्ज्ञानप्रथमस्याम्तु द्वितीयस्या मथाश्विनौ।
तृतीया चोत्तमे च द्वे आशिषोऽभिवदन्ति ता."-इति।

तदेतत् पञ्चर्चं सञ्ज्ञानसूक्तं शाकलासु शैशिरीयादिषु नाम्नातम्, अत एव सायणाचार्य्येणापि न व्याख्यातम्, अध्यापकम्याक्समूलरेणैकस्मिन्नादर्शे दृष्ट मपि खैलिक मित्युपेक्षितञ्च (ऋ० वे० ६भा० पाठ० ३२४०)। वस्तुतो न चैतत् खैलिकम्, तैत्तिरीयाथर्वणयोर्क्कश्चनाम्नानात् (तै० स० २. ४ ४६, २. ६. १०. ३, तै० ब्रा० ३. ५ ११. १, तै० आर० १. ८. ७, अथ० स० ८. ४२. १, ३ ८. ६.), निरुक्तोऽप्येतत्पञ्चम्या ऋचो निगमत्वेन ग्रहणाच्च। तथाहि— "अथापि यजुर्वादैश्चैत्य उच्यते, 'तच्छयोरावृणीमहे × × ×'-इत्यपि निगमो भवति"-इति (४ २ ५)। सैषा ऋक् सञ्ज्ञानसूक्तस्य पञ्चमी दृश्यते। तदेतत् सञ्ज्ञान नाम शाङ्खायन्या उपान्त्य सूक्तम्, एतदनन्तर मेव तत्राम्नात महानाम्नीसूक्तम्। अत एव शाङ्खायनसूत्रेऽस्य सूक्तस्य प्रतीकग्रहणेनैव विधान कृतम्। तथाहि— "सञ्ज्ञान मुशनावददिति सूक्तं जपेदन्तिति (२. ६ ३)। इत इद मपि सम्भाव्यते— मूलर् दृष्ट तदादर्शपुस्तकं पुस्तकागारे वा स्यात् शाङ्खायनसंहिताया इति।

बाष्कलशाखाया मप्यस्ति सञ्ज्ञानसूक्तम्, पर तत् न पञ्चर्चम्, प्रत्युत पञ्चदशर्चम्, अपि नोपान्त्यम्, प्रत्युतान्त्यमित्यवगन्तव्यम्। बाष्कला तु शाकलाना मेवान्यतमा, शाकलशाखासंहितासु

महानाम्नीसूक्तं नाम्नात मित्यत एवैतरेयारण्यके तत् समाम्नातम् ; शाङ्खायनसंहितायास्तु महानाम्नीसूक्ताम्नानेनैव समाप्तिरिति तत्पूर्वाम्नातस्य सञ्ज्ञानसूक्तस्य संहितोपान्त्यत्व मेतदेव वाष्कलशाङ्खायनसंहितयोः सञ्ज्ञानसूक्तसङ्ख्यावस्थानयोः पार्थक्य मिति ।

अथाग्निपुराणोक्ता द्वितीया आश्वलायनी तु शाकलाना मन्यतमेत्युक्तं पुरस्तात् , परिचाययिष्यामश्च ता मुपरिष्टादिति ॥

अथ शाकलाना माद्या शैशिरीया दशमण्डलात्मिकेत्यतो 'दाशतयी'-इति व्यपदिश्यते । तदुक्त मनुवाकानुक्रमण्याम्—

"पञ्चाशीतिर्दाशतयेऽनुवाका दृष्टाः पुराणैर्ऋषिभिर्महात्मभि ।
यस्तान्नृस्विद् वेद चैवाप्यधीते स नाकपृष्ठं भजते ह शश्वत्"-इति

"दाशतये दशमण्डलयोगिनि वेदे । 'सङ्ख्याया अवयवे तयप् (पा० ५, २, ४२.), ततः स्वार्थे अण्"-इति तद्व्याख्याने षड्गुरुशिष्यः । तदत्र मण्डलविभागे प्रतिमण्डल मनुवाकविभागो विद्यते, प्रत्यनुवाकञ्च सूक्तविभाग. । तत्तदनुवाकसूक्तसङ्ख्या तत्र २२—२६-श्लोकेषु निरूपिता । तथा चैवं सम्पद्यते—

म० १, २, ३, ४, ५, ६, ७, ८, ९, १० ।
अनु० २४-४—५—५—६—६—६—१०—७—१२=८५ ।
सू० १९१-४३-६२-४८-८७-७५-१०४-९२-११४-१९१=१०१७।

ज्ञायते चैतेन वालखिल्यानां सूक्ताना शैशिरीये समाम्नानं नाङ्गीकृत मिति । तानि च सूक्तानि एकादश सन्ति, तेषा मपीह परिगणने १०२८ स्युरिति स्पष्टम् ।

यद्यपि सा शैशिरीया सम्प्रति नोपलभ्यते । पर मुपलभ्यते तु सर्वा एव शौनकीयानुक्रमण्य. शैशिरीया मवलम्ब्यैव कृता इति । तथाह्यनुवाकानुक्रमण्या उपक्रमे — "ऋग्वेदे शैशिरीयायाम्"-

इति, उपसंहारे च— "तान् पारणे शाकले वैशिरीये"–इत्युक्तम्।

सायणीय-भाष्यञ्च तां मवलम्ब्यैव कृतं स्यात, तत्रापि
रीयाणां वालखिल्यसूक्तानां मध्याख्यातत्वात्। अत एव ऐतरेयभाष्ये
तेषां वालखिल्यानां क्वचित् खिलत्वेन, क्वचित् ग्रन्थान्तरीयत्वेन,
क्वचिच्छाखान्तरीयत्वेन वर्णनं सुपपद्यते सायणस्येति। तथाहि—
"खिलेषु समाम्नातम्" इति ६ ४ ८, "वालखिल्याख्ये ग्रन्थे समा
म्नाता"–इति ६ ५ २, तानि वालखिल्यनामके ग्रन्थे समाम्ना
यन्ते"–इति ६ ४ ८, "सोऽयं प्रगाथः शाखान्तरे द्रष्टव्यः" इति
३ २ ५। तदिदं वालखिल्यानां खिलत्वं नूनं मसङ्गतम्, तेषां पद
पाठश्रवणात्, न हि खिलानां पदपाठः कृतः शाकल्येन,—
अधीयतेऽध्याप्यते मुद्रितो मुद्र्यते च वालखिल्यर्चाना मपि
पदपाठः सर्वत्र। तदाह चरणव्यूहकृन्महिदासोऽपि— 'यस्य
मन्त्रस्य पदाभावस्तस्य खैलिकत्वमिदम्' इति। ग्रन्थान्तरत्व मपि
न सङ्गच्छते, सर्वेषा मेव वेदानां संहितात्वेकैकैवेति क सम्भवेत्ततो
ऽन्यो ग्रन्थ इति। शाखान्तरीयत्वकथनेन चाभिगम्यतेऽयमथ-लितैव
माश्वलायनी शाखा नैव दृष्टा सायणेन, अपि तद्देशीया मन्या मेव
शाखा मवलम्ब्य भाष्य मारचितम्, तस्यां तु शाखायां वालखिल्य
नाम्नात मिति तद्व्याख्या शाखान्तरीयत्व मभ्युपगन्तव्य मेवेति।

वालखिल्ये कादशसूक्तेषु दशदशादिक्रमादशीत्यृचोऽधीयन्ते यथा—
१–११सू० १० १० १०–१० ८ ७ ५–५ ४–३ ७=८० ऋच।

तदाह सर्वानुक्रमण्याम्— 'अभि प्र दश प्रस्कण्व प्रागाथ
नस्त्वं प्र सुश्रुत पुष्टिगु, यथा मनौसुष्टिगु, यथा मनावायु, उपम
त्वाष्टौ मेध्य, एतत्ते मातरिश्वा नो विश्व इति वैश्वदेव प्रगाथ,
भूरीत् पञ्च कृश प्रस्कण्वस्य दानस्तुतिर्गायत्र तृतीयापञ्चम्यावनु

ष्टुभौ, सति ते एषघोऽस्याविर्सारी पङ्क्तिः, युवं देवा चतुर्थ्यां तिष्ट आश्विनं त्रैष्टुभम् ,०—०, इमानि वां सप्त सुपर्णं ऐन्द्रावरुणं जागतम्"-इति ४४. ४०—५८। सर्वानुक्रमणीकारकात्यायनेनैव सूक्तखाताख वालखिल्यकाण्डस्य खैलिकत्वं विध्वस्तम् ; न हि कस्य चिदपि खिलस्य कत्यादानुक्रमण कृतं तेन, किञ्च यद्यमाष्टकीयचतुर्थाध्यायीयत्वेनैव तत्र ग्रहणादस्याश्वलायनशाखीयत्वं व्यक्तम्, व्यक्तञ्च तदनुक्रमणिकाया अप्याश्वलायनशाखीयत्व मिति।

ऐतरेयब्राह्मणे चेषा मेकादशसूक्तानां प्रथमतोऽष्टाना मेव वालखिल्यनाम्ना विधान माम्नातम्, अन्यस्य तु सौपर्ण मिति (६. ४. ८, ८.)। इत्थ मपि ज्ञायते, तासां वालखिल्यर्चां सायणोक्तं खिलत्वं नून मयास्तवम् ; नापि ग्रन्थान्तरतादरणीया, न हि ग्रन्थान्तरीयर्चां प्रतीकेन नाममात्रेण वा ग्रहणं युज्यतेऽत्वैतरेयके ; शाखान्तरीयत्वं च वक्तुं नाव शक्यते, सति हि तस्मिन् प्रपठ्यैव विधानं क्रियेतैतरेयेणेति। तथाप्यस्य शाखान्तरीयत्वेनोपन्यासादृस्याप्यमेवास्य शाखान्तरीयत्वं प्रतिपन्नम् ; न ह्याश्वलायन्यां वालखिल्याध्ययनं यत्नतोऽपि तद्भाष्यकारस्योक्तरूपप्रलापवचनानि सम्भाव्यन्ते।

एव मपि सायणाचार्येणावलम्बिता शैशिरीया, अन्या वा काचिच्छाकलशाखा स्यादाश्वलायन्यनुरूपैव प्रायः सर्वत्र इत्यत्र च न भवति संशयः; नान्यथाव सायणीयभाष्ये सर्वानुक्रमणीवचनानि यथायथ मद्भ्येयुरिति।

*अथ द्वितीया, बाष्कला। एतस्या अपि परिचयः शौनकीयानुक्रमण्यादिभ्योऽवगम्यते चैवम्—* "उप प्र यन्तो (१. ७४.)"–"नासत्याम् (१. ११६.)"– "अग्निं होतारम् (१. १२७.)"–"इमं स्तोमम् (१. ९४.)"–"वेदिषदे (१. १४०.)"–इत्येष

क्रमो बाष्कलस्य प्रथममण्डले निदर्शितः। एवमपरमण्डलेष्वपि बोध्यम्। तद्यथा— "स्वादोरभक्षि (८, ४२)"-इतिसूक्तानन्तरम् "अभि प्र व सुराधसम् (८ ४८)"-"प्रसुश्रुतम् (८ ५०) -इति सूक्तद्वय माम्नाय "अग्न आ याह्यग्निभि (८ ६०)"-इत्याम्नातम्। एव "गौर्द्धयति"-इत्यनुवाको दशसूक्तात्मकः शैशिरीयायाम्, पञ्चदशसूक्तात्मको बाष्कलायाम्। तथाच 'गौर्द्धयति"-इति सूक्तादनन्तर 'यथा मनौ सावरणी (८ ५०)", "यथा मनौ विवस्वति (८ ५२)", "उपमन्त्वा (८ ५३)", "एतत्त इन्द्र (८ ५३ ८)", "भूरीदिन्द्रस्य (८ ५४.)"-इति पञ्चसूक्तान्याम्नाय 'आ त्वा गिरो रथीरिव (८ ८५ १.)"-इत्याम्नातम्। एव मन्ते च मण्डले— 'समसमित् (१० १८१)"-इतिसूक्तादनन्तरम् "सञ्ज्ञान मुशनावदत्"-इत्यादि, "तच्छंयोरावृणीमहे" -इत्यन्त चतुर्वर्गात्मक पञ्चदशर्च मेकसूक्त मधिक बाष्कलायाम्। तदेव "समानी व (१ १८१ ४)"-इति शैशिरीयाया अन्तिमा ऋक्, "तच्छंयो"-इति तु बाष्कलाया इति भेदः।

तास्त्वेता सञ्ज्ञानसूक्तीया पञ्चदशर्च —

"सञ्ज्ञान मुशना वदत् सञ्ज्ञान वरुणो वदत्।
सञ्ज्ञान मिन्द्रयाग्निश्च सञ्ज्ञान सविता वदत् ॥ १ ॥
सञ्ज्ञान न खेभ्य सञ्ज्ञान मरणेभ्य।
सञ्ज्ञान मश्विना युव मिहास्मासु नियच्छतम् ॥ २ ॥
यत् कक्षीवान् सवनन पुत्रो अङ्गिरसो भवेत्।
तेन नोऽद्य विश्वे देवा सम्प्रियास मजीजनन् ॥ ३ ॥
स वो मनासि जानता समाकूतिर्मनामसि।
असौ यो विमना जनस्त समावर्त्तयामसि ॥ ४ ॥ १वर्ग ॥

नेर्हस्मिं सेनादरणं परिवर्क्षं तु यद्धविः ।
तेनामित्राणां बाहून् हविषा शोषयामसि ॥ ५ ॥
परिवर्त्मान्येषा मिन्द्रः पूषा च सश्रुतः ।
तेषां वो अग्निदग्धानामग्निमूढानामिन्द्रोऽहन्तु वरं वरम् ॥ ६ ॥
एषु नद्धवृषाजिनं हरिणस्य भियं यथा ।
पर ममित्र सैष त्वर्वाची गौरुपेजतु ॥ ७ ॥ २ वर्गः ॥
प्राध्वराणाम्पते वसो होतर्वरेण्य क्रतो ।
तुभ्यं गायत्र मृचते गोकामो अन्नकामः प्रजाकाम उत कश्यपः ॥ ८ ॥
भूतं भविष्यत् प्रस्तौति महद् ब्रह्मैक मक्षरम् बहु ब्रह्मैक मक्षरम् ॥ ९ ॥
यदक्षरं भूतकृमतो विश्वे देवा उपासते ।
महर्षि मस्य गोप्तारं जमदग्नि मकुर्वत ॥ १० ॥
जमदग्निराप्यायते छन्दोभिश्चतुरुत्तरैः ॥ ११ ॥
राज्ञः सोमस्य भक्षेण ब्रह्मणा वीर्यावता ।
शिवा नः प्रदिशो दिशः सत्या नः प्रदिशो दिशः ॥ १२ ॥ ३ वर्गः ॥
अदो यत्तेजो दद्ये शुक्रं ज्योतिः परो गुहा ।
तदृषिः कश्यपः स्तौति सत्यं ब्रह्म चराचरं ध्रुवं ब्रह्म चराचरम् ॥ १३ ॥
त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं मगस्त्यस्य त्र्यायुषम् ।
यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम् ॥ १४ ॥
तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये ।
दैवी: स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः ॥ १५ ॥ ४ वर्गः ॥"–इति ।

अथ दशवीया माद्या, चतुर्थी चाख्या । त एते सम्प्रति न काम्यु-पलभ्येते, अतएवैतयोः कोऽपि संवादोऽस्माभिर्न आयत इत्येव सत्यम् । अथवा विष्णुभागवतपुराणयोरोक्ता मौदनीति, सैव स्यात् माद्येति; तयोः पुराणयोः 'माद्या'-इत्यस्य स्थाने 'मौदनी'-इत्यस्य

पाठप्रतीतिः सम्भाव्यते साङ्गाचार्यस्य मुद्गल इति गोत्रनामेति। अध्यापकस्याचमूलरेण च ऋग्वेदस्य तृतीयभागभूमिकायाम् (१३) पृष्ठे अलेखि एतत्—"फिट्स् एड्वाड् हल् महोदयः काशीतो ऽलिखदिदम् (१५-१-५५.)— 'सायणाचार्यकृतभाष्यस्य मूल मादर्शपुस्तकं यदासीद् लण्डनस्थे खियापुस्तकालये मुद्गलभाष्यं नाम, तत्र प्रथमाद्यास्त्रयोऽष्टकाश्चतुर्थाष्टकस्याद्याध्यायाश्च त्रयः सन्ति, सन्ति चान्यानि कतिचित् पत्राणि प्रथमसप्तमाष्टकयोः। तदीय-प्रथमाष्टकस्य यावानंशः पाठयोग्यः, तावन्त मेव यथालिपि भवन्तं दर्शयामि। लिखितं चैतत् पुस्तकं १४७× संवत्समायाम्' -इति"-इति। तदेतत् पुस्तकं मौद्गल्याः शाखाया एव सायण-भाष्य मिति सुव्यक्तम्; परं नास्ति सायणस्य मुद्रितभाष्यादन्यद् भाष्य मिति शाकलानां पञ्चशाखानां मौद्गली मेवावलम्ब्य तेना-कारीदं भाष्य मिति सम्पद्यते सुतराम्। तथा चैषा मौद्गली दश-तय्यीत्यपि स्वीकार्यम्; सायणीयभाष्ये वालखिल्यमन्त्राणा व्याख्या-नादर्शनात्, अष्टतय्यां हि वालखिल्याना मवश्यम्भावित्वं स्यादि त्युक्तम्। मेयं मौद्गली शाखा सायणाचार्यसमये सायणाचार्यदेशे आसीत् सुप्रचलितेति तेना मेवावलम्ब्य तेनैतत् भाष्यं कृत मिति चोपपद्यते। अद्य च स्यात् तद्देशे मौद्गल्या एव शाखाया विद्यमानतेति च नासम्भवम्। यदि नाम शाकलानां पञ्चाना मेव प्रायो ग्रन्थपरिच्छेदसाम्यात्, क्रम-पाठादौ चाल्पतारतम्यात्, सर्वपुस्तकपुष्पिकासु नामोल्लेखादर्शनाच्चैवं नामविभ्रमोऽनिवार्य एवेति मौद्गल्या आश्वलायनीत्वेन चाश्वलायन्याश्च मौद्गलीत्वेन ग्रहणं सुसम्भाव्य मेवेति।

अथ शाकलानां पञ्चमी, आश्वलायनी नाम। इयमेवाश्वलायनी

शाखा शाकलाना पश्चाना लुप्तावशिष्टा, अद्यापि सर्वत्राध्ययनाध्यापने सुप्रचलिता विद्यते। प्रवाद एवात्र प्रथम प्रमाणम, सर्वत्र हि दाक्षिणात्यादिष्वेषा श्वाश्वलायनीत्येव प्रोच्यते। प्रदर्शिता त्रिपुराणवचने शाकलाना मध्या एवैकस्या ग्रहण मत्र द्वितीय मानम्, न हि तदानी मप्यासीत काचिदन्या शाकलेति। गौड राज लक्ष्मणसेन प्रदत्तेष्वनधिकमालिकेषु ताम्रफलकेषु च "आश्व लायनशाखाध्यायिने"-इत्युत्कीर्ण दृश्यत इतीद तृतीय प्रमाणम्। स्कन्दपुराणान्तर्गतश्रीमालखण्डनामग्रन्थस्य सप्ततितमेऽध्याये ऋग् वेदस्येय मेवैकाश्वलायनी शाखा बहुवार मुपन्यस्ता दृश्यते। तद्यथा— "अत्र आश्वलायनी शाखा ऋग्वेदस्य, यजुर्वेदस्य माध्यन्दिनी, सामवेदस्य कौथुमी, अथर्ववेदस्य स्वान्तरायणीति, ऋग वेदस्याश्वलायनसूत्रम्, यजुर्वेदस्य कात्यायनम्, सामवेदस्य लाट्यायनम्, अथर्ववेदस्यावर्टकश्चेति"-इति। तदिद गुर्जरीयश्रीमाल प्रदेशे बहुदिनत एव ऋग्वेदस्येयमाश्वलायनी शाखैवैकास्ति प्रच लितेत्यपि मान भवेदिह चतुर्थम्। तस्मादेतर्हि सर्वत्राधीयमाना, मुद्रिता चेय शाखा नून माश्वलायनीत्येव मन्तव्यम्।

सेय माश्वलायनी तत्त्वतोऽष्टतयेव, सर्वेष्वेवैतत्पुस्तकेषु अष्टकाध्यायवर्गनामविविधपरिच्छेदाना प्राधान्यदर्शनात्। एतदीयदेव तदर्षिच्छन्दोनिर्णयाय कात्यायनेन या "सर्वानुक्रमणी" प्रणीता, तत्रापि अष्टकाध्यायवर्गविभागानुसृता विभागा एव दृश्यन्ते। अत एवेह षडष्टकीय चतुर्थाध्यायस्य चतुर्दशाद्यष्टादशवर्गात्मक वालखिल्य श्रूयते, न हि दाशतय्या वालखिल्यत्रां मखिलताभ्युपगम्यते सायणाचार्येणेति तु प्रतिपादित पुरस्तादेव (१३६ पृ०)। एव मपि शाकलाद्यशाखाया शैशिरीयाया दशतयीत्वप्रतीते, एत

त्पूर्वेसनायाः शाकल्यसंहितायाश्च ऐतरेयेण यास्कादिना च दाशतयीत्वेन ग्रहणात्, शौनकोक्तानुवाकानुक्रमण्यादौ च दशतयीत्वस्यादरातिशयदर्शनात्, सर्ववेदभाष्यकारेण सायणाचार्येण च दाशतयीमेव साह्वाग्रपर्य्यायां मौद्गली मन्या वा काञ्चिद् शाकलशाखामनुसृत्य ऋक्संहिताया भाष्यं कृत मिति दशतय्यष्टतय्यो' सम्मिलनाच्च दशतयीत्वानुकूला मण्डलानुवाकसूक्तेतिविविधपरिच्छेदा अपीह लेखकादिभिः सूचिता यथायथं सर्वत्रैवेति ॥

अथ पञ्चस्वेव शाकलशाखासु अध्यायादिपरिगणनस्यैकविध मेव मन्यते प्रायः। अत एवैव माह अनुवाकानुक्रमणीकारः—

"अध्यायानां चतुष्षष्टिर्मण्डलानि दशैव तु ।
वर्गाणान्तु सहस्रे द्वे सङ्ख्याते च षडुत्तरे ।
सहस्र मेतत्सूक्तानां निश्चितं खैलिकैर्विना ।
दश सप्त च पञ्चान्ते ( सङ्ख्यातं वै पदक्रमम् )।"–इति ।

तदेतत् सर्वं वालखिल्यवर्ज्जनेनैव गणनातोऽप्युपपद्यते। ऋक् सङ्ख्यायास्तु शाखापार्थक्यात् पार्थक्यं स्वीकार्यं मेव, परं मन्त्रा शिकस्या साङ्ख्यायन्या अपि मतवैभिन्न्य मुपलभ्यते यथा—

अनुवाकानुक्रमण्याम् १०५८० ऋचां स्वीकारः, तदुक्तम्—

"ऋचां दशसहस्राणि ऋचां पञ्चशतानि च ।
ऋचा मशीतिः पादश्च पारणं सम्प्रकीर्त्तितम्"–इति ।

छन्दसङ्ख्यायान्तु १०४०२ ऋचां स्वीकारः, तदुक्तम्—

"एवं दशसहस्राणि शतानान्तु चतुष्टयम् ।
ऋचां द्वाधिकं माख्यातं ऋषिभिस्तत्त्वदर्शिभिः ।"–इति ।

मुद्रितसर्वानुक्रमण्या भूमिकायां १०४४२ ऋचां स्वीकारः ।
अनुक्रमणीविवरणष्कृज्जगन्नाथेन त्वृक्सङ्ख्या १०४५२ सोक्ता ।

स्वामिदयानन्दसरस्वत्याचार्य्येण तु "दशसहस्राणि पञ्चशतानि एकोननवतिश्च (१०५८९) ऋचोऽऽम्नाताः"-इति निर्द्धारितम्।

अस्मत्परिगणनयाऽऽश्वलायनसंहितायाम् १०५२२ ऋचो दृश्यन्ते। एवं ऋक्सङ्ख्याया मतपार्थक्ये निदानानि त्वेवमवगम्यन्तेऽस्माभिः— अनुवाकानुक्रमणी नूनं शैशिरीय शाखायाः। नास्ति च तत्र वालखिल्यानां ऋचामाम्नानम्, ततस्तत्र वालखिल्यभिन्नाः सपादाः १०५८० ऋचः परिगणिताः। अस्मत्परिगणनया त्वत्र वालखिल्यसहिताः १०५५२ ऋचः सन्ति, वालखिल्यानां ऋचां सङ्ख्या तु ८०; तथा चात्र आश्वलायनसंहितायां वालखिल्यातिरिक्तानां ऋचां सङ्ख्या १०४४२ सम्पन्ना। तदित्थं शैशिरीयायां मित आश्वलायनीतोऽधिकाः १३८ ऋचोऽधीता इत्येव निर्धार्यते।

छन्दस्सङ्ख्योल्लिखितोक्तसर्वसङ्कलनसङ्ख्या तु स्तोकप्रतिच्छन्दस्सङ्ख्यातोऽपि विरुद्धेव प्रतीयते। तद्यथा तत्र चोक्तं श्लोकैः— गायत्र्यः २४५१, उष्णिहः ३४१, अनुष्टुभः ८५५, बृहत्यः १८१, पङ्क्तयः ३१२, त्रिष्टुभः ४२५३, जगत्यः १३४८, अतिजगत्यः १७, शक्वर्यः ८, अतिशक्वर्यः ८, अष्टयः ६, अत्यष्टयः ८४, धृत्यौ २, अतिधृतिः १, द्विपदाः १७, एकपदाः ६, बार्हतप्रगाथाः १९४, ककुप्प्रगाथाः ५५, महाबार्हतप्रगाथः १। तदेवं तदुक्तप्रतिच्छन्दस्सङ्ख्यानां सङ्कलनया १०१४२ ऋचः स्युः, पूर्वप्रदर्शिततच्छ्लोकतस्तु गम्यन्ते १०४०२। तदत्र प्रायः सर्वत्रैव सङ्कलनाभ्रमोऽस्माभिरन्यदृष्ट्या प्रमाणित एव।

मुद्रितसर्वानुक्रमणीभूमिकायां यत् १०४४२ इति लिखितम्, तदस्यां वालखिल्यातिरिक्तायाः आश्वलायन्या इति तु सुव्यक्तम्।

जगन्नाथपण्डितोक्ता ऋक्सङ्ख्या तु नित्यद्विपदार्धर्चादिभेदकृता। चरणव्यूहटीकाकृत्संहितादसम्मता च सेत। तथाचोक्तं तेन—

"वालखिल्यसंहिता सर्वानुक्रमणीमन्त्रकृपर्कसंख्या उच्यते,— द्विपञ्चाशदधिकपञ्चशतदशसहस्राणीति (१०५५२)। एतत्सङ्ख्या नित्यद्विपदानैमित्तिकद्विपदासंहितोक्ता। हवनाध्ययनाभ्यां समाना सा नित्यद्विपदा,०—०, हवनाध्ययने विपरीता सा नैमित्तिकद्विपदा"-इत्यादि। नित्यद्विपदादिनिर्णयस्तु उपलेखग्रन्थालोचनत सम्पाद्य। उपलेखापि नैवाश्वलायन्या सम्भाव्यते, तत्र नित्यैकपदा पञ्चेत्याद्याश्वलायनीविरुद्धपरिगणनादर्शनात्, गण्यन्ते ह्याश्वलायन्यामेकपदा षडिति। एवं मर्दर्चादिष्वपि द्रष्टव्यम्।

स्वाम्युक्तपरिगणनेऽपि सङ्कलनभ्रम एव प्रतीयते।

तत्त्वतस्त्विहाश्वलायन्यां शाखायां माश्वलायनसंहितायां वा अष्टादशवर्गेषु अशीतिर्वालखिल्यर्चः सन्ति, तद्वालखिल्यसंहिता १०५२२ ऋच श्रूयन्त इति त्वस्माभिः सुनिश्चित मिति॥

अथासां शाखानां कतमा नवलम्ब्यादमैतरेयक मोक्त मिति विचारस्येतर्हि प्रस्तावोऽवसरः समुपस्थितः। दृश्यते हि ब्राह्मणग्रन्थेष्वेषा शैली,— या शाखा मवलम्ब्याम्नायते यद् ब्राह्मणम्, तत्संहितायां ये मन्त्रा आम्नाताः, तेषां प्रतीकग्रहणमात्रेण नामग्रहणमात्रेण वा विधानम्, ये मन्त्रा विधातव्या अप्यन्यशाखीया इति तत्संहितायां न दृश्यन्ते, तेषान्तु प्रपठ्य विधान मिति। तत्र प्रतीकमात्रेण यथा— "त्वं अग्ने सप्रथा असि, सोम यास्ते मयोभुव इत्याज्यभागयो पुरोऽनुवाक्ये"-इति ऐ० ब्रा० १ १ ४। आम्नातौ चैतौ मन्त्रावाश्वलायन्यां मस्याम् ५ १२ ४ पुन १ ९१ ८। नामग्रहणमात्रेण यथा— "सुकीर्त्तिं शंसति"-इति, पुनस्तदुत्तरत्र, "वृषाकपिं शंसति"-इति च ऐ० ब्रा० ६ ५ २। सुकीर्त्तिनाम मसर्चं सूक्तम्, वृषाकपिनाम तयोदशर्चं सूक्त मित्या

ह्वलायन्याम् १०, १३१ ; १०. ८६। अनाम्नातायाः प्रपठ्य विधानं यथा— "यस्माद् भीषा निषीदसि ततो नो अभयं कृधि। पशून् नः सर्वान् गोपाय नमो रुद्राय मीळ्हुष इति ता सुत्थापयेत्"–इति ऐ० ब्रा० ५. ५. २। न ह्येषा ऋगिहाश्वलायन्या माम्नाता।

तदेव मिद मैतरेयक मेतदाश्वलायन्या ब्राह्मण मिति वक्तुं युज्येत, यदि नासैतद्व्यतिक्रमोऽप्यत्र न प्रतीयेत। प्रतीयते ह्येतद्व्यतिक्रमोऽपि। तद्यथेहाम्नातानामपि मन्त्राणां प्रतीकग्रहणमात्रेण विधानम्— "अग्निर्मुखं प्रथमो देवतानाम्, अग्निश्च विष्णो तप उत्तमं मह इत्याग्नावैष्णवस्य हविषो याज्यानुवाक्ये भवत."–इति ऐ० ब्रा० १. १. ४, तथा "सावीर्हि देव प्रथमाय पित्र इति सावित्री मन्वाह"–इति १. ५. ४। नैते मन्त्रा इहाश्वलायन्या माम्नाताः ; तद्यदेतस्या आश्वलायन्या एतद् ब्राह्मणं स्यात्, तर्ह्येषां मन्त्राणां नून प्रपठ्य विधान दृश्येत। एव मिहाम्नातानामपि मन्त्राणा नामग्रहणमात्रेण विधान मस्ति यथा— "तिस्र. सामीधेनीरनूच्य तिस्रो देवता यजन्ति"–इति ऐ० ब्रा० ३. ५. १। ता एतास्तिस्रः सामिधेन्य ऋचोऽत्राश्वलायन्या न दृश्यन्ते। तथाश्वलायन्या माम्नातानामपि प्रपठ्य विधानं कृत मैतरयेण। तद्यथा— "इन्द्राग्नी आगतं सुतं, गीर्भिर्नभो वरेण्यम्, अस्य पातं धियेषितेत्यैन्द्राग्न मध्वर्युर्ग्रह गृह्णाति"–इति ऐ० ब्रा० ७. २. ७। आम्नातैवैषा आश्वलायन्याम् ३. १२. १।

अस्ति च ऋक्परिशिष्टो नामैको ग्रन्थ.। तदीयाः मन्त्रा अपि केचनेह ब्राह्मणे नामग्रहणमात्रेण विहिताः श्रूयन्ते। तद्यथा— 'प्रवल्हिका. शंसति", "आजिज्ञासेन्याः शंसति", "अतिवादं शंसति"–इति च ऐ० ब्रा० ६ ५. ७। परिशिष्टपर्वीयसूक्तान्तेभ्यो·

ऽप्यधिकमन्त्राणां विधानश्चेह श्रूयते यथा— "आहनस्याः शंसति ०—० ता दश शंसति"—इति ६. ५. १०। ऋक्परिशिष्टे खल्वा हनस्यानामर्चौऽष्टाविव श्रूयन्ते, इह तु दशानां विधान माम्नातम्।

तस्मादिदं ब्राह्मणं नाश्वलायन्याः सम्भाव्यते, सम्भाव्यते तु यस्यां शाखायां प्रतीकतो नामतो वा एतद्ब्राह्मणविहितानां सर्वासा मेवर्चा मस्ति विद्यमानता, नास्ति चेह पठितानाम्, अपि चेह विहिता ऋक्परिशिष्टग्रन्थीयाश्चर्चो यथावत् समाम्नाताः, तस्याः शाखाया एवेदं स्यादिति। तथाविधा कतमेति प्रश्नस्योत्तरं तु विलुप्त-पूर्वशाखाकालिकानां मध्यतमानां मस्माकं नैव सुकरम्, तथाप्यत्र यावच्छक्यं प्रयतितं गम्यते,— शाकल्यशिष्येण शाकलाचार्येण या संहिताधीताध्यापिता च, या मधीत्यैव शिशिरादयः शाखाकृतो-ऽभवन्, शिशिरवाष्कलसाङ्ख्यायनाश्वलायनाधीता, अप्यप्रच-लितशाकलाश्वलायनशाखातः पूर्वतना, सैव शाखा स्यादस्यैतरेय-ब्राह्मणस्यावलम्बन मिति। अत एवैतरेयारण्यकभाष्ये "न्वयं खेव न एतत् प्रोक्तम्"—इत्येतस्य व्याख्यान मेव मुक्तं सायणाचार्येण— "न' अस्मान् (महिदासादिकान्) शिष्यान् प्रति शाकल्येन प्राण रूपमृच मित्यादि त्वय मेव प्रोक्तम्, न तु मांस मित्यादिकं चतु र्थम्"—इति (३. २. २.)। इत्थ मस्य ब्राह्मणस्य शैशिरीयादिभ्यः पञ्चभ्यः प्राक्तनत्वेऽपि सर्वशाकलशाखोपयोगित्व मप्यध्यवसेयम्; सर्वासा मेव तासा मिथः किञ्चिद्भेदवत्त्वेऽपि तत्त्वतोऽभिन्नसंहिता कत्वात्। तस्मात् शैशिरीयाश्वलायनान्तानां पञ्चाना मेव शाखाना मिद मेकं ब्राह्मण मैतरेयं नामेति च सिद्धम्॥

———

( ७ )

अथेदानीं विचार्यं मस्ति कोऽस्य विषय इति। यज्ञ एवास्य विषय इति ब्रूमः ; प्रायः सर्वेषा मेव ब्राह्मणग्रन्थानां तत्रैव प्रवृत्तेः। यज्ञस्वरूपञ्चैवं निरूपितं भगवता कात्यायनेन— "यज्ञं व्याख्यास्यामः। द्रव्यं देवता त्यागः"–इति (श्रौ० सू० १. २. १, २.)। यज्ञस्वरूपं कथयिष्याम इति प्रथमसूत्रार्थः। 'द्रव्यं' पुरोडाश-चरु-सान्नाय्य-पशु-सोमादिकम्, 'देवता' अग्निविष्णुसोमेन्द्रादिकाः, देवता मुद्दिश्य पुरोडाशादिद्रव्यस्य यः 'त्यागः' उत्सर्गः, स यज्ञः। तत्र "तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेयते। देवतासङ्गतिस्तत्र दुर्बलन्तु परम्परम्"–इत्याहुर्याज्ञिकाः। तद्धितेन देवतासङ्गतिर्यथेह— "अष्टाकपाल आग्नेयः, त्रिकपालो वैष्णवः"–इति १. १. १। चतुर्थ्या देवतासङ्गतिर्यथेह— "अग्नये प्रणीयमानाय"–इत्यादि १. ५. २, "सोमाय क्रीताय प्रोह्यमाणाय"–इत्यादि च १. ३. २। मन्त्रवर्णेन देवतासङ्गतिर्यथेह प्रयाजयागेषु (१. ३. ६.)। तदत्र द्रव्याणि प्रसिद्धानि, मन्त्रलक्षणानि निरुक्तालोचने प्रदर्शितानि, देवतास्वरूपाणि त्विहैवानुपदं यथामति बोधयिष्यामः॥

अथ यागलक्षणभेदादीनप्यत्र किञ्चित् सूचयामः। स एव यागः प्रक्षेपाधिको होम उच्यते। "देवतायै सङ्कल्पितस्य वह्नौ प्रक्षेपो होमः"–इति हि तल्लक्षणं साम्प्रदायिकम्। आह चात्र कात्यायनः— "यजतिजुहोतीनां को विशेषः ? तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोऽनुवाक्यावन्तो यजतयः, उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः"–इति (१. २. ५, ६, ७.)। तदेवं यागस्य द्वैविध्यम्। द्विविध मपि चैतद् यागकर्म प्रधानाङ्गभेदात् पुनर्द्वि

विधम्। तद्यथा— ये च यागा यदाग्नेयोऽष्टाकपाल इत्यादिवाक्यै दर्शपूर्णमाससयोगेनोत्पन्ना, ते दर्शपूर्णमासशब्दवाच्या। तेषामेव "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत"—इति फलसाधनत्वेन विधानात् प्रधानत्वम्, तत्प्रकरणपठितमितरत् सर्वं मान्वन्वाधानादि ब्राह्मणतर्पणान्तं तदङ्गजातम्, फलश्रुतिशून्या प्रयाजादियागा पूर्वाघारादिहोमाश्च तत्प्रकरणपठितास्तदुपकारका इति तदङ्गभाजना एव। तदुक्तं आपस्तम्बर्षिणा यज्ञपरिभाषायाम्—"आग्नेयोऽष्टाकपालोऽग्नीषोमीय एकादशकपाल उपांशुयागश्च पौर्णमास्यां प्रधानानि, तदङ्गमितरे होमा"—इति (७७, ७८ सू०)। 'सहाङ्गं प्रधानम्'—इति (८६ सू०) च तत्रैव प्रधानलक्षणम्।

ते यागा पुनस्त्रिविधा, इष्टि होत्र सोमभेदात्। दर्शपूर्णमासादय इष्टय, अग्न्याधेयाग्निहोत्रादयो होमा, अग्निष्टोमास्त्वग्निष्टोमादय सोमा। ते पुनस्त्रिसप्तका, हवि पाक सोम संस्थाभेदात्। तत्र अग्न्याधेय, अग्निहोत्रम्, दर्श, पौर्णमास, आग्रयणम्, चातुर्मास्यम्, पशुबन्धश्चेति सप्त हवि संस्था। सायं होम, प्रातर्होम, स्थालीपाक, नवयज्ञ, वैश्वदेव, पितृयज्ञ, अष्टकेति सप्त पाकसंस्था। अग्निष्टोम, अत्यग्निष्टोम, उक्थ्य, षोडशी, वाजपेय, अतिरात्र, अप्तोर्याम इति सप्त सोमसंस्था। त एव सोमयागा पुनरेकाहाहीनसत्रभेदात् त्रिविधा भवन्ति। एतद्भिन्ना अप्यन्ये बहव सन्ति काम्ययागा। तद्यथेदम्— आयुष्कामेष्टि, पुत्रेष्टि, पवित्रेष्टि, वर्षकामेष्टि, ग्रामकामेष्टि, वैश्वानरेष्टि, मरुत्वतीष्टि, ऋषीष्टि मोष्टि गोष्टि एवमादय। गोमेधाश्वमेधादयस्तु पशुयागा उच्यन्ते, ते तु सोमाङ्गत्वेन। गौतामणीयागोऽपि सोमविकार एव।

अस्ति चैषां यागानां प्रकृतिविकृतिभेद । यस्मिन् यागेऽपर विधिनिरपेक्षाणां सर्वेषा मेव कर्मणा मुपदेश स्तत , स एव प्रकृतियाग ; प्रकृतिवच्च विकृति. कर्त्तव्या भवति। अत्रा-ह्लापस्तम्ब:— "दर्शपूर्णमासाविष्टीना प्रकृति, अग्नीषोमीयस्य च पशो., स सवनीयस्य, सवनीय ऐकादशिनानाम्, ऐकादशिन' पशुगणानाम्, वैश्वदेवं वरुणप्रघास साकमेध शुनासीरीयाणाम्, वैश्वदेविक एककपाल एककपालानाम्, वैश्वदेव्यामिक्षामिक्षा णाम् ,०—०, अग्निष्टोम एकाहाना प्रकृति, द्वादशाहो ऽहर्गणा-नाम्, गवामयन सावत्सरिकाणाम्, निकायिनान्तु प्रथम "–इति (य० प० सू० ११६—१४४ सूत्राणि)। एषु सर्वेष्वेव सूत्रेषु प्रकृतिरित्यनुवर्त्तत इति ध्येयम् ॥

देवता। सर्वेष्वेतेषु यागेष्वहयागेषु च यत्र कुत्रचित् यस्य कस्यचित् द्रव्यादे: प्रार्थनीयफलदानसामर्थ्य मारोपयन् या का च स्तुतिं करोति, तत्स्तुतिमन्त्रस्य सैव देवता, तादृशस्तुतिमन्त्रप्रधान स च यागस्तद्देवतो मन्यते। तदाह निरुक्तकारो भगवान् यास्क.— "यत्काम ऋषिर्यस्यां देवताया मार्थपत्य मिच्छन् स्तुति प्रयुङ्क्ते, तद्दे-वत. स मन्त्रो भवति"–इति (निरु० ७. १. १.), "यो देव. सा देवता"–इति च (७. ४. २.)। "देवो दानाद्वा, दीप नाद्वा, द्योतनाद्वा, द्युस्थानो भवतीति वा"–इति देवशब्द-निर्वचनञ्च तत्रैव। द्युशब्दश्चात्र भमण्डलमात्रस्योपलक्षक. ; एवं हि द्युलरिचस्थाना चन्द्रादीना, मीरजगद्विर्भूताना ध्रुवादीनाञ्च ग्रहण मिह सिध्यति। तदेव मिन्द्रवाय्वादीना मचेतनानां हव्यादिदान हेतुकम्, याजाधरराजादीनां चेतनाना चार्थादिदानहेतुकं देव त्वम्, अश्वादिजीवाना मजीवानाञ्च ग्रावादीना दीप्तिहेतुक देव

त्वम्; अग्निचन्द्रपर्जन्यादीनां ब्रह्मवर्चस्विनां विदुषाञ्च द्योतनहेतुकं देवत्वम्; सूर्यसूर्यकरादीनां तदुपरिस्थानां तारकादीनाञ्च द्युस्थल-निबन्धनं देवत्वम्; यत्र त्वीश्वरे सर्वे एवैते गुणा उपपद्यन्ते, तस्य देवत्वस्य तु कैव कथा। तदेवं माब्रह्मस्तम्बपर्यन्तानां सर्वेषा मेव पदार्थानां देवत्व मुपगम्यते। द्युस्थले सति दानादिगुणवत्त्व मिदं मेकं मेव देवलक्षणं स्वीकार्यं मिति मते तु सूर्येन्द्राग्न्यनि-लेन्दुप्रभृतीनां मूलतो भमण्डलस्थानां मेव पदार्थानां मुख्यं देव-त्वम्, तत्तत्स्थानभक्तिसाहचर्यतस्त्वन्येषां भूरादिलोकानां तत्स्थानां मनुष्यसोमौषध्यादीनां मपीत्येव विशेषः।

अन्यच्चोक्तं यास्केन—"तिस्र एव देवता इति नैरुक्ताः। अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थान."-इति (७. २. १.), "तासां (तिसृणां देवतानां) भक्तिसाहचर्यं व्याख्या-स्यामः। अथैतान्यग्निभक्तीनि—अयं लोकः ०—० ये च देवगणाः समाम्नाताः प्रथमे स्थाने"-इत्यादि (७. ३. १.) च। तानि च प्रथमे स्थाने समाम्नातानां देवानां नामानि निघण्टावाम्नातानि—"अग्नः शकुनि. मण्डूका."-इत्यादीनि (५. ३. १-३६.) षट्त्रिं-शत् द्रष्टव्यानि। व्याख्यातास्ता देवता निरुक्ते समन्त्रोदाहरणम्—"अथ यानि पृथिव्यायतनानि स्तुतिं लभन्ते, तान्यतोऽनुक्रमिष्याम.। तेषां मश्व. प्रथमागामी भवति"-इत्यादिना (८. १-४३.)। एवम् अथैतानीन्द्रभक्तीनि अन्तरिक्षलोकः०—० ये च देवगणा. समा-म्नाता मध्यमे स्थाने"-इत्यादि चोक्तं तत्र तदुत्तरम् (७. ३. २.)। मध्यमे स्थाने समाम्नातानां देवानां नामानि च तत्रैव निघण्टौ—"श्येनः सोम चन्द्रमा"-इत्यादीनि षट्त्रिंशत् (५. ५. १—३६.)। व्याख्यातास्ता अपि देवता निरुक्ते समन्त्रोदाहरणम्—

"श्येनो व्याख्यातस्तस्यैषा भवति"–इत्यादिना ( ११. १–५०. )। एवम् "अथैतान्यादित्यभक्तीनि असौ लोकः ०–० ये च देवगणाः समाम्नाता उत्तमे स्थाने"–इत्यादि चोक्तं तत उत्तरम् ( ७. ३. ४. )। उत्तमे स्थाने समाम्नातानां देवानां नामान्यपि तत्रैव निघण्टौ— "अश्विनौ उषाः सूर्या"–इत्यादीनि एकत्रिंशदाम्नातानि ( ५. ६. १–३१. )। व्याख्यातास्ता अपि देवता निरुक्ते समन्त्रोदाहरण मेव— "अथातो द्युस्थाना देवतास्तासा मश्विनौ प्रथमागामिनौ भवतः"–इत्यादिना ( १२. १–४६. )। तदेवं प्रधानतो देवतात्रित्वेऽपि स्थानभक्त्यादितो तद्बहुत्वं च न विरुद्धम्। तत एवेद मुक्तं तत्र तेनैव— "तासां ( तिसृणां देवतानां ) माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि"–इति ( ७. २. १. )। भागो विभागो भक्तिरित्येकार्थाः। महाभागस्य भावो माहाभाग्यम्। तच्च माहाभाग्यम् एकस्थानभाक्त्वेन, एकस्मिन् मन्त्रे साहचर्यतयाम्नातत्वेन, एककर्मभाक्त्वेन, एकवाच्यमात्वेन च भवति। तस्मान्माहाभाग्यादेव देवबहुत्वं स्वीकार्यमिति तदर्थः। तदित्थं मामद्यन्तस्यपर्यन्ताना सर्वेषा मेव पदार्थानां पारिभाषिकं देवत्व मभ्युगत्यैव "यत्काम ऋषिर्यस्यां देवतायामार्थपत्य मिच्छन् स्तुतिं प्रयुङ्क्ते तद्देवतः स मन्त्रो भवति"–इत्युक्त ( निरु॰ ७. १. १. ) मिति फलितम्। तस्मात् वैदिकमन्त्रेषु स्तुता एव पदार्थाः तत्तन्मन्त्रतः स्तुतिकाले एव च देवत्वेन स्तुत्या भवन्ति; नान्ये नाप्यन्यत्रेत्येव याज्ञिकसिद्धान्तः। अत एव वै मन्त्रमयी देवतेत्येव स्वीकुर्वन्तीति च प्रवादः।

तत्रापि प्रधानतस्त्रयस्त्रिंशदेव देवता. सर्वसंहितासु परिगणय्य दर्शिता.। तद्यथा— "ये त्रिंशति त्रयस्परो देवासो बर्हिरासदन्।

भिदमह दिताससन्"-इति ऋ० स० ८ २८ १। "त्रयस्त्रिं शतानुवत भूतान्यशाम्यन् प्रजापति परमेष्ठ्यधिपतिरासीत्"-इति वा० स० १४ ३१। "यस्य त्रयस्त्रिंशद्देवा निधि रक्षन्ति सर्वदा। निधि त मद्य को वेद य देवा अभिरक्षथ"-इति अथ० स० १० २३ ४ २३। ब्राह्मणेषु च प्राय सर्वष्वेवैव मेव।

तथा चाखिय ब्राह्मणे देवाना त्रयस्त्रिंशत्सङ्ख्याकत्व मसकृ-दाम्नातम्। तद्यथा— "त्रयस्त्रिंशद्वै देवा अष्टौ वसव एकादश रुद्रा द्वादशादित्या प्रजापतिश्च वषट्कारश्च"-इति (२ २ ११)। एव मप्येतदतिरिक्ता अपि देवता समाम्नाता। तद्यथैव प्रायणी येष्ट्यारम्भे (१ २ १)— 'पथ्या यजति', "अग्नि यजति", "सोम यजति", सवितार यजति", "उत्तमा मदिति यजति"-इति। तदवाग्निभिवा सर्वा एव तास्त्रयस्त्रिंशद्योऽतिरिक्ता श्रुता, अथ सवितुरादित्यविशेषत्वेन त्रयस्त्रिंशान्त पातित्वस्वीकारेऽप्यन्यासा ति सृणा तदतिरिक्तत्व मपरिहार्यम्। अत एव निघण्टौ दैवते काण्डे पथ्यादिभिन्ना अपि बह्वो देवता आम्नाता।, प्रदर्शितत्रयस्त्रिंशद् गणनन्तु सोमप पर मित्येव। तदाहैवैतरेये— "त्रयस्त्रिंशद्वै देवा सोमपास्त्रयस्त्रिंशदसोमपा। अष्टौ वसव, एकादश रुद्रा, द्वाद शादित्या, प्रजापतिश्च वषट्कारश्च, एते देवा सोमपा। एका दश प्रयाजा, एकादशानुयाजा, एकादशोपयाजा, एतेऽसोमपा पशुभाजना। सोमेन सोमपान प्रीणाति, पशुनाऽसोमपान्"-इति २ २ ८। एव शतपथादिष्वपि द्रष्टव्यम्।

तदव पूव सोमपाना त्रयस्त्रिंशत्सङ्ख्याना देवाना परिचयाय किञ्चिद् यतामहे।— 'वसव'-इति पद निघण्टौ रश्मिनामसु पठितम् (१ ५ १०) पुन द्युस्थानदेवनामसु च (५ ६ २८)।

निरुक्तकारो भगवान् यास्कस्तस्य वसुशब्दस्य निर्वचनादिक मेव मकरोत्— "वसवः । यद् विवसते सर्वम् । अग्निर्वसुभिर्वासव इति समाख्या ; तस्मात् पृथिवीस्थानाः"–इत्यादि , "इन्द्रो वसुभिर्वासव इति समाख्या ; तस्मान्मध्यमस्थानाः"–इत्यादि , "वसवः— आदित्यरश्मयः , विवासनात् ; तस्माद् द्युस्थानाः"–इत्यादि च ( १२. ४. ७, ८, ६. ) । तदेवं निरुक्तमते पार्थिवाग्निशिखाः, वैद्युताग्निप्रभाः , उत्तमाग्निरश्मयश्चेति तमोविवासनहेतवस्त्रि-स्थानास्त्रिविधा वसवो निर्णीताः ; तत्तत्तत्तत्तन्निगममन्त्राम्नान-प्रदर्शनादिभ्यः । तदेतत् सर्वं तत्तन्निरुक्तग्रन्थत एवावगन्तव्यम् । शतपथश्रुतितोऽपि वसूनां त्रिस्थानत्वादिक मेवावगम्यते, परं तत्त्व-न्यविधम् । तथाहि— "कतमे वसव इति । अग्निश्च पृथिवी च, वायुश्चान्तरिक्षञ्च, आदित्यश्च द्यौश्च, चन्द्रमाश्च नक्षत्राणि चैते वसवः; एतेषु हीदं सर्वं वसुहितमेते हीदं सर्वं वासयन्ते ; तद्यदिदं सर्वं वासयन्ते तस्माद् वसव इति"–इति ( १४. ५. ७. ४. ) । एवं हि तेषां तत्त्वतस्त्रिस्थानत्वेऽपि "स गायत्री मेवान्वग्रे वसुभ्यः प्रातस्सवने-ऽभजत्"–इत्यादिश्रुतिषु ( ऐ० ब्रा० ३. २. २. ) वसूनां गायत्री-च्छन्दोभागित्वकल्पनात् , अग्निना सहाम्नानात् , प्रातस्सवनदेव-त्वेनोपन्यासाच्च पृथ्वीस्थान मेव प्रधानम् । तैत्तिरीयारण्यके तु वसूनां पार्थिवाग्निस्वरूपत्वं स्फुट माम्नातम् ( १. ६. १. )—

> "अग्निश्च जातवेदाश्च सहोजा अजिराः प्रभुः ।
> वैश्वानरो नर्यापाश्च पंक्तिराधाश्च सप्तमः ।
> विसर्पेवाष्टमोऽग्नीना मेतेऽष्टौ वसवः क्षिताः"–इति ।

एवमपि "अग्नेते उत्तरे (मध्यमोत्तमे) ज्योतिषी अग्नी, उच्येते" –इति (७. ४. ३.) निरुक्तसिद्धान्तात् अग्निविशेषाणां वसुदेवानां

विस्थानत्व मप्यव्याहतम्। तथाचाष्टौ वसवो ऽष्टविधा अग्नय इत्येव सारम्।

'रुद्रा'–इति पद निघण्टौ माध्यमिकदेवनामसु पठितम् (५. ५ ८)। तथा चैषा मन्तरिक्षस्थत्वेन वायुभक्तित्व मवगम्यते। तन्निर्वचनादिकन्त्वेव मवादि यास्केन— "रुद्रो रौतीति सतो रोरूयमाणो द्रवतीति वा रोदयतेर्वा। यदरुदत् तद्रुद्रस्य रुद्रत्व मिति काठकम्। यदरोदीत् तद्रुद्रस्य रुद्रत्व मिति हारिद्रविकम्" –इत्यादि (१० १ ५)। एतेन च रुद्राणा वायुविशेषत्व मेव प्रतीयते। ततस्तेनैव तदनुसारमुक्तेन "अग्निरपि रुद्र उच्यते' –इत्यादिना (१० १ ७) रुद्रस्याग्निविशेषत्वे निर्णीतेऽपि माध्यमिकत्वाद् वायुभक्तित्व न विरुद्धम्, विद्युदग्नेर्हि आन्तरिक्ष्या न्माध्यमिकत्वम्, तस्माद् वायुसभागत्व च सुव्यक्तम्। ऐतरेये ऽप्यत्र "(स) त्रिष्टुभ मिन्द्राय रुद्रेभ्यो मध्यन्दिने (व्यभजत्)" –इति श्रुतौ (३ २, ३) रुद्राणा त्रिष्टुप्छन्दोभागित्वकल्पनात्, इन्द्रेण सहाम्नानात्, माध्यन्दिनसवनदेवत्वेनोपन्यासाच्चान्तरिक्ष स्थानत्व मेव बुध्यते। शतपथेऽपि रुद्रा वायुविशेषा एव विश्रुता, पर त्वन्यथैव। तद्यथा— "कतमे रुद्रा इति, दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्ति, तद्यद्रोदयन्ति तस्माद् रुद्रा इति (१४. ५प ७ ५)। अथात्र तैत्तिरीयारण्यकम् (१ ८ ४)— "अथ वायोरेकादश। ०—०।

भ्राजमाना व्यवदाता याश्च वासुकि-वैद्युता।
रजता परुषा श्यामा कपिला अतिलोहिता।
ऊर्द्धा अवपतन्ताश्च वैद्युत इत्येकादश"–इति।

तदित्थ विद्युत्सन्निष्टा अमूर्त्तयुगिदानरूपा आन्तरिक्ष्या वायु

विशेषा: तथाविधवायुसंश्लिष्टा विद्युदग्नयो वा रुद्राः, स्फूर्जथुरेव तेषां रोदन मिति निश्चितम्।

'आदित्याः'-इति पदं निघण्टौ द्युस्थानदेवतासु पठितम् (५. ६. २४.)। तथा चैषां द्युस्थत्वेन सूर्यभक्तित्व मवगम्यते। तन्निर्वचनादिकन्त्वेव मथादि तेनैव— "आदित्यः कस्मात्? आदत्ते रसान्, आदत्ते भासं ज्योतिषाम्, आदीप्तो भासा इति वा, अदितेः पुत्र इति वा"–इति (२. ४. १.), "अथातो द्युस्थाना देवगणास्तेषा मादित्याः प्रथमागामिनो भवन्ति"–इत्यादि च (१२. ४. १.)। तदेतेन तेषा मादित्यानां सूर्यविशेषत्वं द्युस्थानत्व चावगम्यते। "आदित्येभ्यस्तृतीयसवने"–इत्यादिश्च (३. २. २.) अत्र ऐतरेय श्रुतिः; तदेतत्तृतीयसवनभाक्त्वेन चादित्याना द्युस्थानत्व मेव बुध्यते। श्रूयतेऽप्येवं शतपथे— "कतम आदित्या इति, द्वादश मासाः संवत्सरस्यैत आदित्याः; एते हीदं सर्व माददाना यन्ति। तद्यदिदं सर्व माददाना यन्ति, तस्मादादित्या इति"–इति (१४. ५प्र० ७. ६.)। तदित्थ मादित्यापरपर्यायसूर्यक्षतमासरूपकालाना मप्यादित्यत्वम्, सौरत्वेन च तेषा द्युस्थानत्व मपि सुवचम्।

गुरुचरणैस्त्विह— 'निरुक्ते व्याख्याताः सविवादयो द्वादश सूर्यविशेषा एवादित्या.'–इत्युपदिष्टम्। तथाच १२. २, ३ख०—

"सविता, ०—० तस्य कालो यदा द्यौरपहततमस्काकीर्ण-रश्मिर्भवति"–इत्याद्युक्त. प्रथम आदित्य.।

"भगः, तस्य काल. प्रागुत्सर्पणात्"–इत्याद्युक्तो द्वितीय।

"सूर्यः, सर्तेर्वा सुवतेर्वा स्वीर्यतेर्वा"-इत्याद्युक्तस्तृतीयः।

'स पुनरयं भगकालात् सतः सूर्यो भवति'–इति तत्र दौर्गी वृत्तिः।

"अथ यद्रश्मिपोषं पुष्यति, तत् पूषा भवति"-इत्याद्युक्त चतुर्थ.। 'आपूर्णस्तेजसा'-इति तद्वृत्तिः।

"अथ यद् विषितो भवति, तद् विष्णुर्भवति"-इत्याद्युक्त. पञ्चमः।

"विश्वानरः [प्रत्यृतः सर्वाणि भूतानि ७ ६. १.]"-इत्याद्युक्त षष्ठ।

"वरुण: [वृणोतीति सत १०. १. ३.]"-इत्याद्युक्तः सप्तम।

"केशी, केशा रश्मयस्तद्वान्'-इत्याद्युक्तोऽष्टम.।

"अथ यद्रश्मिभिरभिकम्पयन्नेति"-इत्याद्युक्तो वृषाकपिर्नवम.।

'वर्षिता चावश्यायाना कम्पनश्च भूतानाम्'-इति तद्वृत्ति.।

"यमः [यच्छतीति सत. १०. २. ६.]"-इत्याद्युक्तो दशम।

"अजएकपाद्, अजन. एक पाद ; एकेन पादेन पातीति वैकेन पादेन पिबतीति वैकोऽस्य पाद इति वा"-इत्याद्युक्त एकादश।

'समुद्र. [समोदन्तेऽस्मिन् भूतानि २. ३. १.]"-इत्याद्युक्तो द्वादश।

तदित्थ द्वादशमासकाला द्वादशविधसूर्यो वा द्वादश आदित्या गम्यन्ते। अभिधानभेदात् कर्मभेदाच्च देवताभेदो नैरुक्तादिसम्मत एव। अतएव एकस्यैव तेजसोऽग्निविद्युत्सूर्येति त्रित्वम्, अथैकस्यै-वाग्ने अग्नि., जातवेदाः, द्रविणोदाः, वैश्वानरः इति चत्वार्यभि धानानि पृथक्देवतात्वेनाम्नातानि (निघ० ५. १. २.)। तत्रचेदं निरुक्ते स्फुटम्— "कर्मपृथक्त्वात्०—० पृथगपि स्तुतयो भवन्ति तथाभिधानानि"-इत्यादि ७. २. १ द्रष्टव्यम्।

अदितेः पुत्रा इति चादित्याः श्रुतिपरिचिता. सम्यक्, तथाहि ऋ० सं० २. २७. १, य० सा० म० ३४. ५४—

"इमा गिर आदित्येभ्यो घृतस्नू: सनाद् राजभ्यो जुह्वा जुहोमि।

शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंश."-इति।

अत्र 'तुविजात.'-इत्यस्य 'बहुजातस्य धाता'-इत्यर्थ. तत्रो

यास्केन ( १२. ४. २. )। तदेव मस्या ऋचि सप्तादित्यनामानि श्रुतानि ; अष्टमस्त्वादित्यो मार्त्तण्डनामा। स चान्यत्र श्रुतः। तद्यथा ऋ० सं० १०. ७२. ८—

"सप्तभिः पुत्रैरदितिरुप प्रैत् पूर्व्यं युगम्।

प्रजायै मृत्यवे त्वत् पुनर्मार्त्ताण्ड माभरत्"–इति।

उपपद्यते चैवम् "अष्टौ पुत्रासो अदितेः"–इति ( ऋ० सं० १०. ७२, ८. ) श्रुतिश्च। "अदितिरन्तरिक्षम्"–इत्यैतरेयकम् ( ३. ३. ०. )। "अदितिरादीना देवमाता"–इत्यादि च नैरुक्तम् ( ४. ४. २, ३. )। त एतेऽष्टावादित्या आन्तरिक्षाः ; अत एषा मिह नोपयोग इति च ध्येयम्॥

अथ प्रदर्शितैतरेयश्रुतिसमाम्नानक्रमतः प्रजापतिं निरूपयामः— 'प्रजापतिः'–इति पदं निघण्टावन्तरिक्षस्थानेष्वाम्नातम् ( ५. ४. २८. )। "प्रजापतिः, प्रजानां पाता वा पालयिता वा" –इत्याह यास्कः ( निरु० १०. ४. ५. )। "प्रजापतिर्वा इद मेक एवाग्र आस, सोऽकामयत प्रजायेय भूयान्त्स्या मिति"–इत्यादि च ऐ० ब्रा० २. ५. १। तदित्थं परमेश्वर एव प्रजापतिरभिगम्यते। कालवाच्यपि प्रजापतिशब्दः श्रूयते— "संवत्सरः प्रजापतिः ; सोऽस्य सर्वस्य प्रजनयिता"–इति च तत्रैव ( २. ५. ७. )। "प्रजापतिश्चरति गर्भे अन्तः"–इति ( य० वा० सं० ३१. १८. ) श्रुतेः जीवोऽपि प्रजापतिर्गम्यते। "यः ( प्रजापतिः ) देवेभ्य आतपति" –इत्यादि च तत्रैव ( ३१. २०. ), "प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् सूर्यां सावित्रीम्"–इत्याद्यैतरेयकम् ( ४. २. १. ), प्रजापतिर्वै स्वां दुहितर मभ्यध्यायत् , तद्दिव मित्यन्य आहुः उषम मित्यन्ये"–इत्यादि च तत्रैव ( ३. ३. ८. )। एवमाद्याम्नायेभ्यः

सूर्योऽपि प्रजापतिरवगम्यते। "एष वै प्रजापतिर्यदग्नि"-इति तु तैत्तिरीयकम् (ब्रा० १. १ ५. ५.)। "प्रजापतिर्हि वाक्" -इति च तत्र तदुत्तरम् (१. ३. ४ ५.)। "रूप वै प्रजापति" -इति, "नाम वै प्रजापति"-इति च तत्रैव (२. २. ७. १.)। "यज्ञो वै प्रजापति."-इति च तै० ब्रा० १. ३ १०. १०। शतपथब्राह्मणे "कतम प्रजापति -इत्याशङ्क्य "यज्ञ प्रजापति." -इति समाहितम् (१३. ५म. ७.)। तैत्तिरीयसंहितायान्तु "मन इव हि प्रजापति"-इति (६. ६. १०. ३.) मनसोऽपि प्रजापतित्व साम्नातम्। "प्रजापति स्यात् वायुराकाश आदित्यो वा"-इति चाह मीमांसासूत्रभाष्ये शबर (१. २. १०.)। तदित्थं प्रजापतिशब्दो बह्वर्थ। अत एवाम्नात मिद- "अपरिमितो वै प्रजापति"-इति (६. १. २.)। शतपथे ऽप्येव श्रुतम्-- 'सर्वं वा इदं प्रजापतिर्यदिमे लोका यदिदं किञ्च"-इति (५. १ ३ ११.)। एव मपि "दिवो धर्त्ता भुवनस्य प्रजापति. (ऋ० स० ४. ५३. २.) -इत्याद्याम्नानप्राबल्यात् आदित्य एव मुख्य प्रजापतिरित्यस्माकम्॥

अथैतैतरेये सोमप देवाना चर्याङ्गिंयत्ताद्यापूरको वषट्कारः श्रुत। "वौषडिति वषट्कार"-इत्याहाश्वलायन (श्रौ० सू०) १. ५. १२। "उच्चैस्तरां वा वषट्कार"-इति च पा० सू० १ २. ३३। "यस्यै देवतायै हविर्गृहीत स्यात्, तां मनसा ध्यायेद् वषट् करिष्यन्निति ह विज्ञायते"-इत्याह यास्क (निरु० ८. २. ७)। श्रुतश्चैतद् वचन मिहैतरेये। तथाहि-- "यस्यै देवतायै हविर्गृहीत स्यात्, तां मनसा ध्यायेद् वषट् करिष्यन् साक्षादेव तद्देवता प्रीणाति, प्रत्यक्षाद् देवता यजति"-इति ३ १. ८। तदित्थं वौषडिति उच्चैर्ध्वनिरेव वषट्कारो देव इति

मुक्तम । यच्चाम्नात शतपथे— "प्राणो वै वषटकार"-इति ( ४ २ १ २८ ) तत्तु स्यादौपचारिकम्, उच्चैर्ध्वनि प्राणभृता वतवता मेव भवतीति ॥

शतपथब्राह्मणे हि वस्वादिषु त्रयस्त्रिंशत्संख्याकेषु देवेषु वषट् कारो न श्रूयते, श्रूयते त्विन्द्रपदम। तथाहि—"अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशत्, इन्द्रश्च प्रजापतिश्च त्रय स्त्रिंशौ"-इति ११ ६ ३ ५। तत्रैवोत्तरत्र ( १४ ५प्र० ७ )— "कतम इन्द्र ?",-इत्याशङ्का "स्तनयित्नुरेवेन्द्र"-इति सिद्धान्तितम्। अत्र स्तनयित्नुहेतुर्मेघचालको वायुरेवार्थो बोध्य। तथा तत्रैव तत उत्तर श्रुतम्— "कतम स्तनयित्नु ?"-इति प्रश्नपूर्वकम् "अशनिरिति -इति। अत्राप्यशनिहेतु स्तनयित्नु रित्येवार्थ प्रतीयते। यास्काचार्येण त्विन्द्रशब्दो बहुधा निरुक्तो बहुदाहृतश्च ( ७ २ १ ), ततोऽपि मेघचालको वायुरेवेन्द्र इति प्रधानतोऽवगम्यते, परमेश्वरात्मादित्यकालाद्यर्थाश्च गम्यन्ते यथाप्रकरणम्। तदेतत्सर्व सम्प्रकृताया मैकत्वदेवतसुधा सूचितम्, तन्निर्वचनादिकन्त्विहाप्यनुपद दर्शयिष्याम ॥

अपि शतपथे ब्राह्मणे ( ४ २ ७ २ ) सोमपदेवेषु द्यावा पृथिव्योर्दाक्षिणत्वत्रयस्त्रि शत्त्वे अभ्युपगम्य, तेषा मुत्पादकस्य प्रजा पतेश्चतुस्त्रिंशत्त्वमाम्नातम्। तथाहि— "अष्टौ वसव एकादश रुद्रा द्वादशादित्या इमे एव द्यावापृथिवी त्रयस्त्रिंशौ, त्रयस्त्रि शद्वै देवा, प्रजापतिश्चतुस्त्रिश "-इति ॥

अथासोमपानाम।— तत्र प्रयानदेवाना परिचयाय ऐतरे योक्त 'समिधो यजति" इत्यादिक मेवेदम् ( २ १ ४ )। तैत्ति रीयेऽप्येवम— समिध, तनूनपात नराशसो वा, इड, बर्हि,

दुर, उषासानक्ता, दैव्याहोतारा, तिस्रो देव्य, त्वष्टा, वनस्पति, स्वाहाकृतय,— इत्येवैकादशविधा (ब्रा० २ ६ २)। प्रधानस्य यागस्य प्रमुखे या एकादश आहुतयो हूयन्ते, ता एव प्रयाजाहुतय प्रयाजयागा वा उच्यन्ते। तन्मन्त्राणा देवाप्रीणनहेतुत्वात् वेदेषु आप्रीति व्यपदेश। ते त्वाप्रीमन्त्रा यद्यपि सर्वत्राम्नाता द्वादश, समिदादय प्रयाजदेवता अपि द्वादशैव श्रुता, तथापि तत्र द्वितीयतृतीययोर्वैकल्पिकत्वेन विधानादेकत्वसिद्धेरेकादशैव पर्यवसन्ना भवन्ति। तदेतत् सर्वं सर्वब्राह्मणेषु विश्रुतम्, भगवता यास्केन च स्पष्टीकृतम् (८ ३ ७)। समिदादिव्याख्यानञ्च निरुक्तादौ सुव्यक्तम्, यथा—"इध्म (समिध) समिन्धनात्०—० यज्ञेध्म इति कात्थक्य", "तनूनपात् आज्य भवति", "नराशसो यज्ञ", "इड०—० ईडितव्य (प्रक्रियाणि)", "बर्हि परिबर्हणात् (कुश)", "द्वार (दुर)०—० गृहद्वार", "उषासानक्ता= उषाश्च नक्ता च, उषा व्याख्याता (रात्रे अपरकाल), नक्तेति रात्रिनाम", 'दैव्याहोतारा= दैव्यौ होतारौ, अयञ्चाग्निरसौ च मध्यम", "तिस्रो देव्य ('इडा', 'भारती', 'सरस्वती')", "त्वष्टा= माध्यमिक (रूपकृत्)", "वनस्पति— यूप", "स्वाहाकृतय, स्वाहेत्येतत् सु+आहेति वा, स्वा वाग् आहेति वा, स्व प्राहेति वा, स्वाहुत हविर्जुहोतीति वा"–इति (८ १—८ ३ ५)। "दैव्याहोतारा= नेष्टापोतारौ'–इति तै० ब्रा० ३ ६ १३ ६। 'दैव्यहोतृशब्दवाच्यौ पत्नानुयाजदेवस्य द्वौ देवौ'–इत्यादि तत्र भा० भा०। तथाच तत्तन्नामकौ द्वावृत्विजौ। तदेव सिध्यादय स्वाहाकृत्यन्ता सर्वं एवैमे पदार्था यज्ञमन्त्राभिस्वान् निबलेन श्रुता इत्येव ब्राह्मणकृता मानय फलित॥

एवं प्रधानयागस्य पश्चाद् वा एकादश आहुतयो ह्रयन्ते, ता एवानुयाजाहुतयोऽनुयाजयागा वा उच्यन्ते। तासा मेकादशाना माहुतीनां देवा इहैतरेये न युताश्चैत्तिरीयके तूपलभ्यन्ते। तद्यथा— "बर्हिः, द्वारः, उषासानक्ता, जोष्ट्री, ऊर्जाहुती, दैव्या-होतारा, तिस्रो देव्यः, नराशंसः, वनस्पतिः, बर्हिः, स्विष्टकृत्— इति तै० ब्रा० ३. ६. १२. १४। अत्र बर्हिषो द्विरुपादानं किञ्चिद्-विशेषाभिप्रायम्, तत् तत्रैव द्रष्टव्यम्॥

उपयाजदेवाना मपि परिचयस्तैत्तिरीयत एवावगम्यते। तद्यथा—"समुद्रः, अन्तरिक्षम्, सविता, अहोरात्रे, मित्रावरुणौ, सोमः, यज्ञः, छन्दांसि, द्यावापृथिवी, दिव्यं नभः, वैश्वानरः–इति (तै० सं० १. ३. १.; ६. ४. १. ६–१६.)॥

एवञ्च सोमपासोमपदेवाना समुदितानां सङ्ख्या चतुष्षष्टिः पञ्चषष्टिर्वा गम्यते। इतोऽतिरिक्ता अपि सन्ति ये पारिभाषिका देवास्तेषां परिगणन मसम्भव मेव। तदेवं देवाना मसङ्ख्येयत्वेऽपि दाशतय्या प्रधानतया अग्निवाय्विन्द्रसूर्याणां स्तुत्यादिदर्शनात् त एव चत्वारो देवा मुख्या गण्यन्ते, तत्रापीन्द्रस्य प्रायो वायुविशेषत्वेनो-पगमात् दैवतात्रित्व मेव सम्पद्यते। तदाह यास्कः— "तिस्रो देवता इति नैरुक्ताः;— "अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्त रिक्षस्थानः सूर्यो द्युस्थानः–इति (७. २. १.)। तदेव मत्र पृथिव्या मग्निरेव मुख्यो देवः, जलादयस्तदेकस्थानास्त्वप्रधानाः, अश्वादयश्चेतना दृषदादयोऽचेतनाश्च पारिभाषिकाः। अन्तरिक्षे वायुर्वेन्द्रो वा मुख्यो देवः, पर्जन्यादयस्तदेकस्थानास्त्वप्रधानाः, श्येनादयोऽन्तरिक्षचराश्चेतना ग्रावादयोऽचेतनाश्च पारिभाषिकाः। द्युलोकेऽप्येवं सूर्यो मुख्यः, अश्विप्रभृतयस्तदेकस्थानास्त्वप्रधाना,

दुर, उषासानक्ता, दैव्याहोतारा, तिस्रो देव्य, त्वष्टा, वनस्पति, स्वाहाकृतय, — इत्येवैकादशविधा ( ब्रा० २ ६ २ )। प्रधानस्य यागस्य प्रमुखे या एकादश आहुतयो ह्रयन्ते, ता एव प्रयाजाहुतय प्रयाजयागा वा उच्यन्ते। तन्मन्त्राणा दैवाप्रीणनहेतुत्वात् वेदेषु आप्रीति व्यपदेश । ते त्वाप्रीमन्त्रा यद्यपि सर्वत्राम्नाता द्वादश, समिदादय प्रयाजदेवता अपि द्वादशैव श्रुता, तथापि तत्र द्वितीयतृतीययोर्वैकल्पिकत्वेन विधानादेकत्वसिद्धेरेकादशैव पर्य्यवसन्ना भवन्ति। तदेतत् सर्व सर्वब्राह्मणेषु विश्रुतम्, भगवता यास्केन च स्पष्टीकृतम् ( ८ २ ७ )। समिदादिव्याख्यानञ्च निरुक्तादौ सुव्यक्तम्, यथा— "इध्म (समिध) समिन्धनात्०— ० यज्ञेध्म इति कात्यक्य", "तनूनपात् आज्य भवति", "नराशंसो यज्ञ", "इड ०—० ईडितव्य ( यज्ञियाग्नि )", "बर्हि परिबर्हणात् ( कुश )", "द्वार ( दुर )०—० यज्ञद्वार", "उषासानक्ता = उषाश्च नक्ता च, उषा व्याख्याता ( रात्रेे अपर काल ), नक्तेति रात्रिनाम', 'दैव्याहोतारा = दैव्यौ होतारौ, अयञ्चाग्निरसौ च मध्यम", "तिस्रो देव्य ( 'इडा', 'भारती', 'सरस्वती' )", "त्वष्टा = माध्यमिक ( रूपकृत् )", "वनस्पति = यूप", "स्वाहाकृतय, स्वाहेत्येतत् सु+आहेति वा, स्वा वागाहेति वा, स्व प्राहेति वा, स्वाहुत हविर्जुहोतीति वा' —इति ( ८ २ १—८ २ ५ )। "दैव्याहोतारा = नेष्टापोतारौ' —इति तै० ब्रा० २ ६ १२ ६। 'दैव्यहोतृशब्दस्यार्थो यष्टानुयाजदेवत्य द्वौ देवौ' —इत्यादि तत्र भा० भा०। तयाच तत्तन्नामकौ द्वाहविजौ। तदेव मिथ्यादय स्वाहाकृत्यन्ता सर्वे एवैमे पदार्था यज्ञसम्बन्धित्वात् देवत्वेन स्तुता इत्येव ब्राह्मणकृता माशय फलित ॥

"त्वमग्ने यज्ञानां होता विश्वेषां हितः।
देवेभिर्मानुषे जने"–इति ऋ॰ सं॰ ६. १६. १ ।

हे 'अग्ने !' 'विश्वेषां यज्ञानां' 'होता' 'त्वम्' 'देवेभिः' देवैः सूर्यरश्मिभिः 'मानुषे जने' मर्त्यलोकेऽत्र 'हितः' सर्वपदार्थेष्वन्तर्निहित इति तदर्थः। तदेतस्मान्मन्त्रवर्णादेष एव सोऽग्निः प्रतीयते; न ह्यग्निलोकस्थस्य कस्यचित् मनुष्यादिवद्विग्रहादिमतः परोक्षस्याग्नेः रश्मिभि पृथिव्यां स्थापनं युज्यते। इयं पृथिव्येवाग्निलोक इति चेत्, इष्टमेवेदं वयोऽस्माकमपि; परं तस्य पार्थिवस्य पौराणिकरूपादिमत्त्वेऽप्रत्यक्षता कथं सम्भवेत्ताम ? न हि कश्चित् पार्थिवः पदार्थः पार्थिवैरिन्द्रियैर्भवेदनुपलभ्यः। तदस्मात् स्थाननिरूपणाच्च प्रतीयतेऽस्यैव पार्थिवस्य भौतिकस्याग्नेर्देवत्व मिष्टम्, न त्वपरः क्वापि कश्चिदप्यस्त्यग्नियतुर्मुखो हंसारूढो देव इति।

"अथास्य कर्म,– वहनञ्च हविषा मावाहनञ्च देवानां; यच्च किञ्चिद् दार्ष्टिविषयक मग्निकर्मैव तत्"–इति निरु॰ ७. ३. १। तदिद मग्नेर्हविर्वहन मग्निसात्कृतहविषा धूमवाष्पाकारैरन्तरिक्षादिचारित्वेन सम्पद्यते। तदेतच्छ्रूयते– "अग्नेर्वै धूमो जायते, धूमादभ्रम्, अभ्राद् वृष्टिः"–इत्यादि शत॰ ब्रा॰ ५. ३। तथाच ऐतरेयेऽपि २. ५. ८। स्मर्यते च– "अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" –इति (म॰ सं॰ ३. ७६.)। तदेवं यज्ञेषु पार्थिवेऽग्निवेवाग्नौ आहूयमानं बलकर माज्यचरुसोमामिरादि हव्यं सर्व मेव भस्मीभूय पूर्वं वाष्पाकारेणोपरि गच्छति, तदेव इष्ट पुनरिहागत्य ओषध्यात्मना परिणत्यास्मच्छरीरादीनां विशेषतो बल सम्पादयति। तदि धन्नम्, तत्तदाहारजन्यबलतोऽपि प्रबलम्; यथा होमिभो-

पारिभाषिकदेवास्तु तत्र नैव सन्तीति गम्यते ; ब्राह्मणग्रन्थेषु तत्त्वानां तथाविधाना मनुल्लेखादिति ॥

तदत्र पारिभाषिकदेवत्व मापन्नाना मश्वगङ्गान्यादीनाञ्चेतनानाम्, अपीष्वग्नादीना मचेतनानाञ्च देवशरीरवत्त्वं कलत्रापत्यादिमत्त्वं रागद्वेषादियुक्तत्वञ्च नास्तीति तु लाङ्गलस्कन्ध-पांशुलपादुकैर्हालिकैरप्यभिगन्तुं शक्यते, मुख्यदेवाना मग्न्यादीनां तु तत्सदस्ति नास्ति वेति संशयः स्यादवेदविदुषां बालानाम् ; पौराणिका एव ह्रीदृशसंशयस्योत्थापकाः। वस्तुतो यथा पारिभाषिकदेवानां प्रत्यक्षदृश्यानां सर्वत्र सर्वैर्व्यवहार्याणा मिष्वादीनां देवशरीराद्यभाववत्त्वेऽपि देवत्वं भवद्भिरेवाङ्गीकार्यम्, मुख्याना मग्न्यादीना मपि देवानां नूनं तथैव ; यास्कोक्ततत्तन्नामनिर्वचनस्याननिर्देशकर्मनिरूपणोत्पत्तिवर्णनेभ्यस्तथैव प्रतीतेः, ब्राह्मणविहिताग्निप्रणयनादीना मन्यथानुपपत्तेः, तत्तन्मन्त्रेष्वपि तादृशार्थप्रतिपादकवर्णनश्रुतेः, सोदाहरणदेवतत्त्वप्रत्यायकमन्त्रोक्तितोऽपि तथैवावगतेः, दृष्टेभ्य एवैभ्य उपपन्ने च देवकार्यफले अदृष्टविग्रहादिकल्पनानौचित्याच्चेति।

तदत्र प्रथम मग्न्यादिदेवानां नामनिर्वचनादिकं दर्शयामः—

"अग्निः कस्मात्? अग्रणीर्भवति, अग्रं यज्ञेषु प्रणीयते"—इत्याद्यग्निनिर्वचनानि ( निरु० ७. ४. १. )। एष भौतिकोऽग्निरेव यज्ञेषु प्रणीयमानो दृश्यते, न त्वन्यथा: कश्चिद्दंष्ट्राकरालशरीरवदनो रक्तवर्णः पुरुषः ; प्रत्यक्षगम्यं ह्येतत्।

"अग्निः पृथिवीस्थानः"—इति ( निरु० ७. २. १. ) तत्स्थाननिर्देशः। एष भौतिकोऽग्निरेवात्र पार्थिवेषु तृणाद्यश्मशरीरेषु सर्वत्रैव विद्यते ; विज्ञानगम्यं ह्येतत्। अस्ति चेह मन्त्रलिङ्गं यथा—

"प्र देवं देव्या धिया भरता जातवेदसम्।
हव्या नो वक्षदानुषक्"-इति ( ऋ० मं० १०. १७६. २. )।

हे ऋत्विज । 'देवं' द्योतमानं प्रज्वलित मिति यावत्, 'जातवेदसम्' अग्निं 'देव्या' द्योतमानया 'धिया' प्रज्ञया 'प्रभरत' प्रकर्षेण हरत, प्रणीयत ; प्रज्वलितस्याग्नेः सावधानतया प्रणयनं कुरुतेत्यर्थः। तस्मिन्नग्निप्रणयनकाले हस्ताङ्गुल्यादीनां दाहो यथा न स्यात्, नापि तस्याग्नेरधःपतनं निर्वाणादिकं वा भवेदित्येतदर्थ मेवेह 'देव्या धिया'-इति तत्प्रणयनकर्त्तुः सावधानतया उपदेशः। सोऽग्निरत्र किमर्थं माहरणीय इत्याह— स हि 'आनुषक्' वह्नङ्गाररूपत उपर्युपरि स्थितः सन् 'नः हव्या' अस्मद्दत्तानि हव्यानि 'वक्षत्' वहतु, यक्ष्यमाणानिन्द्रादिदेवान् प्रतीति। 'धीः'-इति प्रज्ञानामसु पठितम् (निघ० ३. ९. ७.)। 'भरत' इति "हृग्रहोर्भश्छन्दसि हस्य"-इति (पा० ८. २. ३२सू० १वा०) हस्य भत्वे रूपम्। "आनुषगिति नामानुपूर्वस्यानुषक्तं भवति"-इति निरु० ६. ३, ५। 'अनुषक्त सुपर्युपरिलग्न मित्यर्थः'-इति च निघण्टुभाष्ये देवराजः ( ४. ३. ५६. )। उपर्युपरिलग्नता अग्निनैव प्रत्यक्षदृश्ये प्रज्वलिताङ्गाररूपेऽस्मानुपपद्यते, नान्यत्रेति च व्यक्तमेव।

देवलक्षणश्रुतीनाञ्चान्यतमैषा—

"न हि देवा अन्योऽन्यस्य गृहे वसन्ति ; नर्त्तुर्ऋतौ"-इति ऐ० ब्रा० ५. २. ४। न हि ग्रीष्मः शीतकाले, नापि शीतो ग्रीष्मकाले वसतीति तदाशयः। तदत्र ऋतुदेवः कालविशेष एव प्रत्यक्षत उपलभ्यो नाप्रत्यक्षो विग्रहादिमान् कथमित्यत्रास्ति किं विचार्यम्।

कर्मफलदानार्थञ्च नास्ति देवानां विग्रहादिमत्त्वस्यापेक्षा ; कर्म्मास्वेव हि स्वयं फलदायकानि भवन्तीति याज्ञिकसिद्धा-

प्याथिकीपधानां दशतमिकेभ्यः शततमिकानाम् , तत्रापि विंश-
तिक्रमादिभ्योऽपि शतादिकमाणाम् । इत्येदानीं तादृशज्योतिष्टो-
मादियज्ञाभावात् , कालप्रभावेण देशदोषेण च साक्षात् तादृशा-
चारविरहादस्माकं पूर्वपूर्वपुरुषेभ्यः क्रमात् प्रज्ञतिदौर्बल्यं प्रत्यक्ष
मेव । अत एवोक्त मिहैवैतरेये— "यज्ञोऽपि तस्यै जनतायै कल्पते
यत्रैवं विद्वान् होता भवति"-इति ( १. २. ३. )। 'जनानां
समूहो जनता, तत्सुखायैव यज्ञो भवति, यस्मिन् यज्ञेऽमुना प्रका-
रेण विद्वान् संस्कृतद्रव्याणां होमं करोति"-इति तदर्थः । तदे-
तद्विवर्द्धनं कर्म; यत्रैव पार्थिवस्याग्नेः प्रत्यक्ष मिति ।

उक्तं तेनैव भगवता तदुत्पत्तिवर्णनं चैवम्— "विश्वानरावेते
उत्तरे ज्योतिषी ( विद्युत्सूर्यरूपे ), वैश्वानरोऽयं यत् ताभ्यां
जायते । कथं त्वय मेताभ्यां जायत इति । यत्र वैद्युतः शरण
मभिहन्ति, यावदनुपात्तो भवति, मध्यमधर्म्मैव तावद् भवत्यु-
दकेन्धनः शरीरोपशमनः ; उपादीयमान एवायं सम्पद्यत उदको-
पशमनः शरीरदीप्तिः । अथादित्यादुदीचि प्रथमसमावृत्ते आदित्ये
कंसं वा मणिं वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमय मसंस्पर्शयन्
धारयति, तत् प्रदीप्यते, सोऽय मेव सम्पद्यते"-इति ( निरु० ७.
६. ६, ७. )। एवंविधाग्निजन्मवर्णन मग्निमेव भौतिकं ज्वलना-
त्मकोऽमनायुपपद्यते, नान्यत्रेत्यपि स्पष्टम् ।

अथाग्निंय ब्राह्मणेऽग्निप्रणयनीयाना मृचां विधान मेव माम्नातम्—
"अग्नये प्रणीयमानायानुब्रूहीत्याहाध्वर्युः"-इत्यादि ( २. ५.४. )।
यत्र एष एव प्रत्यक्षः पार्थिवोऽग्निः प्रणीयते, न कश्चनापरो विद्युदा-
दिमानप्रत्यक्ष इत्यपि प्रत्यक्षगम्यम् । किञ्चैषा मग्निप्रणयनीयमन्त्राणा
मर्थग्रहणेनैव मेव प्रतीयते। तद्यथा तत्रैव विहित स्तावप्रथमो मन्त्रः—

स्तरूपत्वचेतीन्द्रशब्दस्य वायुपर्यायत्व मपि प्रतीयते। वायूनां वृष्टिकारित्वेनाम्बजलहेतुत्वन्तु बहुत्रैव श्रूयते, तदत्र "इषे त्वोर्जे त्वा" -इतिमन्त्रस्य शतपथाम्नातं वायवइतिपदव्याख्यान मिह पूर्वं प्रदर्शित मेव (६ पृ०)। तैत्तिरीयाम्नाये च तद् व्यक्ततरं द्रष्टव्यम् — "वायुर्वै वृष्ट्यै प्रदापयिता"-इति (ब्रा० १.७.१.१.)। "वायुर्वेन्द्रो वा"-इति निरुक्ते (७.२.१.) इन्द्रशब्दस्य वायुपर्यायत्वे प्रतीतेऽपि तयोर्मिथो विभिन्नदेवत्वञ्च न विरुध्यते; याज्ञिकमते वाच्याभेदेऽप्यभिधानपार्थक्याद्देवतान्यत्वस्वीकारात्। ते हि यावन्त्यभिधानानि वैदिकमन्त्रेष्वार्थपत्वेनाभीष्टानि, तानि सर्वाण्येव देवतपार्थक्यनिदानानीति स्वीकुर्व्वन्ति। अतएवाग्निपर्यायाणा मग्निजातवेदोवैश्वानरादीनां पृथग्देवत्वम्, वायुपर्यायाणां वायुवातमरुदादीनाञ्च विभिन्नदेवत्वम्, सूर्य्यपर्यायाणा सूर्य्यसवितृभगविष्णुप्रभृतीनाञ्च पार्थक्यं भवत्युपगन्तव्यम्। कर्मपृथक्त्वाच्च देवपार्थक्य मुररीकुर्वन्त्येव ते। तदप्याह तत्रैव यास्कः— "अपि वा कर्मपृथक्त्वात्; यथा— होताध्वर्य्युर्ब्रह्मोद्गातेत्यप्येकस्य सतोऽपि" -इत्यादि (७.२.१.)। तत्त्वतो यथा प्राणापानयोर्भेदस्तथैवेन्द्रवाय्वोरपि। अत एवैवं श्रूयते— "यदैन्द्रवायव शंसति, प्राणापानावेवास्य तत् संस्करोति"-इति (ऐ० ब्रा० २.१.२.)।

अथास्य वायुविशेषस्येन्द्रस्य कर्माण्येवं निरूपितानि— "अथास्य कर्म— रसानुप्रदानं, वृत्रवध, या च का च बलकृतिरिन्द्रकर्मैव तत्"-इति (निरु० ७.३.३.)। वृत्रवधोपाख्यानञ्चैतदुपमामूलकं कविकल्पित मिति च प्रोक्तं स्वयं तेन यास्केन— "तत् को वृत्रः? मेघ इति।०—०। अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति"

त्वात्। अचेतने संस्कृते दैवतविग्रहाद्यभाववति द्वेषप्रीतिकाम-क्रोधादिशून्येऽपि हुताशिनग्नौ हस्तदानस्य फलं तद्दहनं कथं वार्य्यते, केन वा न स्वीक्रियते? केन वा दृष्टं पूजिता माता गौर्वा, अर्चितोऽतिथि राचार्य्यः पिता वा स्वयं सर्व्वकामीष्टं साधयतीति। तत्र सर्व्ववैखरी मूल मिति मतेऽपि तुल्य मुत्तरम्। तस्मात् प्रत्यक्षगम्या इमे भौतिका एवाग्न्यादयो वैदिककार्य्येषु सर्व्वत्र देवतात्वेन गृह्यन्त इति सत्यम्; प्रत्यक्षत एवोपपन्ने कार्य्यफले अप्रत्यक्ष हेतुकल्पनानौचित्यात्।

इत्थं हि नामनिर्वचनतः, स्थाननिर्द्देशतः, कर्म्मनिरूपणतः, उत्पत्तिवर्णनतः, ब्राह्मणविनियोगतः, तद्विहितमन्त्रार्थतः, देवतत्वोदाहरणश्रुतितः, प्रत्यक्षदृष्टभौतिकादेवाग्नाद्गमेरायंसित-फलोपपत्तेश्च निर्णीत मेतत्,— अय मेव पार्थिवो भौतिकोऽग्निः सर्व्वत्र यज्ञेषु देव इति गृह्यते; नान्यः कश्चन कुत्रचिज्जागर्त्ति कूर्म्मक्षीरचये स्नातः शशशृङ्गधनुर्द्धरः खपुष्पकृतशेखरो वन्ध्यासुतः पौराणिकमानसोद्यानविहारी व्यक्तिविशेष इति॥

एव मिन्द्रोऽपि भौतिकः पदार्थविशेष एव, नान्यः कश्चन विग्रहादिमान् चेतनः। तथाहि — "इन्द्रः इरा दृणातीति वा, इरा ददातीति वा"-इत्यादीनि तन्निर्व्वचनानि (निरु० १०, १, ८)। 'इरेत्यन्नपर्य्यायः; निघण्टावन्ननामसु तत्पाठात् (२, ७, ११)। 'वर्षकालेदित मङ्कुरं बीजं भिनत्ति, त मिन्द्रकारितम्; सोऽय मिरादारः सन् इन्द्रः'-इति, 'यो वर्षद्वारेणाम्नी इरा मन्नं ददाति, सोऽय मिराद इरादाता इन्द्रः'-इति च तत्र व्याख्यातं देवराजेन। तथाच वर्षहेतुः कश्चित् पदार्थ इन्द्र इति ज्ञायते। "वायुर्व्वेन्द्रो वान्तरिक्षस्थान"-इति निरुक्तोक्तमप्यान्तरिक्ष मेव स्थानं वायु

एवं प्रतिदिन मुदीयमानो द्युस्थः सूर्योऽप्यचेतनो ज्योतिःपुञ्ज-रूप एव। तथाहि— "आदित्यः कस्मात् ? आदत्ते रसान्, आदत्ते भासं ज्योतिषाम्, आदीप्तो भासेति वा"–इत्यादित्यनाम-निर्वचनम्। सूर्यादित्यौ पर्यायशब्दौ। 'सूर्यो द्युस्थः'–इति तत्स्थाननिरूपणम् ( निरु० ७. २, १, )। "अथास्य (आदित्यस्य) कर्म,— रसादानम्, रश्मिभिश्च रसधारणम्, यच्च किञ्चित् प्रवह्नित मादित्यकर्मैव तत्"–इति तत्कर्मनिर्णय. (निरु० ७, ३, ४,)।

"उदुत्यं जातवेदसं देवं वहन्ति केतवः।

दृशे विश्वाय सूर्यम्"–इति ऋ० सं० १. ५०. १।

एष निगमस्तत्रोदाहृतोऽमुष्य सूर्यस्य ( निरु० १२, २, ४, )।

अस्यार्थस्त्वेवं यास्कसम्मतः— 'केतवः' रश्मयः 'विश्वाय' विश्वस्य 'दृशे' दृक्शक्तिप्रसरणाय 'जातवेदसं' जातवेदःप्रधानं भूलोक मिमम्, 'त्यं सूर्य देवं' प्रति 'उत्' 'वहन्ति' ऊर्द्ध्वं प्रापयन्तीति। "रश्मयः = केतवः"–इति निरु० १२, २. ४। विश्वायेति षष्ठ्यर्थे चतुर्थी ( पा० २, ३. ६२ सू० १ वा० )। "जातवेदा कस्मात्"–इत्यादि–( निरु० ७, ५, १—३, )–दर्शनात् अग्नेरेव नामान्तरं जातवेदा इति स्पष्टम्। अग्नेरधीनत्वञ्चास्य भूलोकस्य "अग्निः पृथिवीस्थानः"–इत्यादिना ( ७, २, १. ) विदित मेव। प्रापणार्थस्य वहधातोर्द्विकर्मकत्वन्तु लोकप्रसिद्धम्। अतो वैतद्व्याख्यान मुपसंहर्त्तु मुक्तं निरुक्ते— "क मन्य मादित्या-देव मवक्ष्यत्"–इति ( १२. २. ४. )। तदेव मादित्यं प्रति वहनं विज्ञातं भवति। तच्च वहनं कस्येत्याकाङ्क्षाया मिह मन्त्रे श्रुतस्य जातवेदस इत्येव सुवचम्; जातवेद शब्देन चेह जातवेद प्रधानो भूलोकः; तथैव मन्त्रतात्पर्योपपत्तेः। एवं मन्त्रतापि श्रुतं

–इति निरु० २. ५. २। तदिदं पश्यन्तु तावत्कृत्स्नार्थतत्त्वविदः सर्व मेव पौराणिकं वृत्रवधोपाख्यानं वातेन कदलीवन मिव हतं न वेति।

अस्येन्द्रस्य सम्यक् प्रत्यायनाय प्रथमं तावदेष निगमोऽप्युदर्शि तेनैव भगवता यास्केन ( १०. १. ८. )—

"अदर्दरुत्समसृजो विखानि त्व मर्णवान् बद्बधानाँ अरम्णाः।
महान्त मिन्द्र पर्वत वि यद् वः सृजो वि धारा अव दानवं हन्॥"

—इति ऋ० सं० ५, ३२. १।

तदेतस्या ऋचस्तविवृतानुसारत एव व्याख्यानमेवं मन्तव्यम्— हे 'इन्द्र' 'त्वम्' 'महान्तम्' अतिप्रवृद्धम्, 'उत्सम्' उत्स्यन्दनम्, 'पर्वतम्' पर्वविशिष्ट मत एव पर्वताकारम्, मेघम्, प्रथमं 'वि:' व्यहृणो, विहृणोऽसि, विहतं करोषि; ततः 'अदर्दः' अदृणाः, दारयसि। अस्य मेघस्य 'खानि' रन्ध्राणि 'असृजः' विसृष्टानि करोषि। 'बद्बधानान्' पुनःपुनरतिशयेन वा बध्यमानान्, 'अर्णवान्' अर्णस्वतः, माध्यमिकान् मरुत्प्रायान् खण्डशः कृत्वा 'अरम्णाः' 'विसृजसि'। 'यत्' यत, एवम्प्रकारेण 'दानवं' दातार मुदकानाम् मेघम् 'अवाहन्' अवहंसि, तत एव 'धाराः' वृष्ट्यात्मिकाः 'व्यसृजः' विसृजसि, पृथिव्यां पातयसीति।

एवञ्च वृष्टिहेतुर्मेघदारको वायुविशेष एव इन्द्रो देवः; स च प्रत्यक्षः सर्वेषाम्; फलावाप्तिस्तु कर्माधीना, न देवताधीनेति याज्ञिकाना मपि सदैव सर्वत्र जागर्त्त्येवेत्यलमेतावताधिकमनुगमाद्दस्य वज्रहस्तपुरन्दरस्य कल्पयितुमशक्यत्वात्प्रत्यक्षस्य कल्पनयेति। अत एव ऐतिहासिकाख्यसमादृतेन्द्रसमागमाद् यदकुण्ठभद्रायतितिरिति मीमांसकाना मपुराणवादोऽपि सङ्गच्छते।

विश्वसन्त्येव, परं न तथा देवस्वरूपप्रत्यक्षदर्शिनो विद्वांसो वैदिकाः।
तदाम्नातम्— "एतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुस्तस्मादाच-
क्षाण माहुरद्रागिति, स यदद्दर्श मित्याहाथास्य श्रद्दधाति ; यदु वै
स्वयं पश्यति न बहूनाञ्च नान्येषां श्रद्दधाति"–इति ( ८२पृ० )।

तदत्र तत्कल्पनाप्रकार मपि किञ्चिन्निदर्शयामः— उपरिष्टा-
द्व्याख्यास्यमानेषु स्वर्लोकेषु अन्तरिक्षलोकोऽप्येकतमः। तत्र स्वर्गे
वायुपरपर्य्यायस्य वर्णितपूर्वस्य इन्द्रस्य प्राधान्यात् स एव स्वाराडिति
व्यपदिष्टः। मेघो हवः, अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म
जायते तत्रोपमार्थेन युद्धवर्णा भवन्तीत्युक्तम् ( निरु० २, ५. २, )।
वर्षकालेऽशनिपतनं यत् तदेवेन्द्रस्य वज्रपातः। इरेत्युदकनामेत्य-
प्युक्तम् (१६६ पृ०), तद्विशिष्टत्वान्मेघस्यैवैरावत इति नाम, तच्छब्द-
स्योच्चैः श्रूयमाणत्वाच्चोच्चैःश्रवा इति च। स एक एव मेघो नामभेदाद्
द्वित्वेन इन्द्रवाहाविति वर्णितः। तत्सभायां गन्धर्वः ( गायकः )
ऐड़ः (इड़ाभवः), पुरूरवाः (बहुरावः) नाम सदैव विद्यते। सोऽपि
पृथिव्याः धारकः, इडापरपर्य्यायादन्नभवः, स्फूर्जथुनामबहुगर्जन-
कारी मेघ एव। "पुरूरवा बहुधा रोरूयते"–इति हि निरु०
१०. ४. ८। 'रोरूयति = स्तनयति'–इति तद्वृत्तौ दुर्गाचार्य्यः।
इड़ा = अन्नम् ( निघ० २. ७. १३. )। गा पृथिवीं धारयतीति
गन्धर्वः ; अत एव श्रूयते—

"अभि गन्धर्व मतृणद् अबुध्नेषु रजस्स्वा।
इन्द्रो ब्रह्मभ्य इद् वृधे"–इति ऋ० सं० ८. ६६. ५।

'इन्द्र.' मेघचालको वायुः 'ब्रह्मभ्य.' ब्रह्मणा मन्त्राणां 'वृधे' वर्द्ध-
नाय 'इद्' एव, 'अबुध्नेषु रजस्सु' 'गन्धर्व' मेघम् 'अभ्यतृणत्' छिन-
त्तीति। स्वर्गीणामप्सरास्तत्सभायां नृत्यतीत्यादिष्व पौराणिकी-

बहुल । तद्यथा— "आदित्य माञ्च यन्त मुन्नयामि"–इति सामा रण्यकम् । सर्वे ग्रहा पूर्वाभिमुखगामिनस्तत एव सूर्य्यं पश्चिमाभि मुखगो लक्ष्यते इति हि सर्वसम्मत विज्ञानम् । तथाच 'प्राञ्च यन्तम' एत भूलोकम् , तस्य स्वात्मान मिति यावत 'आदित्यम्' 'उत् अहं नयामि' प्रापयामीति तदर्थ । तथास्य लोकस्य सूर्य्य मभि रश्म्याकर्षणेन ऊर्द्ध्वतो भ्रामण मिदापि ब्राह्मणे प्रदर्शितम् ( १०८ पृ० )। "दाधर्थ पृथिवी मभितो मयूखै ( ऋ० स० ७ ९९ ४ )"–इत्यादिश्रुतयोऽप्यत्रालोच्या । एवञ्च यथा पृथिव्या प्रधानदेवता अग्नि प्रत्यक्ष , यथा चान्तरिक्षे वायुरिन्द्रो वा, तथैव द्युस्थोऽसौ सूर्योऽपीति ध्रुवम् ॥

एव मपि पुराणादावग्न्यादीना सर्वेषा मेव देवाना स्वर्ग स्थत्वम्, तत्रापि पृथक् पृथक् लोकसस्थत्व यद् वर्णितम् , तदवास्त विकम् , अपि तेषा चतुर्वदनविपक्षादिमत्त्वम् , पुत्रकलत्रगोत्रादि मत्त्वम् , यानाशनरागद्वेषसन्तोषादिमत्त्वञ्चैतत् सर्व रूपकादिक कल्पनाप्रसूत कविकर्मैव । एव हि यथा विष्णुशिवर्त्तनमित्र लाभसुहृद्भेदादिकथासु काककपोतोलूककीरगर्दभादीना मानुषभाषा श्रितवार्त्तादिवर्णन बालाना नीतिधर्मादिचरित्रगठनार्थेव , तथा पौराणिकदैवताकारादिकल्पनापि नून वेदविज्ञानग्रहणासमर्थमती ना स्त्रीशूद्रद्विजबन्धुरूपाणा चान्धिया धर्मोपदेशादिसाहाय्यार्थैव । किञ्च यथा बाला ता वार्त्तानूकादिकथा पठन्तस्तदानी मगान तद्वाक्यं मेव वास्तविक मन्यन्ते, ततो वयोऽधिकभावादापन्नाना मन्ते मदैव त्रिवृत् पाठयन्तोऽपि तदतात्त्विक त्वत्त एवानुभवन्ति, न तदा धार्म्मिगणैरपि तत्र तेषा पुत्रविभ्रामरक्षण भवेत् सुगमम् , तथैव विद्यापरपर्यायवेदाध्ययनहीना वामा चन्दिमन्दिमन्दपादौ

सूर्य्यस्याप्यन्यतमं नाम इन्द्र इति। तत्र एतन्निरुक्तम् "इन्दवे द्रवतीति वा, इन्दौ रमते इति वा, इन्धे भूतानीति वा"-इति (१०. १, ८.)। 'इन्दवे' इन्दुं सोमं पातुं द्रवति, 'इन्दौ' सोमे रमते इति, 'भूतानि' स्थावरजङ्गमानि 'इन्धे' दीपयति चेति 'इन्द्रः' सूर्य इति तदर्थः। यधियज्ञपक्षे इन्दुशब्दस्य सोमवल्लीरसोऽर्थो गृह्यते। अधिदैवतपक्षे तु इन्दुश्चन्द्रमा ग्राह्यः। अत एव श्रुतम्— "इन्द्रः सोमस्य काणुका"-इति (११० पृ०), "अत्रा ह गोरमन्वत नाम त्वष्टुरपीच्यम्, इत्था चन्द्रमसो गृहे"-इति च (ऋ० सं० १, ८४, १५.), "सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः"-इति च वा० सं० १८. ४०। निरुक्तकारेण चैतत् स्पष्टीकृतम्—"अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्य मादित्यतो ऽस्य दीप्तिर्भवतीति"-इति (२. २. २.)। अतएवेन्द्रः सहस्ररश्मिरिति सहस्राक्षोऽप्युच्यते। स चायं द्युस्थ इन्द्र उत्तम. कथ्यते, अन्तरिक्षस्थ इन्द्रस्तु मध्यमः।

तदेतयोरुत्तममध्यमयोरिन्द्रयोरेकनामानुरोधादभेद उपचरितोऽपि दृश्यतेऽनेकत्र। तत्र एवामरसिंहेनाप्युभयेन्द्रनामान्येकपर्यायत्वेनोपन्यस्तानि— "इन्द्रो मरुत्वान् मघवा विडौजाः पाकशासनः। ०—०। आखण्डलः सहस्राक्ष ऋभुक्षाः"-इति (१. १. ४४—४७.)। एषु श्लोकेषु पञ्चत्रिंशदिन्द्रनामानि ज्ञापितानि। तत्र दिवस्पतिः, वास्तोष्पति, सुरपतिः, हरिहय, स्वराट्, आखण्डलः, सहस्राक्ष, इत्यादीन्युत्तमेन्द्रनामानि, मरुत्वदादीन्यपराणि तु मध्यमेन्द्रस्येति बोध्यम्।

यच्च प्रसिद्ध मिन्द्रपत्न्या नाम शचीति (अम० को० १, १. ४८.), यतश्चेन्द्र उच्यते शचीपतिरिति; तदपि कल्पितम्। अस्ति निघण्टौ

कथा। तद्व्याख्यातं निरुक्ते— "उर्वश्यप्सराः"-इत्यादि (५. ३. २.)। 'अप्सराः = अप्सारिणी'-इत्यादि च तत्रैव। तथा चोदकजाता विद्युदेवोर्वश्यप्सराः। तथा विद्युतः सञ्चितजलजत्वं च वैदिक-विज्ञानसम्मत मिति पूर्वं प्रतिपादितम् "आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम्। परो यदिध्यते दिवि"-इति (११३ पृ०)। अपां वृष्टिजलानां सारयित्रीति च भवत्यप्सारिणी। 'अप्स इति रूपनाम॰—॰ रूपवती'-इति च तत्रैव। तस्या अप्सरस, जायते आयुर्नामा तनयः। स हि विद्युन्मेघसंयोगज आयुर्हेतुवृष्ट्युदक-रूपः प्रसिद्धः, श्रुतश्च— "विद्युत्॰—॰ उर्वशी तिरते दीर्घ मायुः"-इति ऋ॰ सं॰ १०. ९५. १०.। तनयोत्पत्त्यनन्तर मेव तयोरुर्वशीपुरूरवसोर्दम्पत्योर्मिथो विच्छेदश्च सर्वदृष्टत एव। तदे-तत् सर्व मेतस्मादेकस्मादेव श्रुतिवचनात् सुव्यक्तम्— "पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरस."-इति (तै॰ सं॰ ३. ७. ८.)। शतपथब्राह्मणे तु अधरारण्युत्तरारण्योरुर्वशीपुरूरवस्त्वं परि-कल्प्य व्याख्यान मिदं कल्पितम्। "अथाधरारणिं मिदधाति" -इत्यादि (३. ४. १. २२.), "उर्वशी ह्याप्सराः पुरूरवस मैडं चकमे"-इति च (११. ५. १. १.)। एवमेवंविधं कविकल्पन मेव पौराणिकाना मुपन्यासग्रथनप्रियेषु स्त्रीशूद्रद्विजबन्धुषु धर्म-नीत्यादिप्रचाराया भवदवलम्बन मिति स्पष्टम्। तत एव महा-भारतेतिहासस्य च काव्यत्व मुररीकृतं स्वयं तत्कर्त्रा तत्रैव तदुपक्रमे (१अ॰ ७२श्लो॰)— "त्वया च काव्य मित्युक्तं तस्मात् काव्यं भविष्यति'-इति। 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' -इति (२६७ श्लो॰) चोक्तं तत्रैव। तदिद मेव कृतं सर्वत्र वेदोपबृंहण मिति॥

अथाप्येवं शचीपतिबहुत्वेऽपीन्द्राण्या अबहुत्वं वेदेषु । तद्यथा—

"इहेन्द्राणी मुपह्वये वरुणानीं स्वस्तये ।

अग्नायीं सोमपीतये"–इति ऋ० मं० १, २२, १२ ।

अत्रेन्द्राणीत्युत्तमाया', वरुणानीति मध्यमायाः, अग्नायीति प्रथमाया एव देवगत्यैर्ग्रहण मिष्टम् ।

अत एवान्यत्रैव माम्नातम् ऋ० मं० १०, ८६, ११—

"इन्द्राणी मासु नारिषु सुभगा मह मश्रवम् ।

न ह्यस्या अपरञ्चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः"–इति ।

तदत्र सूर्यस्य चिर मेकरूपत्वेन विद्यमानत्वात् तच्छक्तेरिन्द्राण्याश्चिर मेव सुभगात्वम् । इद मेवेन्द्राण्या अवैधव्यप्रवादमूलम् । माध्यमिकेन्द्रस्य मेघचालकवायोर्हि वर्षे वर्षे प्रति रूपभेदात् तच्छक्तेः सुभगात्वायोगात्तस्येन्द्राणीति समाख्या ; विश्वस्मादिन्द्र उत्तरश्च सूर्य एव, न माध्यमिक इति च ध्येयम् ।

एव मपि यदमरसिंहेन शचीपर्यायत्वेन श्लोकित मिन्द्राणीति, तदिन्द्रशब्दार्थैक्यभ्रमादेव । एवं "विष्णुर्नारायणः कृष्णः"–इत्यादिषु (१, १, १८—२३,) विष्णुपर्यायेष्वपि विष्णुरिति सूर्यनाम, नारायण इति वायुनाम, कृष्ण इति मनुष्यनामैवेवमादयः पौराणिककालजभ्रमा बोध्या इति दिक् ॥

नन्वेव मिन्द्रादिदेवतमन्त्रेषु बहुत्रैव यत् तेषां पुरुषाकारविग्रहवत्त्वम्, हिताहितविवेकलक्षणचेतनावत्त्वम्, चेतनावत्पुरुषभ्यग्रहार्यद्रव्यान्वितत्वम्, तादृशकर्मकर्त्तृत्वञ्च गम्यते; तत् कथ मुपपद्यते ? इति चेदत्र निरुक्तकारो यास्क एवाह दशोत्तरः (७, २, ३,) । तथाहि— "अपुरुषविधाः स्युरित्यपर मपि तु यद् दृश्यते ऽपुरुषविधम् । तद्यथा— अग्निर्वायुरादित्यः पृथिवी चन्द्रमा इति"–

वाङ्नामसु पठितं शचीति ( १. ११. ४८. ); "आकाशस्योत्तरः (शब्दः)"–इत्यादितो (गौ० सू० ३. १. ६४.) वायोऽप्यन्तरिक्षस्थत्वेन इन्द्रसहचारित्व मपि भवत्येव स्वीकार्यम्; यदा चेन्द्रकृतात् मेघ-चालनान्मेघविदारणाच्च वृष्टिर्जायते, तदा तद्वाक्यपि तत्कृतैव भूयत इत्येव सा माध्यमिकी वाक् मध्यमस्येन्द्रस्य सहधर्म्मिणीत्युपचर्य्यते। तथाच ऋ० सं०— "न कि रस्य शचीनां नियन्ता सूनृतानाम्"–इति ८. ३२. १५। 'अस्य' वागधिपतेर्मध्यमेन्द्रस्य 'सूनृताना' प्रिय-सत्यात्मिकानां 'शचीना' वाचा नियन्ता नियोगकारी 'न किः' न कोऽप्यन्यः, अपि ता इन्द्रवाचः स्वत एव प्रवृत्ता आधिपत्यं कुर्व्व-न्तीति तदर्थः। एवञ्च वायोर्घातप्रतिघातैर्नैवाकाशाच्छब्दोत्पत्ति-स्वीकारात्, वायोरन्तरिक्षस्थत्वेन मेघदारकत्वेन च माध्यमिकेन्द्रत्व मिति स्वीकाराच्च स वायुरूप इन्द्र' शचीपतिरुच्यते।

अपर मप्यस्ति तत्र निघण्टौ कर्म्मनामसु पठितं शचीति पदम् ( २. १. २२. )। सर्व्वेषां च कर्म्मणा मधिपतिः सूर्य्य एव; "सविता वै प्रसवानामीशे"–इति (ऐ० १. १. ५.) श्रुतेः। तच्चापा भावादेव जीवशरीरं मृतं भवतीति च दृष्ट' लोकवेदयोः ( ११० पृ० )। अतः सोऽप्याख्यायते- शचीपतिरिति। तथा च तन्निगमः— "द्युमा॒ँ असि क्रतुमा॒ँ इन्द्र धीरः शिक्षा शचीव-स्तव नः शचीभि."–इति ऋ० सं० १. ६२, १२।

अथ्यच्चास्ति निघण्टौ प्रज्ञानामस्वपि पठितं शचीति पदम् ( ३. ८. ८. )। ततः प्रज्ञावन्तो यजमानादयोऽपि शचीपतय एव। अत एवार्भवनामके मानुषरूपदेवस्तावके नाराशंसे सूक्ते द्वितीयस्या मृचि श्रुत मेवम्—

"याभि. शचीभिश्चमसा॒ँ, अपिंशत"–इति ऋ० सं० ३, ६१, ३।

प्रत्यक्षाणां ज्वलनादिकर्मणां मङ्गारादिरूपाणां भौतिकानां मेवेति च स्वीक्रियते मीमांसकैः । "जातिः (१. ४. २४.)"–इत्यादिसूत्रेषु तद् स्पष्टम् । अत एव तैर्देवानां मेषां मसम्भवादेव यज्ञादिकर्मानधिकारित्वं वर्णित मिति दिक् ॥

अथ वेऽग्न्यादय इमे प्रत्यक्षाः, न त एते देवाः ; अपि तेषा मभिमानिनः सन्ति तत्तद्द्रव्यादिनामतः स्वर्गस्थाः केचन ; अत एवैव मसूत्रयद् व्यासः स्वदर्शनशास्त्रे— "अभिमानिव्यपदेशस्तु"– इत्यादि । तदेतद् व्यासवचनं मार्षं मपि कथं नस्मान्मान्त्य मित्यत्र ब्रूमः । अस्त्वेतद् व्यासवचनं सत्यम् , पर मेतस्य यद्विधोऽर्थः कृतः स्वस्वसम्प्रदायमतपुष्ट्यर्थं पौराणिककालज्ञैः शङ्करादिभिः, स त्वसत्य एवेत्यस्माकम् । न हि कस्याप्यद्यतनस्य स्वमतस्थापनव्याकुलीभूतचित्तस्य लेखनीसम्भूतं सर्व माख्यातं सत्यं भवितु मर्हति, नापि हि तादृशानां तेषां सर्वेषा मेव प्रकृतवादित्वे मिथो मतपार्थक्य मुपपद्येतेति विज्ञात मेवैतद् । वस्तुतस्त्वत्र यदुक्तं व्यासेन 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्'–इति (२. १. ५.), तदर्थस्त्वेवम्— श्रूयन्ते हि 'मृदब्रवीत्', 'आपोऽब्रुवन्', 'फेनोऽब्रुवत्'– इत्येवमादय (श० ६. १. ३.)। आसु श्रुतिषु श्रुताना मृदादीनां कथं चेतनाविशिष्टत्व मुररीकार्य मित्याह— 'अभिमानी'त्यादि । यद्यपि विशिष्टचेतनावत्स्वेव 'अहं ब्रवीमी'त्येवंरूपो ऽभिमानः सम्भवति, नान्यत्र मृदादौ ; तथाप्येवमादौ तस्याभिमानिन. 'व्यपदेश' । व्यपदेशो व्यवहार, व्यवहारमात्र मौपचारिक मिति यावत् । कुतः ? 'विशेषानुगतिभ्याम्' । चेतनाचेतनयोर्विशेषस्तु सर्वैर्ज्ञायते लौकिकशब्दार्थशक्तिग्रहादिशिक्षादितः, तस्मात् मृदादिषु यदभिमानित्वं तद्व्यावहारिक मौपचारिक मिति सम्प्रदात एव ।

इति । तथा चैषां मन्त्रादीनां पुरुषाकारविग्रहवत्त्वं प्रत्यक्षविरोधान्नैत्येव सिद्धान्तितम् । तदेवं मन्त्रेषु यदेषां पुरुषविधत्व मुपलभ्यते, तत् काल्पनिक मेवेति । अथ चेतनावत्त्ववर्णनं च तेषां तथैवेत्याह— "अचेतनान्यप्येवं स्तूयन्ते यथाक्षप्रभृतीन्योषधिपर्यन्तानि"–इति । अथायुधादिद्रव्यान्वितत्ववर्णन मपि तेषां तथैवेत्याह— "एतदपि तादृश मेव ; सुख रथं युयुजे सिन्धुरश्विनम्'– इति नदीस्तुतिः (यथा)'–इति । तथा कर्मकर्त्तृत्व मपि तेषां तथैवेत्याह –"एतदपि तादृश मेव, 'होतुश्चित् पूर्वे हविरद्य माशत' इति ग्रावस्तुतिः ( यथा )"–इति ।

वेदार्थमीमांसैकनिमित्ते मीमांसादर्शनेऽप्येव मेव तद्यथा— "अग्निस्तु ०—० द्रव्यं वा स्यात् चोदनायास्तदर्थत्वात्"–इति जै० २. ३. २१, २२सू० ) । 'द्रव्य वा अग्निशब्देनोच्यते । कस्माद् द्रव्यम् ? यदेतत् ज्वलनः, अत्र श्लोपः प्रसिद्धः'–इत्यादि तद्भाष्यम् । ततस्तत्रैव देवताधिकरणे त्रिभिः सूत्रैर्देवानां पौरुषविग्रहवत्त्वं क्रियाफलदातृत्वञ्चास्वीकृत्य कर्मजन्यसंस्काररूपस्यापूर्वस्यैवैकस्य सर्वत फलदातृत्वं प्रतिपादितम् । तथाहि— "देवता वा प्रयोजयेद्, अतिथिवद्भोजनस्य तदर्थत्वात्"–इति पूर्वपक्षसूत्रम् । "अर्थपत्यात्"–इति तद्युक्तिसूत्रम् । "अपि वा शब्दपूर्वत्वात् यज्ञकर्म्म प्रधान स्याद्, गुणत्वेन देवताश्रुतिः"–इति ततः सिद्धान्तसूत्रम् ( ८. १. ७, ८, ८. ) । पुनस्तत्रैव तत उत्तरम्, इन्द्रस्य हरिनामकाश्ववत्त्वादियुक्षणस्यौपचारिकत्व त्रिभिः सूत्रै सिद्धान्तितम्— "असंयोगात् तदर्थेषु तद्विशिष्टं प्रतीयेत, कर्माभावादेव मिति चेत्, न, परार्थत्वात्'–इति ( ८. १, ४२, ४३, ४४. ) । यत्र सुताश्वन्यादीनां ब्राह्मणत्वादिजातिविभागः, स चैषा मेव

श्रुतावैतरेये चत्वारो देवगुणा । तथाहि—

( १ ) "सत्यसंहिता वै देवा ( १. १. ६ )"-इत्युक्त प्रथम, "परोक्षप्रिया इव हि देवा ( ३. ३ ८. )"-इत्युक्तो द्वितीय, "न वै देवा अन्योन्यस्य गृहे वसन्ति ( ५. २ ४ )"-इत्युक्तस्तृतीय, "मर्त्यान् सतोऽमर्त्यान् कृत्वा"-इति श्रुतौ ( ६ ३ ४ ) देवाना ममरभावश्च ध्वनित , स एवचतुर्थ ।

तत्र देवाना सत्यसंहितात्वमित्थम् ,— सूर्य प्रतिदिन मुदेत्यस्त याति च यथाकालम् , हरति च रसाननुक्षण मित्यादि। वायु सदैवान्तरिक्षे स्थितो वाति, मेघान् सञ्चालयन् दारयति च यथाकाल मित्यादि। अग्निरप्यसति प्रतिबन्धके न कदापि पचन दहनादिक स्वकार्यजात मुत्सृजति। अदेव सर्व एव देवा सदैव स्वस्वकर्मसु व्याप्रियमाणा उपलभ्यन्त इति तेषा सत्यसंहितात्वम्। मनुष्यास्तु स्वभावत एव अनृतचिन्तका अनृतवादिनो ऽनृतकारिण श्चेत्यनृतसंहिता । तदिह्याम्नातम्— "अनृतसंहिता मनुष्या"- इति (१. १. ६ )। मिथ्यादिभिरनृतभाव विहाय ऋतभाव मुपगम्य च भवितु मर्हन्ति तेऽप्यनृतसंहिता इत्याम्नाता —'विदुषा सत्य मेव वदितव्यम्'-इत्येवमादय ( ५ २ ८ ) उपदेशा । तदत्र विदुषा देवत्वस्वीकारेऽय मेव प्रधानो हेतुर्यत्तेषा मुपजायत एव सत्यस्वभाव इति ।

( २ ) एव परोक्षप्रियत्व मप्यस्ति देवानाम् । तद्यथा— अग्न्यानिलादिप्रभवा सर्वे एवैते जन्ममृत्युसुखदु खादयो भावा , सदैव सर्वैरानुपलभ्यमानहेतुव्यापारका भवन्ति, कुर्वन्ति च सूर्येन्द्रादयो रसहरण मेघसञ्चालनादीनि कर्माणि सदैव सर्वत्र, पर न किमपि कार्य काय केन कदा कृत मिति कस्यापि प्रत्यक्ष

अनुगतिश्च "अहर्वै मित्रो रात्रिर्वरुणः ( ऐ० ४ २. ४.)", "असौ वा आदित्यो देव सविता ( श० ६. ३. १. १८.)", "एष एवेन्द्रो य एष तपति ( श० १. ६. ४. १८.)", "अयं वै वायुर्योऽयं पवते ( श० १. ५ ४. २.)"–इत्येवमादिश्रुतिभ्यश्चैव मेवेति। इतोऽप्य धिकविशेषोऽत्रावगन्तव्यश्चेदैतद्बौधायनीयभाष्य द्रष्टव्यम्॥

नन्वेवं "देवा ह वै सर्वचरी सत्रं निषेदुस्ते ह पाप्मानं नाप-जघ्निरे"–इत्येवमाद्याख्यायिकाना का गतिरिति चेत्, "सुतयो श्रोता सवस्य"–इत्यादि (जै० सू० १. १ ३२) द्रष्टव्यम्। अथवा "विद्वांसो वै देवाः"–इति ( श० ३. ७. ३. १०.) श्रुतेः, "द्वया वै देवा देवा अहैव देवा अथ ये ब्राह्मणा शुश्रुवांसोऽनू-चानास्ते मनुष्यदेवा ,•तेषा द्विधा विभक्त एव, यज्ञ आहुतय एव देवाना, दक्षिणा मनुष्यदेवानाम्•—•; त एत उभये देवाः प्रीताः स्वर्ग लोक मभिवहन्ति"–इति ( श० ब्रा० ४. ३अ. १. ४. २ ३अ.५ १४.) श्रुतेश्च वेदविदुषा गौणदेवत्वेऽभ्युपगते समह-च्छत एवेवमादिक माख्यानम्। अतएव देवत्व मापन्नस्य यज्ञ दीक्षितस्य यजमानस्य मनुष्यैर्वाक्यालापनिषेधेऽपि (८१ पृ०) विद्वद्भिर्वाक्यालापस्य कथा दूरे आस्ता मेकत्र वासश्च विहित.। तथाहि— "तदस्य विश्वैश्च देवैर्जुष्टं भवति,— ये चेमे ब्राह्मणाः शुश्रुवांसोऽनूचाना"–इत्यादि श• ब्रा० ३. १. १. ११, १२। तच्चै-तत् समाम्नानम् "इद मगन्म देवयजनम्"–इतिमन्त्रव्याख्यानपर मिति वेदविदुषा देवत्वे मन्त्रलिङ्ग मप्यस्तीति च सूचितम्। स चैष मन्त्रो यजुर्वेदीयस्तस्य पाठस्त्वेवम् ( ४. १. १.)—

"इद मगन्म देवयजन पृथिव्या यत्र देवासो अजुषन्त विश्वे। ऋक्सामाभ्या सन्तरन्तो यजुर्भी रायस्पोषेण समिषा मदेम"–इति।

ऋत्विजा मपि विद्वत्त्वयैव सत्यमाषित्वादिना सिद्धं देवत्वम् ; यज्ञवेदविदुषा मार्त्विज्यं विहित मस्तीति। तथाह्याम्नातम्— "ऋत्विजो हैव देवयजनं ये ब्राह्मणाः शुश्रुवांसोऽनूचाना विद्वांसो याजयन्ति"–इति शत० ३. १. १. ५। अनुपद मिह प्रदर्शितम् "एष अगम्न (१७८ पृ०)"–इत्यादि मन्त्रलिङ्ग मृत्विजां देवत्वख्यापनायैवाम्नात व्याख्यातञ्च तथोपपाद मध्वर्युब्राह्मणे "एतद् यजुराह"–इत्यादिना (३. १. १. ११. १२)।

दीक्षितानां मपि यजमानानां यज्ञदीक्षा मारभ्य यज्ञसमाप्तिं यावद् भवत्येव देवत्वम्। तच्चाम्नात बहुत्र। तद्यथा— "यो दीक्षते स देवताना मेको भवति"–इति श० ब्रा० ३. १. १. ८, १०। "अमानुष इव वा एतद् भवति, यत् व्रत मुपैति; न हि तदवकल्पते०—०। तद् खलु पुनर्मानुषो भवति; तस्मादिद महं य एवास्मि सोऽस्मीत्येव व्रतं विसृजेत"–इति च तत्रैव (१. १. १. ६.)। तत्रानृतपरिहारादिक मेव बीजम्। अत एव दीक्षितस्य सत्य वदनं सर्वत्रैव ब्राह्मणेषूपदिष्टम्। तद्यथा— "दीक्षितेन सत्य मेव वदितव्यम्"–इति (ऐ० ब्रा० १. १. ६.)।

एवं हि वेदेषु चतुर्विधा देवा श्रूयन्त इत्येव फलितम्। तत्र, अग्निवायुसूर्या अग्नीन्द्रसूर्या वैते त्रयो मुख्या देवाः, पृथ्वीजल-चन्द्रम.प्रभृतयो बहव एव तन्मुख्यदेवसहचरादय इत्यमुख्या देवाः, इध्माज्यग्रावादयः पारिभाषिका देवाः, ऋत्विग्यजमानविद्वांसस्तु गौणा देवा इति सिद्धान्तः॥

अथापीश्वरस्य "सत्यं ज्ञान मनन्तं ब्रह्म"–इत्यादिश्रुतिसिद्धं सत्यसंहितात्वं प्रथम मेवास्ति, "एक मेवाद्वितीयम्"–इत्येवमादि श्रुतिभ्योऽपरोऽवरस्याभावात् अन्यस्य देवत्वासिद्धं तस्यासम्भव मेव,

"सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः"–इति।

"सोमः सूर्यः •—• इत्यधिदैवतम्; अथाध्यात्मम्— सोम आत्मा"–इत्यादि चात्र निरुक्तम् (१३. १. १२.)॥

अथापि तान्यध्यात्मादीनि नामतस्त्रिविधानि वस्तुतः पञ्च-विधानि व्याख्यानानि न हि सर्वेषा मेव मन्त्राणा मुपपद्यन्ते; प्रत्युत केषाचिदेकविधम्, केषाञ्चिद् द्विविधम्, केषाञ्चिद्बहुविध मपि। तत्राधिदैवतमन्त्रा एवात्र प्रायस्त्रिभागाधिकाः श्रुताः, केवलाधियज्ञार्था केवलाध्यात्मार्थाश्च सन्ति केचन स्वल्पाः। एव मपि यदधिदैवतमन्त्राणां बहूना मेवाधियज्ञं व्याख्यानं कृतं ब्राह्मण-कारैर्यज्ञसिद्ध्यर्थम्, अध्यात्मव्याख्यान मप्यादृत मात्मवादिभि-रुपनिषदादिषु; तस्मात् सर्ववेदेष्वधिदैवतमन्त्राणां प्राचुर्येऽपि साम्प्रत मन्वेषणीयत्वं गतम् तदिहोदाहराम —

यज्ञं ज्योतिष्टोमादिक मधिकृत्य यद् व्याख्यानम्, तदधि-यज्ञम्। तादृश केवलाधियज्ञव्याख्यानयोग्यमन्त्रो यथा—

"उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्"–इति वा० सं० १. २२. ६।

कपालेषु पुरोडाशप्रथने विहितः। तत्र विधानं मन्त्रव्याख्यान-सहित श्रुतं शतपथे। तथाहि— "तं प्रथयति, उरुप्रथा उरु प्रथ-स्वेति प्रथयत्येवैन मेतदुरु ते यज्ञपतिः प्रथता मिति; यजमानो वै यज्ञपतिस्तद्यजमानायैवैतदाशिष माशास्ते"–इति (१. २. ६. ८)। अपरो दाशतय्या मपि यथा १०. ७१. ११—

"ऋचान्त्व पोष मास्ते पुपुष्वान् गायत्र त्वो गायति शक्वरीषु।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्व."

"इत्यृत्विक्कर्मणां विनियोग माचष्टे"–इत्यादव नेरुक्तम् (१. ३. ३.)।

परोक्षप्रियत्व मपि तत्सृष्टाना मेषां जीवाना मतीतानागतज्ञान-शून्यत्वेन स्पष्टम्, अमरत्वस्य तु का कथा? सर्व्वश्रुतिसिद्धो हि तस्यामरभावः सर्व्वधीमत्प्रतीतश्चेति। सत्यप्येवं मन्त्राणा मधियज्ञव्याख्याने प्रत्यक्षदृष्टप्रज्वलिताङ्गारादिरूपाग्न्यादीना मेव ग्रहणत दृष्टसिद्धेरपराभिधेयस्यानाकाङ्क्षितत्वात् दर्शितविनियोगशुल्वपलय-क्रियासाधनोपयोगित्वाच्च देवशब्देन देवताभिधानाग्न्यादिशब्दैश्च न तस्य देवदेवस्य ग्रहणं याज्ञिकसम्मतम्। अधिदैवतव्याख्याने चाग्न्यादिद्रव्यादिविज्ञान मेवाभीष्ट मित्यग्न्यादिपदाना मीश्वर-वाचित्वस्वीकारो व्यर्थ एव। अध्यात्मव्याख्यानन्तु विविधं भवति; आत्मशब्देन परापरात्मनोः शरीरस्य च बोधात्। तत्र शरीर-परव्याख्याने जीवपरव्याख्याने चेश्वरार्थस्य नैव प्रयोजनीयता; परमात्मपरव्याख्यानन्तु येषां मन्त्राणा मुपयुज्यते, तेष्वेव स्यात्तदा-दरणीय मिति सर्व्वैरभ्युपेय मेवेति॥

अथ यद्यपि परमात्मपरं जीवपरं शरीरपरं चेति त्रिविध मपि व्याख्यानं स्यादधिदैवतव्याख्यानान्तर्गतम्, तथापि ब्राह्मणवसिष्ठ-न्यायेनैवेह प्राधान्याभ्युपगमात् निरुक्तादौ पार्थक्येनोच्यतेऽध्यात्म मिति। तद्यथा ऋ० सं० १. १६४. १५—

"साकञ्जाना सप्तथ माहुरेकजं षळिद्यमा ऋषयो देवजा इति। तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः"।

"सहजातानां षण्णा मृषीणा मादित्यः सप्तमः ०—० इत्यधि-दैवतम्; अथाध्यात्मम्— सहजातानां षण्णा मिन्द्रियाणा मात्मा सप्तमः"—इत्यादि तन्नैरुक्तव्याख्यानम् (१२. २. १९.)। अत्रात्मपदेन जीवस्य ग्रहणम्।

अथात्मपदेन परमात्मनो यथा ऋ० सं० ८. ८६. ५—

दीयमान एवायं ( पार्थिवाग्निः ) सम्पद्यते— उदकोपगमनः शरीरदीप्तिः."–इति ( निरु० ७. ६. ६. )। वैद्युदग्नेरुदकाजातत्व मन्यस्मिन्नपि मन्त्रे सुव्यक्तम्। तद्यथा— "आदित् प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम्। परो यदिध्यते दिवि"–इति ८.६.३०।

अनेकत्र तु निरुक्तकारो यज्ञानुरोधादेकस्य मन्त्रस्याधियज्ञ-व्याख्यानं मुक्त्वापि पुनः स्वचित्ततोषायाधिदैवतमाह। तद्यथा—

"सोमं मन्यते पपिवान् यत् सम्पिंषन्त्योषधिम्।
सोमं यं ब्राह्मणो विदुर्न तस्याश्नाति कश्चन"–इति।

अस्य मन्त्रस्य (ऋ० सं० १०. ८५. ३.) एतन्नैरुक्तं व्याख्यानम्— "इथा सुत मसोम माह०—० 'कश्चन' अयज्वा ; इत्यधियज्ञम्। अथाधिदैवतम्०—० यज्जसुत मसोम माह, सोम यं ब्रह्माणो विदु-श्चन्द्रमसम् न तस्याश्नाति 'कश्चन' अदेव इति"–इति ११. १. ४।

एवम् "इषे त्वोर्जे त्वा"–इत्यस्याधिदैवतमन्त्रस्यैव यज्ञानु-रोधाद् छिनद्मीत्यादिपदाध्याहारेणाधियज्ञं व्याख्यानं कुर्वन्नपि शतपथप्रवक्ता वायुविज्ञानं न जहाविति पूर्वमेवोदाहृतम् (६पृ०)।

एव मेकस्यैव मन्त्रस्य पूर्वं मधिदैवतव्याख्यानं प्रदर्श्य ततोऽध्यात्म मपि व्याख्यानं प्रदर्शितम्। तद्यथा ऋ० सं० ९. ९६. ४—

"सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः."–इति।

अस्य 'सोमः सूर्यः प्रसवनात्०—० इत्यधिदैवतम् ; अथाध्यात्मम्— सोम आत्माप्येतस्मादेव"–इत्यादि नैरुक्तं द्रष्टव्यम् (१३. २. १२.)।

एकस्य मन्त्रस्य त्रिविधं चतुर्विधं वा व्याख्यान मप्युपपद्यते। तद्यथा "अग्नि मीडे पुरोहितम्"–इत्यस्य (ऋ० सं० १. १. १)। एतस्य हि अधियज्ञपक्षे 'पुरः' सम्मुखे वेद्यां 'हितं' निहित मिम

केवलाध्यात्मव्याख्यानयोग्यमन्त्रो यथा १. १६४. २०—

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।

तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति"-इति। "द्वौ द्वौ प्रतिष्ठितौ"-इत्यादि, "इत्यात्मगति माचष्टे"-इत्यन्ताद्यैतन्नैरुक्तं ( १३. ४. २. ) व्याख्यानं द्रष्टव्यम्।

दैवतं दैवते देवता: वा अधिकृत्य दृष्टो मन्त्रोऽधिदैवतः। देवतासु पूर्वोक्तलक्षणाः सर्वविधा एवेह विज्ञायन्ते; परापरशरीरात्मकाना मात्मनाञ्च दैवत्वस्वीकारेण तत्तद्विज्ञानमन्त्राणा मध्यात्मेतिप्रसिद्धाना मप्येतदन्तर्गतत्वम्। एवञ्चाधिदैवतमन्त्रेभ्यस्त्वाब्रह्मस्तम्बपर्यन्ताना पार्थिवाना मपार्थिवानाञ्च गुणस्वरूपोपयोगितादीना विज्ञातं भवतीत्यधिदैवत मेव व्याख्यानं सर्वपदार्थविज्ञानमूल प्रधानम्। अतो निरुक्तकृद्भिः प्रायः सर्वेषा मेव निगमाना मधिदैवतव्याख्यान मेवाश्रितम्। तद्यथा— "स न मन्येताय मेवाग्निरिति, अप्येते उत्तरे ज्योतिषी अग्नी उच्येते, ततो नु मध्यम.— 'अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम्। घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदा.'। ( 'अभिप्रवन्त' ) अभिनमन्त ( 'समनेव' ) समनस इव 'योषा.' 'कल्याण्य.' 'स्मयमानास' 'अग्निम्' इति औपमिकम्। 'घृतस्य धाराः' उदकस्य धाराः 'समिध' 'नसन्त'। नसतिराप्नोतिकर्मा वा, नमतिकर्मा वा। 'ता जुषाणो हर्यति जातवेदाः' हर्यति प्रेप्साकर्मा'-इति निरु० ७ ४. ४। अत्र माध्यमिकस्य विद्युदग्ने सूर्यरश्म्याहृतोदकान्येव समिध्यमानानीत्युक्तं विज्ञानम्। अत एवान्यत्रोक्त मेतयोरग्न्योः पार्थक्यम्— "यावदनुपात्तो भवति मध्यमधर्मैव तावद् भवति— उदकेन्धन. शरीरोपशमन'; उपा

अस्मिन् मन्त्रे गृहाणां द्वारः कीदृशो निर्मातव्या इत्येवोपदिष्टम्। 'द्वारः' यज्ञगृहाणां विद्वद्गृहाणां वा 'देवीः' देव्यः, दीप्तिमत्यः [ "द्वाराभिमानिन्यो हे देव्यः"—इति सा० भा० ] 'व्यचस्वत्यः' व्यचनवत्यः, बहुवायुप्रवेशयोग्याः, 'उर्विया' उरुत्वेन, प्रशस्तत्वेन 'वियन्ताम्' सुयोग्याधिकप्रशस्तकपाटयुक्ता भवन्त्वित्यर्थः। 'पतिभ्यो जनयः न शुम्भमानाः' कुलवध्वो यथा स्वं स्वं पतिं तोषयितुं सुन्दरवसनभूषणैः शोभन्ते, तथैव शोभिताश्च भवन्त्वित्यर्थः। अतएवोक्तं मैतरेयके "विश्व मिव हि रूपं दराथ्याः शुक्ल मिव च कृष्ण मिव च"—इति ( १. ५. ३. )। 'विश्व मिन्वाः' "विश्व मामिरेति"—इति तन्निरुक्तम् ( ८. २. ७. ) [ "सर्वस्य प्रीणयित्र्यः" —इति सा० भा० ], एवं 'बृहतीः' बृहत्यो दैर्घ्येण 'देवेभ्यः' ऋत्विग्यजमानेभ्योऽन्येभ्यश्च विद्वद्भ्यः 'सुप्रायणा' सुखप्रवेशाः 'भवत' इति तदर्थः। तदेतेन विद्वद्भिः सुदैर्घ्यप्रस्थयुक्ताः वायुप्रवेशप्रवहनयोग्याः सुचित्रिता दीप्तिमत्यो द्वारः कर्त्तव्या इति द्वारविज्ञान मुपदिष्टम्।

अन्यान्येव सैषा द्रष्टव्या ऋ० सं० ३. १८. २—

"तपो ष्वग्ने अन्तराँ अमित्रान् तपा शंस मररुषः परस्य। तपो वसो चिकितानो अचित्तान् वि ते तिष्ठन्ता मजरा अयासः" —इत्यस्या ऋच इदं सायणीयं भाष्यम्— "हे 'अग्ने' 'अन्तरान्' अभिभावकान् 'अमित्रान्' शत्रून् 'सु' सुष्ठु यथा भवति तथा 'तपो' तपैव बाधस्व। किञ्च 'अररुषः' तुभ्यं हविरप्रयच्छतः, अत एव 'परस्य' शत्रुभूतस्य त्वं 'शंसम्' अभिलापं 'तपा' नाशय। 'वसो' सर्वस्य वासयितः हे अग्ने। 'चिकितानः' कर्माभिज्ञस्त्वम् 'अचित्तान्' स्वकर्मस्वनासक्तमनस्कान् पुरुषान् 'तपो' सन्तप। यस्मादेवं तस्मात् 'ते' तव रश्मयः 'अजराः' जरारहिताः अतएव

येम 'अग्निम्' पार्थिवं प्रज्वलन्तं अङ्गारम्, अधिदैवतपक्षे 'अग्निम्' 'पुरः' पूर्वस्यां दिशि 'हितम्' उदितं सूर्यम्, अध्यात्मपक्षे 'पुरोहितम् अग्निम्' सर्वेषां मेव पुरः स्थितं परमात्मानम्, जीवं चेति चत्वारोऽप्यर्था. सङ्गच्छन्त एवेति ॥

अथाधिदैवतार्थको बहव उपदेशा अपि लक्षिता भवन्ति। तदयथा ऋ० सं० १. १५५. ६—

सूर्ता तर्पणानि अध्यात्मव्याख्यानानि च विलोप्य, अधियज्ञव्याख्या-नान्येवाभापत सर्ववेदभाष्यकार सायणाचार्यस्तथान्यान्योऽपि। उक्तञ्च तेन सायणेन ऋक्संहिताभाष्ये अस्यवामीयसूक्तव्याख्याना-रम्भे— 'एव मुत्तरत्राप्यधिदैवतपरतयाध्यात्मपरतया च योजयितु शक्यम्, तथापि स्वरसत्वाभावात् ग्रन्थविस्तरभयाच्च न लिख्यते; तत्र द्वा सुपर्णेत्यादौ स्फुट माध्यात्मिको ह्यर्थः प्रतीयते, तत्र त मेव प्रतिपादयामः"–इति ( १. १६४. १. )। अहो स्वरसत्वाभाव'।

वस्तुतो ध्वान्ताच्छन्नविज्ञानकालिकाना मशेषशेमुषीमता मपि तेषा सायणमहीधरादीना मधिदैवतार्थतोऽपि मन्त्राभिप्रेतं प्रकृत-विज्ञानं नैव स्फुरित सम्यगिति तच्छोच्य मेवाभवत्। दर्शयामयेह तथाविध मपि किञ्चिद्। सन्ति यजुःसंहितायां कतिचिद् प्रश्नोच्य सञ्ज्ञका ऋग्मन्त्राः, ते सर्वे नून विविधविज्ञानपूर्णा अपि सायणा-दिभिर्न तथा व्याख्याता। तद्यथा तत्रैकस्या ऋचोऽर्द्धर्च एषः—

"पृच्छामि त्वा पर मन्तं पृथिव्याः,

पृच्छामि यत्र भुवनस्य नाभि"–इति (वा० सं० २३. ६१.)।

एतत्पृच्छयोरुत्तरे अपि तद्द्वितीयस्या मेवर्चि श्रुते—

"इयं वेदिः परो अन्तः पृथिव्याः",

"अयं यज्ञो भुवनस्य नाभि."–इति ( वा० सं० २३. ६२. )।

तावेतौ द्वावेवार्द्धर्चौ ऋक्संहिताया मप्याम्नातौ ( १. १६४. ३४, ३५. )। तैत्तिरीयसंहितायाञ्चेमावाम्नातौ ( ७. ४. १८. १, ६. ), तद्ब्राह्मणे चोपन्यस्तौ (३. ८. ५.)। तदेतयोर्व्याख्यानानि—

'हे यजमान! ०—० यत्र सर्वा पृथिवी समाप्यते, तद् पृच्छामि। तथा त्वा मन्यत् पृच्छामि। किं तदिति, उच्यते— यत्र भुवनस्य नाभि सन्नाहो बन्धनम्, यत्र सर्वं सन्नद्ध भवति त

'अयास' सर्वत्र गमनस्वभावा मन्त्रो 'वि तिष्ठन्ताम्' विशेषेण तिष्ठन्तु''–इति । अत्र 'तुभ्य हविरप्रयच्छत'–इति भाष्यवचनादत्र गम्यते मन्त्रेणैतेनाग्निपूजाहीनाना मत एवाग्निशत्रूणा मनुष्याणा विनाश प्रार्थित इति, तदिदं मसङ्गत मशाध्दश्चेति ।

अस्मन्मते त्वेतन्मन्त्रस्यैव व्याख्यान कार्यम्— प्रथमपादस्य, हे 'अग्ने ।' 'अतरान अमित्रान्' गृहमध्यस्थान् मतुभूतान् आर्द्र भावान् 'तप उ' शोषयैवेति । द्वितीयपादस्य, 'अरुष परस्य' 'अरुषीरारोचनात्'–इति हि निरुक्तम् ( १२ । ७ ), अर रुप = अनरुप , तथाच मतुभूतस्याप्रकाशस्य 'शसम् नाम अस्तित्व मिति यावत् , 'तपा' दह, नाशयेति । तृतीयपादस्य, हे 'वसो' 'चिकितान' प्रज्वलन् त्व 'अचित्तान्' चित्तशून्यान् दशमशकादीन् 'तप उ' तपैवेति । चतुर्थपादस्य , ते' तव सत्ति भूता 'अजरा 'अयास' पवमाना 'वितिष्ठन्ताम्' चत्र गृहे इति शेष । . अग्नौ ज्वलिते वायोरागमन प्रत्यक्षम् , अत एवाग्नेर्वायु सखेति च नाम प्रसिद्ध मिति । तदेव मार्द्रे गृहेऽग्निप्रज्वालनेन' तदार्द्रभावो नश्यति, तत्र प्रकाशोऽपि भवति, तदाद्वान्धकाराश्रिता दशमशकादिजीवा अपि विदूरिता भवन्ति, तत्र सदागतेर्गमनञ्च सिध्यतीति फलितार्थ सम्पन्न । तदेतेन मन्त्रेण गृहस्य प्रकाश शून्यत्वम् , तदिदमत्र मार्द्रत्वम् , तत एव वायुप्रवाहहीनत्वम् , तदाश्रित दशमशकादिजीवाश्रयत्वञ्चेति चत्वारि दूषणानि विज्ञा पितानि , तेषा चतुर्णा मेव दूषणाना निवारणाय तादृशे गृहे अग्ने प्रज्वालनञ्चोपदिष्टम् ।

इत्थेव पदार्थविज्ञानशिक्षोपयोगीनि बहूपदेशपूर्णानि चैता दृशान्यनुकूतमन्त्राधिदैवतव्याख्यानान्यपहाय , परमात्मज्ञानपिपा

तत्त्वतस्त्विह प्रथम पृच्छामित्येतिप्रश्नोत्तराभ्यां पृथिव्या वर्त्तु-लाकारत्वं प्रतिपादितम्; वर्त्तुलस्यैव हि पदार्थस्याद्यन्तसीम्नोरैक्य-दर्शनात्; यतः कुतश्च चालिता रज्जुस्तत्रैवावसीयते इति सर्व मेव स्थान मादिशब्दभागन्तशब्दभाक् च भवेदित्यभिप्रेत्यैवोत्तरित मियं वेदि: परो अन्त इति। एतेन पृथिव्याकृतिविज्ञान मुपदिष्टम्।

एव मपर पृच्छामित्येतिप्रश्नोत्तराभ्यां पृथिव्या माध्याकर्षण-शक्तिमत्त्वं प्रतिपादितम्; नाभिपदार्थस्य हि मध्यस्थत्वेन बन्धन-रूपत्वेन चान्यत्रान्यत्र सिद्धान्तितत्वात्। तथा चैतरेयकम्— "अयं वै वेनोऽस्माद्वा ऊर्ध्वा अन्ये प्राणा वेनन्त्यवाङन्यो तस्माद् वेनः प्राणो वा अयं सन् नाभेरिति तस्मान्नाभिस्तन्नाभेर्नाभित्वम् प्राण मेवास्मिंस्तद्दधाति"–इति (१. ४. २.)। "नाभि. सन्नहनात्। नाभ्या सन्नद्धा गर्भा जायन्त इत्याहु."–इति च नैरुक्तम् (४. ३. ५.)। 'णह बन्धने'–इति दिवादिधातोः 'नहो भश्च'–इतीञ्प्रत्यये भान्ता-देशे चाद्युदात्तो नाभिशब्दोऽयं निष्पद्यते। तदेव मध्यस्थत्वे सति अभितः स्थितानां सन्निहितानां बन्धनरूपत्वं नाभित्व मिति सम्प द्यते नाभिलक्षणम्। अत एव शारीराणा स्नायूनां वायूनाञ्च मध्यस्थस्य बन्धनरूपस्याङ्गस्य नाभिरिति समाख्या, रथचक्रवलय-गतानामराणा मध्यस्थो बन्धकोऽपि नाभिरुच्यते, सौरजगन्मण्डलस्य मध्यस्थ. स्वरश्मिभिराकृष्य सर्वेषा ग्रहोपग्रहाणा बन्धकयासौ सूर्यो-ऽप्यास्नायते नाभिरिति। तद्यथा ऋ० सं० १०. १. ५ ३— "विश्वस्य नाभिं चरतो ध्रुवस्य कवेश्चित् तन्तुं मनसा वियन्त.'–इति, "वैश्वानर नाभिरसि क्षितीनाम्"–इति च १०. ११. २. १। एवञ्च मध्यस्थ आकर्षणहेतुर्नाभिरित्येवाभिप्रेत्येह प्रश्नोत्तरे दृष्टान्त-[illegible] भूमेर्यज्ञस्य नाभित्व मुपन्यस्तम्।

मित्यर्थः'–इति। ततः 'पृथिव्याः 'प्रथनवत्याः भूम्याः परो यन्त. पर-मन्तं पर्यवसान मियं वेदिः। न हि वेद्यतिरिक्ता भूमिरस्ति; "एतावती वै पृथिवी यावती वेदिः"–इति ( ब्रा० २. ८. १२. ३. ) श्रुते.। तथायं यज्ञो भुवनस्य भूतजातस्य नाभिः सन्नहनम्; वृष्ट्यादिसर्वफलोत्पत्तेः सर्वप्राणिनां बन्धकत्वात्'–इति च। एते तयोरर्द्धर्चयोः सायणकृते ऋग्भाष्यीयाधिदैवतव्याख्याने।

'हे यज्वन्! त्वां पृथिव्याः पर मन्तं पृच्छामि। यतः पर मुत्कृष्टप्रदेशो नास्ति, सोऽयं पर्यन्तः। तथा चक्रस्य नाभिरिव सर्वस्य भुवनस्य नाभिस्थानीयं वस्तु पृच्छामि'–इति। तत. 'येय यागवेदिः, ता मेव पृथिव्या. पर मन्तं यात्त्विका आहुः न हि वेद्या अधिकः कश्चिद् भूप्रदेशोऽस्ति'–इत्यादि च। एते तयोरर्द्धर्चयोः सायणकृते तैत्तिरीयभाष्यीयाधिदैवतव्याख्याने।

'यागसम्बन्धिनी या वेदिः, सा पृथिव्या मुत्कृष्टप्रदेशः; न हि ततोऽन्य उत्कृष्टदेशः कश्चिद् विद्यते'–इति, 'यथा शरीरस्य नाभिः मध्यप्रदेशः, तथा यज्ञः सर्वस्य लोकस्य मध्यस्थानीयः; कर्माधीनत्वात् सर्वजगद्व्यवहारस्य'–इति चैते तयोरर्द्धर्चयोः सायणकृते तैत्तिरीयब्राह्मणीयाधिदैवतव्याख्याने।

'हे अध्वर्यो! पृथिव्याः पर मन्त मवधिभूतं पर्यन्त त्वा अहं पृच्छामि। यस्मिन् स्थाने भुवनस्य भूतजातस्य नाभि. कारणं तदपि त्वा पृच्छामि'–इति, 'इयं वेदि. उत्तरवेदिः पृथिव्याः परः अन्तः अवधि. वेदे. सर्वपृथ्वीरूपत्वादित्यर्थः। भुवनस्य नाभिः कारणम् अयं यज्ञोऽश्वमेधः भुवनस्य प्राणिजातस्य नाभि. कारणम्; "यज्ञाद् वै प्रजाः प्रजायन्ते"–इति श्रुते.'–इति चैते तयोरर्द्धर्चयोर्महीधरकृते यजुर्भाष्यीयाधिदैवतव्याख्याने।

तदिदं व्याख्यान नोपपद्यते कथ मपि, स्थावरजङ्गमात्मक-जगत्त्वन्तु पार्थिवाना मेव, पौराणिकमते प्रलयकाले सलिलाप्लुत त्वञ्च तेषा मेव विवक्षितम्, अत्र पृथिव्या कदाप्येकदा कृत्तिकादि-तारकाणा सस्थितिवर्णन मपि गन्धिकागुम्फनम, तदितस्तीर्त्वा तासा मूर्द्धपलायनन्तु दूरपराहत मिति सुधीभिरेवाकलनीयम्।

तत्त्वतो ऽस्ति हि सलिल मित्यन्तरिक्षवचनम्, 'आप'-इत्यस्य 'समुद्र'-इत्यस्य चान्तरिक्षनामसु पाठात् (निघ० १. ३ ८, १५), निरुक्ते माध्यमिकत्वेन व्याख्यानात् (११. ४ ६.), अत्रैव इद मन्तरासीदिति श्रुतेस्तथैवार्थोपपत्तेश्च। तरण च प्लवन मेवेहेष्टम्, तारकासु तस्यैव सम्भवात्। अथवा अस्तु सलिल मित्युदकनाम, परं तदिह माध्यमिक मेवेष्टम्, अत्रैव इदमन्तरासीदितिश्रुतेस्तथैवार्थोपपत्तेश्चेति। 'आसीत'-इत्यस्य अस्तीत्यर्थं, 'अतरन्'-इत्यस्य तरन्तीत्येवार्थश्च पाणिनि-सम्मत (पा० सू० ३ ४. ६.)। तथा च 'अन्त.' द्यावापृथिव्यो-र्मध्ये 'यत्' 'इद' 'सलिलम्' अन्तरिक्षम्, द्यावापृथिव्यो 'अन्त' अन्तरिक्षे 'यत् इद' 'सलिलम्' उदकं वा, 'आसीत्' सदैवास्ति, एतदेव अन्तरिक्ष सलिल वा तारका 'अतरन्' सदैव तरन्ति; 'तत् तारकाणा तारकत्वम्' इत्येवार्थं सम्पद्यते सङ्गच्छते चेति।

अपि तत्रैव किञ्चिदुत्तर श्रुत मिदम्— "यानि वा इमानि पृथिव्याश्चित्राणि, तानि नक्षत्राणि, तस्मादश्लीलनामनि चित्रे नावस्येन्न यजेत"-इति तै० ब्रा० १. ५. २. ६। अत्रेद सायणीयं भाष्यम्— 'पृथिव्या सम्बन्धीनि चित्राणि विविधानि ग्रामनगरा-दीनि स्थानानि सन्ति, तानि नक्षत्रसदृशानि, यथा द्युलोके नक्ष त्राणि विविधानि उपकारकाणि च दृश्यन्ते तद्वद् ग्रामादीन्यपि।

श्रूयते चेवं मन्त्रांश एव ऋक्संहितायां ( १, ८८, ३ ), यजुः संहितायाञ्च (५, १६)-- 'दाधर्थ पृथिवी मभितो मयूखैः"-इति।

तस्यास्येदं सायणीयं भाष्यम्-- "हे 'विष्णो '!'०—०, 'पृथिवीं' प्रथितां मिमां भूमिम् 'अभितः' सर्वत्र स्थितैः 'मयूखैः' पर्वतैः 'दाधर्थ' धारितवानसि, यथा न चलति तथा दृढीकृतवानित्यर्थ इति। तदत्र मयूखशब्दस्य अश्रुतपूर्वः पर्वतार्थस्तत्र प्रकृतार्थसमन्वयासमर्थतयैव तेनाश्रित इति प्रकृतार्थसमन्वयासमर्थता च तस्य विदुषो ऽभवन्नून तत्कालसाहस्यत एवेति च स्फुटम्।

अथास्येदं महीधरकृतं भाष्यम्— "हे 'विष्णो!' ०—०, 'पृथिवीं' 'मयूखैः' स्वतेजोरूपैः नानाजीवैः, वराहाद्यनेकावतारैर्वा 'अभितः' 'दाधर्थ' दधर्थ, सर्वतो धारितवानसि"-इति। अत्र नानाजीवानां वराहाद्यनेकावताराणां वा तेजोरूपत्वकल्पनम्, तथाविधसाधनैः पृथिव्या विष्णुकर्तृकं धारणञ्चेति सर्वमेवैतत् तत्कालस्य गाढतमसाच्छन्नविज्ञानत्व मेवावेदयति।

तत्वतस्त्विह रश्मिभिः साधनैः विष्णुनामसूर्यकर्तृकं पृथिव्याः सर्वतो धारण मिति विज्ञान मेवोपदिष्टम्। एतेनाकर्षणशक्तिविज्ञानं पुरा नासीदित्यधुनतनविज्ञानविदां मास्कालितसिद्धान्तो ऽपि नूनं विंशुद्धीर्णाञ्जिनप्रध्वस्तः।

एव मन्यत्रापि यथा— "सलिलं वा इद मग्रआसीत्, यदतरन् तत् तारकाणां तारकत्वम्"-इति तै० ब्रा० १, ५, २, ५। 'द्यावापृथिव्योरन्तर्मध्ये यदिदं स्थावरजङ्गमात्मकं जगद् दृश्यते, तत् सर्वं पुरा प्रलयकाले सलिल मेवासीत्, तदानीं क्षत्रियाद्याः सलिलं तीर्त्वा लोकान्तरेषु गताः; तस्मात् तरन्तीति व्युत्पत्त्या तारकत्वं सम्पन्नम्"-इति तत्र सा० भा०।

पञ्चम्य, "गणानां त्वा गणपतिं हवामहे"–इत्यादयो मन्त्राः (वा० सं० २३. १८–३१.), तैत्तिरीयब्राह्मणादौ (३. ८. ६, ७.) अन्यथा व्याख्याता अपीह अश्लोपचारीयत्वेन यज्ञपराः कृता अधियज्ञाश्लीलार्थव्याख्यात्वभिरिति दिक् ॥

अथाप्येवं बहूनां मन्त्राणा मधिदैवत मर्थं स्वीकृत्य, यास्कोक्त मधिदैवतार्थं मुहृत्य च 'यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम्'–इत्युदाहरणभूतेनैव तेन सायणाचार्येणाकृतैतिहासिकपरतया व्याख्यान मभाणि च यथा—

"इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।

समूढ मस्य पांसुरे"–इति ऋ० सं० १. २२. १७।

एषाष्टाचरपादा त्रिपदा इति गायत्री। यद्यप्यस्या द्वितीयः पाद, सप्ताचरः, तथापि गायत्रीत्व मव्याहतम्। तथा चैतरेयकम्– "न वा एकेनाचरेण छन्दांसि वियन्ति, न द्वाभ्याम्"–इति (१. १. ६.)। पिङ्गलाचार्येण तु एकाचरहीनाया 'निचृत्'–इति, द्व्यचरहीनायास्तु 'विराट्'–इति विशेषनामोक्तम्। तथाचेयं निचृद्गायत्रीति सम्पन्नम्। अनयर्चा विष्णुर्देवो वर्ण्यित इत्येषा 'वैष्णवी'।

विष्णुशब्दो द्युस्थानदेवतासु पठितः (निघ० ५. ६. ११.) इति विष्णुः द्युविभागीयो देवः। गम्यते ऽत्राव मन्त्रे प्रवह्णन मिति स एष विष्णुरादित्यः; "यत्र किञ्चित् प्रवह्णित मादित्यकर्मैव तत्" –इत्युक्तेः (निरु० ७ ३. ४.)। सवित्रादिद्वादशसूर्यनामव्याख्यान-प्रकरणे पूषनामव्याख्यानानन्तरं व्याख्यातं विष्णुनामेति सोऽसौ पञ्चमः सूर्य एव। तन्नैकत्रसूर्यद्वादशनामप्रकरणं समासतः प्रदर्शितं पुरस्तात् (१५५ पृ०)। "अथ यद् विषितो भवति, तद्

तस्मात् कुलम्यन्निचिचकृपतिमिदं तत् स्थान मद्गीलनाम प्रतिकूल-नचत्रसहस्रं निन्दितं स्थानं म्लेच्छजनभूयिष्ठम्, तस्मिन्मद्गीलनाम्नि ग्रामे निवासं यागाद्यनुष्ठानञ्च न कुर्यात्'-इति।

अत्र सुधीभिर्विचार्य मिदम्,— प्रदर्शितं सायणीयं भाष्यमेव मन्तव्यं चेत्, तर्हि किं ग्रामनगरादिभिन्ने दरिणे, समुद्र-गर्भे, अन्तरिचे वा निवसेद् यजेत चेति, अपीह नचत्रप्रकरणे किमितेनाप्रसङ्गसङ्गोर्त्तनेनेति चेति। तत्त्वतस्त्विहैव विज्ञान मुपदिष्टम्, यदद्यापि पाश्चात्यविज्ञानविद्भिरपि नाधिगतम्; किञ्चेत एवोपदेशाद् विज्ञायते— तदानी मपि नचत्रादीना स्वरूपादि-प्रत्यचज्ञानायासीत् किंविध मपि महद् यन्त्र मितीति।

एव मश्विगुणैपमन्त्रो यस्तैत्तिरीयब्राह्मणे (३ ६. ६) आम्नात:, तत्संहितायाम् (३. ६. ६.), इह चैतरेयके विहितो व्याख्यातश्च "दैव्याः शमितार आरभध्व मुत मनुष्या इत्याह"-इत्याद्युक्त्या (२. १. ६.)। स हि यद्यपि यज्ञानुरक्तो व्याख्यातः, पर चिकित्साविज्ञानानुगतशारीरपदार्थज्ञानार्थं एवेत्यवधेयम्; न हि पशुपातघाताद्यन्तरा शारीरसूक्ष्मातिसूक्ष्मस्नाय्वादिभावाना ज्ञान सम्भवेन्नाम, नापि तदन्तरेण चिकित्साविज्ञान पूर्णता मितीति सर्वविद्यानिधानस्य वेदस्य तत्राप्युपदेशो विधेय इति।

तथा यजुर्वेदीयाः "ब्रह्मणे ब्राह्मणम्, चत्राय राजन्यम्, मरुद्भ्यो वैश्यम्, तपसे शूद्रम्, तमसे तस्करम्, नारकाय वीरहणम्"-इत्येवमादिका मन्त्राश्च (वा० स० ३०. ५—२२.) यद्यपि नूनं तेषा ब्राह्मणादीना कर्म कर्मफलादिविज्ञानपरा.; तथापि यज्ञानुरोधत वध्यीयपशुविधानपरत्वेन व्याख्याता'।

एवं सम्भोगविज्ञानोपदेशादर्थका "अम्बे अम्बालिकेऽम्बिके"-इत्यु

अत्र च यास्कोक्तौ "प्र मातुः प्रतरं गुह्यम्"–इति ( ऋ० सं० १०. ७८. ३. ) विद्युद्विज्ञानमन्त्रः प्रमाणम्। वायुरूपत्वाद्दृश्यम्। तथाह "त्रयः केशिन"–इति ( ऋ० मं० १. १६४. ४४. ) ज्योतिर्विज्ञानमन्त्रव्याख्यायां यास्कः—"अग्निः पृथिवीं दहति सर्वमेकः, अभिविपश्यति कर्मभिरादित्यः, गतिरेकस्य दृश्यते न रूपं मध्यमस्य" –इति ( निरु० १२. ३. ८. )। वैश्वानरव्याख्याया मेव मग्निविद्युदादित्यानां क्रमाद् पृथिव्यन्तरिक्षद्युस्थानत्व मध्येकात्मकत्व मुपपादितं द्रष्टव्यम् ( निरु० ७. ६. ७. )।

तदित्थ मसावेव प्रत्यक्षः सूर्यः, त्रिलोकव्यापी ज्योतिःस्वरूपो विष्णुः, न चास्य माध्यमिकस्य रूपस्य दर्शन मस्तीति शाकपूणिमते सम्भवं विष्णुविज्ञानम्।

और्णवाभमते शब्दभेदेऽप्यर्थभेद एव। तद्यथा यदुक्तं शाकपूणिना दिवीति, तदेवोक्त मौर्णवाभेन समारोहण इति। तदव "एषांल्लोकानां रोहेण सवनानां रोह आम्नातो रोहात् प्रत्यवरोहश्चिकीर्षितः"–इति ( ७. ६. ४. ) नैरुक्तं द्रष्टव्यम्। एवं विष्णुपदशब्दो "वियद् विष्णुपद मित्यमरकोषादितोऽन्तरिक्षवाची प्रसिद्ध एवेति किं तत्र प्रमाणान्वेषणप्रयासेनेति। अथशिष्टं गयशिरसीति पदम्। तथाचयोः पदार्थयोरुभयोरप्याचार्ययोरैकमत्ये सम्पन्ने अन्तिमपदार्थे कथं स्यान्मतद्वैध मित्यविचारित मपि स्वीकार्यम्— पृथिव्यामिति गयशिरसीति चाभिन्नार्थे पदे। पठ्यते हि निघण्टौ गृहनामसु 'गयः'–इति पदम् ( ३. ४. १. )। एवञ्च समारोहणं सोपानम्, तच्चात्र सूर्यस्योदयस्थान मस्तमयस्थानञ्चेत्येतद्भूगोलपार्श्वद्वयम्; विष्णुपद मन्तरिक्षम्, तच्चेहाधःस्थं ग्राह्यम्; गयशिरसि गृहाणां मूर्धप्रदेशे। तथा च सूर्यो मध्याह्ने

विष्णुर्भवति। विष्णुर्विशतेर्वा व्यश्नोतेर्वा"–इति च तन्निर्वचनम् (निरु० १२. २. ७)। "अथ 'यद्' यदा (मध्याह्ने) 'विशित' व्याप्तोऽय मेव सूर्यो रश्मिभि 'भवति', 'तद्' तदा 'विष्णुर्भवति', 'विशतेर्वा' यदा (मध्याह्ने) आविष्ट. प्रविष्ट सर्वतो रश्मिभिर्भवति, 'व्यश्नोतेर्वा' विपूर्वस्याश्नोते., यदा (मध्याह्ने) रश्मिभिरति शयेनायं व्याप्तो भवति, व्याप्नोति वा रश्मिभिरय सर्वम्, तदा विष्णुरादित्यो भवति"–इति तद्वीर्गी वृत्ति। शिपिविष्ट इति चास्यैव विष्णोर्नामान्तरम्। तदाह "किमित्ते"–इत्यस्य (ऋ० स० ७ १००, ६) मन्त्रस्य व्याख्यानाय यास्क —"शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवत"–इति निरु० ५ २ २। "शिपयोऽत्र रश्मय उच्यन्ते, तैराविष्टो भवति"–इति तन्निर्वचनञ्च तत्र तदुत्त रम् (२)। तस्मात् विष्णुरिति सूर्यस्यैव नामान्तर ध्रुवम्।

अत एवाय मन्त्रो महामुनियास्केनैवं व्याख्यात —"यत् 'इद' किञ्च, तत् ('विचक्रमे') विक्रमते 'विष्णु'। ('त्रेधा') त्रिधा ('निदधे') निधत्ते 'पदम्'। पृथिव्या मन्तरिक्षे दिवीति शाक पूणि, समारोहणे विष्णुपदे गयाशिरसीत्यौर्णवाभ ('समूळ्हम्') समूढम् 'अस्य' (विष्णो), ('पांसुरे') प्यायने, अन्तरिक्षे पद न दृश्यते"–इति (निरु० १२ २ ८)। सोऽय मेक एव विष्णु, पृथिव्या पाचक दाहक विद्रावक जाठर दाव-वाडव गार्हपत्याहव नीय दक्षिणेत्यादिबहुविधाग्निरूपेणावतिष्ठते, अन्तरिक्षे विद्युद्रूपेण वाष्पाकारवायुरूपेण वा, दिवि सूर्यरूपेणेति। तत्राय पार्थिव रूप सर्वाक्षिगोचरम्, द्युस्थं सौर मपि रूप सर्वविदितम्, माध्य मिक विद्युद्रूप न हि स्थिर दृश्य मस्ति। अत एवोक्तम् "तदेत मेतन्माध्यमिक ज्योतिरनित्यदर्शनम्"– इति निरु० ५ १ ३।

कथाया मपि, तादृशाना हि देवप्रियाणा मेतादृश्येऽर्थे कान्ति चिवमित्यलं प्रासङ्गिकानल्पभाषणेनेति ॥

तदेवंविधाना मधिदेवतार्थयुक्तानां मन्त्राणा माध्यात्मिकार्थानाञ्च बहूना प्रायशो याज्यानुवाक्याशस्त्रस्तोत्रादौ व्यवहारो भवति, केवलाधियज्ञार्थयुक्तानान्तु प्रायशः प्रैषादिकर्म्मव्यापारेष्विति विशेषः। येषान्तु मन्त्राणा ज्योतिष्टोमाद्यामुष्मिकादृष्टफलेषु न काय मप्युपयोगः, तादृशाना केषाञ्चिद् ऐहिकदृष्टफलकारीर्यादियागादौ विनियोगा भवन्ति। इतोऽन्येऽपि सन्ति ये मन्त्रा, ते ब्रह्मयज्ञपाठादौ विनियुज्यन्ते। एवा मेव केचिन्मन्त्रा औपनिषदा अपि भवन्तीति विवेकः ॥

अथैषां मन्त्राणां यथा गद्यपद्यगीतिरचनाप्रकारभेदादस्ति ऋग्यजुस्सामेति त्रिधात्वम्, तथैवास्ति च मन्त्राधिगतक्रियापदनिबन्धनापि त्रिधात्वम्। तदाह यास्कः— "तास्त्रिविधा ऋचः,— परोक्षकृताः, प्रत्यक्षकृताः, आध्यात्मिक्यश्च"—इत्यादि (निरु० ७, १, १,)। तथाच यास्तु प्रथमपुरुषक्रिया, श्रूयन्ते, ताः परोक्षकृताः; यासु मध्यमपुरुषक्रियाः, ताः प्रत्यक्षकृताः; यासूत्तमपुरुषक्रिया, ता आध्यात्मिकाः। इह ऋत ऋक्पदं मन्त्रपरम्; यजुरादिष्वपि तथा दर्शनात्।

ऋग्यजुस्सामलक्षणैस्त्रिविधैरेव मन्त्रैर्यज्ञ सम्पाद्यो भवति। तदुक्त मापस्तम्बेन— "स (यज्ञः) त्रिभिर्वेदैर्विधीयते, ऋग्वेदयजुर्वेदसामवेदैः"—इति (प० ३, ४सू०)। तत्र "ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ, यजुर्वेदेनाग्निहोत्रम्, सर्वैरग्निष्टोमः"—इति च (प० ५, ६, ७,) तत्सिद्धान्त। अथाग्निष्टोमादौ "ऋग्वेदेन होता करोति, सामवेदेनोद्गाता, यजुर्वेदेनाध्वर्युः सर्वैः

गयशिरस मागच्छन्, क्रमात् सायं समारोहण मधिरोहन्, रात्रौ विष्णुपदे तिष्ठन्, पुनरुदयात् प्राक् समारोहण मारोहतीति प्रतीयते स्फुट मौर्णवाभागयः। तदत्र मन्त्रे सूर्यस्यैव गुणा वर्णिता इतीदं विष्णुविज्ञानं नाम सूर्यविज्ञान मेव।

तैत्तिरीयसंहितायां मप्येष मन्त्र एव मेव सूर्यवाचिविष्णु-विज्ञानपरत्वेन व्याख्यातः। तद्यथा— "स विष्णुस्त्रेधाऽऽत्मानं विन्य-धत्त,— पृथिव्यां तृतीयम्, अन्तरिक्षे तृतयम्, दिवि तृतीयम्" -इत्यादि (२. ४. १२. ६.)। वा०-रामायणेऽपि १. २१. १८ —

"एकेन हि पदा कृत्स्नां पृथिवीं सो (विष्णुः) ऽभ्यतिष्ठत।
द्वितीयेनाव्ययं व्योम, द्यां तृतीयेन, राघव!"-इति।

अहो पौराणिककामनमाहात्म्यम्। अहो यज्ञपरव्याख्यातॄणा-ध्ययनाध्यापनमाहात्म्यम्। अहो दासानां पाश्चिमात्यानमिप-तानुगत्यम्। यदत्र सर्वथाप्यत्र निरुक्तादिक मालोचयतापि सर्व वेदभाष्यकारेण सायणाचार्येण व्याख्यातोऽयं मन्त्रः— "विष्णु-स्त्रिविक्रमावतारधारी"-इत्यादिनेति। पश्यत सूक्त एवैतत्—

"ऋचो अक्षरे परमे व्योमन्
यस्मिन् देवा अधि विश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति
य इत् तद् विदुस्त इमे समासते"
-इति ऋ० सं० १. १६४. ३९।

किञ्च ये ये भगवद्गीतोक्तेऽपीश्वरस्य "परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" -इति (भ० गी० ४. ८.) युगे-युगेऽवतरणं [illegible] विद्यन्ते, [illegible]

क्रीत्वा सोमं रथे निधा प्राग्वंशाग्रे समानयेत् ।
आतिथ्या निर्वपेत् सोम मासन्द्या मुपसादयेत् ।
आतिथ्येष्टिरिडान्ता स्यात्, तानूनप्त्र मतःपति ।
दीक्षा मवान्तरा मेति, प्रवर्ग्योपसदोः क्रतिः ।
दिनत्रये तत् कृतं स्यात्, वेदिर्मध्यदिने भवेत् ।
षट्त्रिंशत्पददीर्घैषा प्राग्वंशात् पूर्वतः स्थिता ॥

प्रातः प्रवर्ग्य मुद्वास्य, पश्चादुत्तरवेदितः ।
शकटे द्वे हविर्धाने, हविर्धानं च मण्डपम् ।
पश्चात्सदस्तस्य मध्ये निखातौदुम्बरी मिता ।
दक्षिणस्यानसोऽधस्ताद् गर्त्तानुपरवान् खनेत् ।
विधाय फलकाभ्यां तानग्रे कुर्यान्मृदा खरम् ।
निर्वपेद्धिष्ण्यगानग्नीषोमीयं पशु माचरेत् ।
प्रयुञ्ज्याच्चितपात्राणि दर्शवत् सर्व माचरेत् ।
आज्य मासादिते वेद्या मन्ते यूपं समुच्छ्रयेत् ।
यूपस्योच्छ्रयणादूर्ध्वं समाप्य पशुं ततः ।
वैसर्जनानि हुत्वाग्निं सोमं चाग्नादि धानयेत् ।
हविर्धाने स्थापयित्वा ग्नीयाद्वसतीवरीः ।
प्रयुञ्ज्यात् सोमपात्राणि मध्यरात्रे खरादिषु ।
यावत्तु स्थापिते सोमे पक्षिणा ध्वनितः पुरा ।
स्यात् प्रातरनुवाकार्थ मुपाकरण मादरात् ॥

वसतीवर्यपां प्राप्तौ प्रचारः स्याद् दधिग्रहे ।
उपांशुदाभ्यौ कृत्वा च महाभिषव माचरेत् ।
उपांशु मन्तर्यामं च कृत्वा रिक्तं तु सादयेत् ॥

ब्रह्मा"–इति चोक्तं तत्र तेनैव ( १८, २०, २१, २२. )। तदेवात्रासकृदाम्नातम्— "ऋचैव हौत्र मकुर्वन्, यजुषाध्वर्यवम् साम्नोद्गीथम् (औद्गात्रम्), यदेवैतत् त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्व मकुर्वन्"–इति (५. ५. ७, ८.)। होत्रादयश्चैते चत्वारश्चत्वारो व्रियन्ते। तदाहाश्वलायनः— "तस्यर्त्विजः, चत्वारस्त्रिपुरुषाः, तस्य तस्योत्तरे त्रयः। होता मैत्रावरुणो ऽच्छावाको ग्रावस्तुद्, अध्वर्युः प्रतिप्रस्थाता नेष्टोन्नेता, ब्रह्मा ब्राह्मणाच्छंस्याग्नीध्रः पोता, उद्गाता प्रस्तोता प्रतिहर्त्ता सुब्रह्मण्य इति"–इति (औ॰ सू॰ ४, १. ३–८.)।

ततोऽत्र ऋग्वेदीयब्राह्मणे प्रधानतो होताच्छावाकमैत्रावरुणग्रावस्तुदित्येषां चतुर्णां होतॄणां कर्माणि शंसनादीन्यभिहितानि, प्रसङ्गाद् ब्रह्मत्वादीन्यपि। इतोऽयशिष्टान्येतदारण्यकतोऽवगम्यानि। ततोऽप्यवशिष्टानि त्वाश्वलायनसूत्रादितोऽवगन्तव्यानि भवन्ति। नापि सर्वेषां मिवेष्टिहौत्रसोमाना मैकाहिकाहीनसत्राणां विधय इहैवैकत्र ब्राह्मणे समाम्नाताः; अपि केषाञ्चिदेवेति॥ अथ यज्ञाङ्गक्रमादिबोधाय क्रतुसङ्ग्रहोक्ता अग्निष्टोमकारिकात्रोद्ध्रियन्ते—

"अथाग्निष्टोमसंस्थेन ज्योतिष्टोमेन यो यजेत्।
स पूर्वं ऋत्विजो वृत्वा देवभूमिं विनिश्चयेत्।
दीक्षणीयां निर्वपेत् सोऽपि पत्नीसंयाजसंस्थितिम्।
क्षते प्राचीनवंशेऽथ संस्कारा वपनादयः।
हुत्वा दीक्षाहुतीः, कार्या दीक्षा कृष्णाजिनादिभिः।
दीक्षितो नियमैर्युक्तो भवेत् घोरव्रतादिभिः।
चादयाहं दीक्षितोऽथ भिक्षित्वा द्रव्य मानयेत्।
सोमं चर्मण्यथस्थाप्य विभजेत् सोमविक्रयी।
संयुक्ता प्रायणीया स्याद्, उन्नीयात् क्रयणीपदम्।

देविका निर्वपेद् देवसुवामपि यजुंष्यथ ।
उपोष्य वेदिं मानेव सिद्धाग्निष्टोमसंस्थितिः ॥"-इति ।

एव मेत्र देवस्वाम्यादिकृताग्निष्टोमपद्धत्यादौ सायणाचार्यकृत यज्ञतत्त्वसुधानिध्यादौ च पर्यालोच्यम्; अच्छावाकीयप्रयोगादिषु च बह्वालोच्य मस्ति, मकाभ्यादिते मद्दीकिते चैतरेयब्राह्मणपरिशिष्टे वालखिल्यप्रयोगस्य दर्शनेन होतृप्रयोगरीतिश्च विज्ञातव्या; बौधायनसूत्रादिभ्ययाध्वर्यवादिप्रयोगज्ञानं च सुसम्पाद्य मिति ॥

एतर्हि ऋग्वेदस्य द्वे एव ब्राह्मणे लभ्येते,— इद मैतरेयका मेक मपरन्तु कौषीतकं नामेति। तत्र कौषीतके प्रथम मेव दर्शपूर्णमासेष्टिरारब्धा; ततोऽग्निहोत्रादिकं मकीर्णकञ्च किञ्चिद् विधायैव क्रमेण वैमृधेष्टिः, स्वस्त्ययनेष्टि., पथिकृदिष्टिः, दाक्षायणेष्टि', इळादधेष्टि., सार्वसेनीष्टि., शौनकेष्टि, वसिष्ठेष्टि', श्राकेष्टि', सुन्वयनेष्टिः, तुरायणेष्टि., श्राग्रयणेष्टि, वसन्तेष्टिः, व्रीहियवेष्टिः, चातुर्मास्येष्ट्यश्चतस्र, मित्रविन्देष्टिरिति दर्शपूर्णमासाभ्या सङ्कलनया एकविंशतिर्यागा आम्नाता। तत. पुनरपि किञ्चिदानुषङ्गिकं प्रोच्य दीक्षणीयेष्टिं विधायाग्निष्टोमकाण्डस्य प्रवचनारम्भ. कृतः। ततः "सोमेनेष्ट्वा सौत्रामण्या यजेत"-इत्यादि विधाय षोडश्यादिज्योतिष्टोमसंस्थादीना मपि विधान माम्नातम्। तदस्मिन् ब्राह्मणे ऐतरेयानाम्नातानां मप्यनेकयागानां गवामयनाद्याविध्यादिकं दृश्यते, दृश्यते चैतरेयोक्तानां मप्यनेकप्रयोगानां ममासत उल्लेखः। तदेतयोरङ्गाङ्गिभाव एवोपपन्नं युज्यते ॥

अथाप्यैतरेयके प्राचीनब्राह्मणकारणीनां क्वचित् क्वचिन्नामोक्तिः, क्वचित् क्वचिद्वचनोद्धृतिः, क्वचित् क्वचित् समानमवचनोद्धृतिश्च दृश्यते। तद्यथा— "पूर्वां पौर्णमासी मुपवसेदिति पैङ्ग्यम्,

अथैन्द्रवायव पात्रैर्गृहीत्वा सादयेत् खरे ।
यो मैत्रावरुणस्तु श्रीणाति पयसा ग्रहम् ।
शुक्र स्थी हिरण्येन, स्थतो मन्थी तु सक्तुभि ।
गृहीत्वाग्रयण गृह्णात्यतिग्राह्याभिधान् ग्रहान् ।
गृहीत्वौक्थ्य ध्रुवो ग्राह्य पवमानग्रहास्त्रय ।
पूतभृद् द्रोणकलशो ऽपरश्चाधवनीयक ।
ते वहिष्पवमानाय प्रचरन्त्यत्र पञ्च ते ।
गृहीत्वाश्विन माग्नेय पशो कुर्यादुपाकृतिम् ।
सवनीयपुरोडाशैश्चरित्वा चैन्द्रवायवम् ।
हुत्वा ग्रह द्वयोर्मैत्रावरुणाश्विनयोर्हुतौ ।
शुक्रमन्थ्यादिकान् हुत्वा चमसानपि जुह्वति ।
सद्यस्तु ग्रहैन्द्राग्नसोमप्रतिगरास्तत ।
आज्यस्तोत्रेभ्य ऊर्द्ध हि प्रातस्सवनसस्थिति ॥
माध्यन्दिने तु सवने पुरोडाश पशोर्भवेत् ।
ग्रहो मरुत्वतीय स्यात पवमानेन सस्तुति ।
दधिघर्मे हुते दद्यात् दक्षिणास्ते यथायथम ।
मरुत्वतीयास्तान् हुत्वा माहेन्द्रेण समाप्यत ॥
तृतीयसवनारम्भ आदित्यग्रह माचरेत ।
आर्भवेण स्तुवीताथ पश्वङ्गै प्रचरत्ययम् ।
सावित्रवैश्वदेवाख्यौ ग्रहौ, सौम्यचरुस्तथा ।
पात्नीवतग्रहादूर्द्ध यज्ञायज्ञीयसस्तव ।
आग्निमारुतशस्त्र स्याद् गृह्णीयाद्धारियोजनम् ।
समाप्ते सवने पश्चात् कुर्यादवभृथ तत ।
कुर्यादुदयनेष्टि मनुबन्ध्या यजेत गाम् ।

सर्वदा विद्यमानत्वात् सालोक्य सामीप्ये स्वप्रार्थिते अपि स्त एव सर्वेत सर्वेषा मस्माक मिति किं तयोः प्रार्थनया। सारूप्यवादस्तू-न्मत्तप्रलापः, ब्रह्मणो रूपाभावात्, असङ्गयत्वप्रसङ्गाच्चेति। एवं निरुक्तपरिशिष्टग्रन्थे च यदुक्तं "सारिष्टम्"-इत्यादि, तन्नूनं महाभाष्यतोऽप्यर्वाचीन मिति सिद्धान्तित मेव निरुक्तालोचनस्य षष्ठे। तत्तस्त्वेतस्य ब्राह्मणस्य स्वर्गसाधनयागविध्युपदेशा एवाभिधेया इत्यतः स्वर्ग एव प्रयोजन मिति ब्रूमः; अस्माक स्वर्गफलसाधन-यैवैतद् ब्राह्मणं प्रवृत्त मिति यावत्। तदाह जैमिनि — "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्, प्रत्ययाच्च"-इति ४.३.१५,१६।

सोऽसौ स्वर्गः खलु लोकान्तरं। तथाहि— "परो वा अस्मा लोकात् स्वर्गो लोक"-इति (६.४.४.), आदित्याश्चैवेहा-सन्नङ्गिरसश्च तेऽग्नेऽग्निनाग्नि मयजन्त, ते स्वर्गं लोक मायन्"-इति (१.२.५.), "तं स्वयन्तोऽब्रुवन् एतत् ते ब्राह्मण! सहस्र मिति"-इति (५.२.८.) च। स हि लोकान्तरोऽस्मा-ल्लोकाद्दूरेतनः। तथाचाम्नातम्— "अग्नेर्देवयोन्या आहुतिभ्यः सम्भूय हिरण्यशरीर ऊर्ध्वः स्वर्गलोक मेष्यति"-इति (२.१.२, पुनः २.२.४.)। तत्र पापी गन्तुं न शक्यते। तथाह— "सोऽपहतपाप्मोर्ध्वः स्वर्गं लोक मेति"-इति (७.२.११.)। अत एवेद मप्याम्नातम् (४.३.६.)— "स्वर्गो वै लोको दूरोहणम्"-इति।

परलोकस्वीकाराभावे निन्दाश्रवणञ्च गम्यते। तद्यथा— "किं ते कृण्वन्ति कीकटेषु गावः"-इति (ऋ० सं० ३.५३.१४.) मन्त्रस्य व्याख्याने 'प्रमगन्द' पदस्य "प्रमदको वा योऽय मेवास्ति न पर इति प्रेप्सु"-इत्याह यास्कः (६.६.७.)।

उत्तरा मिति कौषीतकम्"—इति ७, २ १०। श्रूयते चेतत् कौषीतक्यास्तृतीयेऽध्याये। तत्र हि स्वपूर्वतनस्य पैङ्गस्य मत विमर्दनाय तथा स्वनामान्वित मत तद्विधान कुषीतकेन, तदेव मत इय यथायथ मिहोक्त मित्येव प्रतिभात्यस्माकम्। एवञ्च प्रथमन्ता वत् पैङ्गादिब्राह्मणग्रन्थेष्वेव ज्योतिष्टोमस्याग्निष्टोमादयो यागा विहिता, तद्विधिविशेषास्तत कुषीतकादिभि प्रोक्ता, तच्चैव विषयोऽप्येतस्यैतरेयस्य विषया इति सिद्धम्॥

---

(८)

अथ क्रमप्राप्त मिदानीं मिद मपि विचार्य्य मस्ति, किम् प्रयोजन मेतस्येति। सम्प्रति लोके मोक्षस्यैकस्य परमपुरुषार्थत्वेन स्वीकारात्, तदवाप्तिरेवास्य फल मन्वेत, यदि नाम वेदे तस्य स्वीकृति श्रूयेत? न हि संहितासु क्वापि तादृशशब्दोऽपि श्रूयते, अपुनरावृत्तिमतन्तु ब्राह्मणेषु गम्यते सत्यम्, पर न तत् पौराणिक मोक्षपर मिति च नासत्यम्। अस्ति पुराणेषु क्वचित् चतुर्विधस्य क्वचित् पञ्चविधस्य च मोक्षस्योल्लेख। तद्यथा भागवते—

"सार्ष्टिसारूप्यसालोक्यसामीप्यैकत्व मप्युत।

दीयमान न गृह्णन्ति विना मत्सेवन जना"—इति।

अस्मिन् श्लोके सार्ष्टीति बौद्धशास्त्रप्रसिद्ध निर्वाणम्। तत्तु नित्यस्यात्मनो नैव सम्भाव्य मस्ति, न च सुखाभिलाषिणा मस्माक प्रार्थनायोग्यम्, नापि वेदबोधित मित्यश्रद्धेयम्। एवत्व मपि तथैव। सर्वव्यापिनोऽस्य परमेश्वरस्य सर्वलोके सर्वसमीपे च

मादित्यतोऽप्यतिदूरस्थत्वेनैवाह्नि सूर्यरश्म्यभिभूतत्वात् न दर्शन मस्ति। तदुक्तं निरुक्ते— "आदत्ते भास ज्योतिषाम्"–इति (२. ४. १.)। एवञ्चान्तरिक्षशब्दस्याकाशपर्यायत्वे स्वीकृतेऽपि 'भुव रित्यन्तरिक्षम् (शत० ब्रा० २. १. ४. ११.)"–इत्येवमादौ, "वायुर्वेन्द्रो वान्तरिक्षस्थान (निरु० ७. २. १.)"–इत्यादौ च एतज्जगत्सम्बन्ध्येवान्तरिक्ष बोध्यम्। एव "स्वरिति दिव (शत० ब्रा० २ १. ४. ११.)"–इत्येव मादौ, "सूर्यो द्युस्थान "–इत्यादौ (निरु० ७. २. १.) च एतज्जगत्सम्बन्ध्येव द्यौर्बोध्येति। तदेतेन लोकत्रयस्वरूपनिर्णयेनैव निर्णीत स्वरिति।

स्वरिति पद स्वर्गाभिधान प्रसिद्धम्, सूर्यपर्यायश्च स एव स्व शब्द। अत एव निघण्टौ स्वरिति पद सूर्यद्युलोकयो साधारणनामसु पठितम् (निघ० १. ४. १.), निरुक्तावपि तथैव व्याख्यातम्— "स्वरादित्यो भवति, सु अरण, सु ईरण, स्वृतो भास ज्योतिषा, स्वृतो भासेति वा"–इति (२. ४. २.)। अत्रापरञ्च श्रूयते— "स्वर्गो वै लोको ब्रध्नस्य विष्टप, स्वर्ग मेव तल्लोक यजमानं गमयति"–इति (४. १. ४.)। तद् ब्रध्नस्य विष्टप मपि सूर्यलोक एव। तथा ऋङ्मन्त्र एष ८. ६९. ७—

"उद्यद् ब्रध्नस्य विष्टप गृह मिन्द्रश्च गन्वहि।

मध्व' पीत्वा सचेवहि त्रि. सप्त सख्यु पदे"–इति।

द्युलोक एव देवलोक, देवाना रश्मीना प्रधानतस्तत्र निकेतनात्। अत एव निघण्टौ द्युस्थानदेवतासु 'देवा '–इति पद पठितम्— (५ ६ २६.), व्याख्यात मपि तथा तन्निगमप्रदर्शनादिभि र्यास्केन। तदेव द्युलोको देवलोको स्वर्लोक इत्यमान्यभिधार्यानि पदानि। तदिद मप्याम्नात मुभयविधेऽपि यजु समाम्नाये—

त्वम् आप्नुवन्ति, त मभिगम्य च तदीयज्योतिरुपलभ्य मनोमात्र-सहायाः पुरुषास्त मेव ब्रह्मलोक मनुभवन्तीति तदर्थः। अत एव सुव्यक्त माम्नात मिहापि— "श्रो मिति स्वर्गो लोक मित्यसौ योऽसौ तपति ( ५. ५. ७. )"–इति।

तदित्थ मिदं निष्पन्नम्— स्वर्गो लोक. खलु नेभ्यो लोक-त्रयेभ्योऽतिरिक्तः, अपि त्वस्माद् भूलोकात् पर इत्येव। अत एव श्रूयते— "त्रयो वाव लोकाः,— मनुष्यलोकः, पितृलोको देवलोक इति"–इत्यादि शत० ब्रा० १४. ४. ३. ११। अत्र त्रयो वाव लोका इति श्रूयते ह्येवावधारणम्। एव मन्यत्रात— "पृथिवीलोक मेव पुरोऽनुवाक्यया जयति, अन्तरिक्षलोकं याज्यया, द्यौर्लोकं शस्यया"– इति श० ब्रा० ६. १. ६। अन्यत्र च — "दक्षिणत उपसृजति, पितृलोक मेव तेन जयति; प्राची मावर्त्तयति, देवलोक मेव तेन जयति; उदीचीं माहत्य दोग्धि मनुष्यलोक मेव तेन जयति"–इति तै० ब्रा २. १. ८. १।

यथास्तु श्रुतिपूपात्तः श्रूयते पितृलोकः, स त्वन्तरिक्षलोकस्यो-पलक्षकः; अन्तरिक्षस्य एव हि पितृलोकः; पितृलोकमात्र-स्यावाकाशस्थानं न सर्व मेवान्तरिक्ष मिति। तदप्याम्नन्त्या-थर्वणिकाः स्वसंहितायाम् ( १८. ४. ७३. )— "अभिप्रेहि मध्यतो माप ह्वास्थाः पितॄणां लोकं प्रथमो यो अत्र"–इति।

अपरञ्चाप्याम्नातम्— "अध इव हि पितृलोकः"–इति (श० ब्रा० १४. ६. १. १०)। द्युलोकस्याधस्तात् पितृलोक इत्येव तदा-शयः। पुण्यलोकशब्देनाप्यन्तरिक्षस्य पितृलोकस्य ग्रहणं गम्यते। तद्यथा— *"तस्मादाहुः पुण्यलोके इयान् इति"–इति श० ब्रा० ३. ६. २. १५*। ताण्ड्यमहाब्राह्मणेऽपि (१२. ११, १२.) द्रष्टव्य मिदम्।

"पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद् दिवमारुहम्।
दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगामहम्॥
स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी।
यज्ञं ये विश्वतो धारं सुविद्वांसो वितेनिरे"

–इति वा० सं० १७, ६७, ६८; तै० सं० ४, ६, ५, ३, ४। विनियुक्तावेतौ मन्त्रौ शतपथब्राह्मणकारेण (८, २, ३, २६, २७), व्याख्यातौ च तैत्तिरीयसंहितिकब्राह्मणेऽपि (५, ४, ७,)।

सोऽसौ द्युलोक एव प्रख्यात. परलोकः। अतएवैव भाष्यातं शतपथे—"तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदञ्च परलोकस्थानञ्च, सन्ध्यं तृतीयं स्वप्नस्थानम्, तस्मिन् सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदञ्च परलोकस्थानञ्च"–इति १४, ७, १, ८।

परमलोकोऽप्यसावेव। तथाहि—"स परमं लोकमजयदुपाश्विनोः प्रियं धाम गच्छति"–इति (ऐ० ब्रा० १ ४, ४,)। अश्विनोः प्रियं धाम नूनं द्युलोक एव; तयोर्द्युस्थेषु परिगणनात् (निघ० ५ ६, १,), "अथातो द्युस्थाना देवतास्तासामश्विनौ प्रथमागामिनौ भवत"–इत्यादिनैरुक्ताच्च (१२, १, १,)।

अमृतलोकोऽप्यसावेव। तथा ह्याथर्वणिकाः समामनन्ति—

"सूर्यस्य भागे अमृतस्य लोके"–इति ८, १, १।

ब्रह्मलोकोऽप्ययमसावेव। अत एवोक्तं निरुक्तपरिशिष्टे जीवानामूर्द्ध्वगतिव्याख्याने—"देवलोकात् आदित्यम्, आदित्याद् वैद्युतम्, वैद्युतान्मानसम्, मानसः पुरुषो भूत्वा ब्रह्मलोकमभिसम्भवति"–इति (निरु० १४, ८,)। शतपथेऽपि श्रूयत एतत् माय एव मेव (१४, ८, १, १८,)। अथ वैद्युतमस्तो ज्योतिः पर.। तथा च देवलोकं गत्वानं सूर्यमण्डलं वा अभिगम्य आदि

याणा मपराह्ण. पितॄणाम्, तस्मादपराह्णे ददाति"–इत्यादि (श० ब्रा० २. ४. २. ७.)। मनुसंहितायाञ्च (१. ६. ३.)—

"पित्र्ये रात्र्यहनी मासः प्रविभागस्तु पक्षयोः।
कर्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्वरी"–इति।

"मानेनानेन यो मासः पक्षद्वयसमन्वितः।
पितॄणां तदहोरात्र मिति कालविदो विदुः॥
कृष्णपक्षस्त्वहस्तेषां शुक्लपक्षस्तु शर्वरी।
कृष्णपक्षे त्वह-स्याद्यं पितॄणा वर्त्तते नृप !"–इति च इ० वं० ८।

ज्योति.शास्त्रेऽप्युक्त मेव मेव। तथा च सि० शि०—

"विधूर्द्ध्वभागे पितरो वसन्तः स्वाधः सुधानिधि मामनन्ति।
पश्यन्ति तेऽर्कं निजमस्तकोर्द्ध्वे दर्शे यतोऽस्माद् द्युदलं तदेषाम्।
भार्द्धान्तरत्वान्न विधोरध.स्थं तस्मान्निशीथः खलु पौर्णमास्याम्।
कृष्णे रविः पक्षदलेऽभ्युदेति शुक्लेऽस्त मेत्यर्थत एव सिद्धम्"–इति॥

चन्द्रलोक एव पितृलोक इति पक्षे त्वत्र विधूर्द्ध्वभागे इति विधुपृष्ठे बोध्यम्, यथा वयं भूर्द्ध्वभागे= भूपृष्ठे वसाम., न तु खनिजहिरण्यादिवद् भूगर्भे इत्यभिप्रायः।

नन्वेव मनतिप्राचीनपुराणेतिहासज्योतिषादीन्यनार्षशास्त्राण्यपि किमप्रमाणानि ? वेदाविरुद्धानि तान्यपि स्वतोपकाराणि चेत् स्युः प्रमाणानीत्येवात्र ब्रूमः। अत एवोक्तं मनुना (२. १२.)—"स्वस्य च प्रिय मात्मन"–इति, मीमांसाधिकरणमालायाञ्च "तेन द्वान्त-रिते तेषां प्रामाण्यं विप्लवच्छत."–इत्येवोक्तम्। एव मपि यत् श्रूयते ऽन्यत्र "पितृलोकाच्चन्द्रम्"–इति (श० ब्रा० १४. ९. १, १०.), पितृलोकचन्द्रलोकयोरेकत्वपक्षे तदेतत् कथं सङ्गच्छते ? इति, अत ब्रूमः—'पितृलोकात्' पितृलोक मन्तरिक्षं चन्द्रमण्डलं वा

"कर्मणा पितृलोकः"—इति (श॰ ब्रा॰ १४. ४. ३. २४.) श्रुतेस्तत्रैव हि पुण्यात्मनां गमनं भवतीति पितृलोक एव स्यात् पुण्यलोकः। श्रूयते हि छान्दोग्यब्राह्मणे— "त्रयो धर्मस्कन्धाः,— यज्ञोऽध्ययनं दान मिति प्रथम, तप एव द्वितीयः, ब्रह्मचार्याचार्यकुलवासः तृतीयः। ०—०। सर्व एते पुण्यलोका भवन्ति; ब्रह्मसंस्थो ऽमृतत्व मेति"—इति (४. २३. १.)। तदेतत्त्रिविधपुण्यानुष्ठातृणां पुण्यलोकापरपर्याये पितृलोके स्थानं भवति, ये तु ब्रह्मज्ञास्ते त्वमृतत्वलाभाय पूर्वनिर्दिष्ट ममृतलोकं यान्तीति तदभिप्रायः।

सोऽन्तरिक्षस्थः पितृलोको नूनं सोमलोकः, स एव चन्द्रलोकः। तथाहि— "स सोमलोकं, सोमलोके विभूति मनुभूय पुनरावर्त्तते"—इति प्र॰ उ॰ ५. ४। यः सोमः, स एव चन्द्रमाः। तथाहि अथ॰ सं॰ ११. ६. ७—

"सोमो मा देवो मुञ्चतु य माहुश्चन्द्रमा इति"—इति।

अपि शतपथे—"पितृलोकाज्जीवलोक मभ्यायन्ति; अग्नेोऽग्निः पयोऽतिवोढा, स एतानतिवहति"—इति (१३. ८. ४. ६.)। तदेवं पितृलोकात्सोमलोकाच्चोभयतः पुनरावर्त्तनश्रुतिसाम्यात् उभयोरभिन्नत्व सुव्यक्तम्। अथवा चन्द्रलोकात् किञ्चिदूर्द्धे स्थितः पितृलोकः; तत एव "अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीदंस्तानब्रवीत्,— मासि मासि वोऽशनं स्वधा वो मनोजवो वश्चन्द्रमा वो ज्योतिरिति"—इति (२. ४. २. २.) शतपथश्रुतिः। अत एव चन्द्रमसः कृष्णशुक्लपक्षावेव पितृणा महोरात्राविति सिद्धान्तितम्। तथाह्याम्नातं शतपथे— "यदैवैषः (चन्द्रः) न पुरस्तान्न पश्चाद् ददृशे, तर्ह्येभ्यो (पितृभ्यः) ददाति; स वा अपराह्णे ददाति। पूर्वाह्णो वै देवाना मध्यन्दिनो मनु

'ऋतस्य सदनात्' मेघनिर्माणायाहृतजलसञ्चयप्रदेशात् अन्तरिक्षात्, तं लोकं प्राप्यैवेति यावत्। ब्राह्मणे लिङ्ग द्युशब्द ऊर्द्धोपलक्षकः। तथाच 'दिवि भूत्वा वर्षति' ऊर्द्धं आकृष्टो भूत्वा वर्षतीति तदर्थः। अथवा इहापि पूर्ववद्व्याख्येयः 'दिवि भूत्वा' द्युलोकाभ्यन्याकृष्टः सन्निति यावत्। तदेवं पितृवाचकपर्जन्यस्यान्तरिक्षस्थत्वात् सर्वस्यैवान्तरिक्षस्य पितृलोकत्वम्।

सोऽयमन्तरिक्षलोको द्युलोकादधस्तोऽप्येतस्मान्मनुष्यलोकादूर्द्ध्वस्थतो मध्यलोक एव। एतस्मान्नायते— "अन्तरिक्षलोक उ अस्माल्लोकादनन्तर्हित."–इति (श० ब्रा० ७. १. २. २३.)।

यस्मिन्न लोके प्रतिष्ठितः पितृलोकः, सोऽन्तरिक्षलोक एवेन्द्रलोक, तत्रैव मेघदारकवायोरिन्द्रस्य संस्थितेः। तच्छ्रुतम्—"इन्द्रलोको ह्येष."–इति (श० ब्रा० ८. ५. ३. ८.)।

वायुलोकोऽपि स एव; वायोरन्तरिक्षचारित्व तु लोकेषु प्रसिद्धम्, "वायुरन्तरिक्षस्य."–इत्यादिनैतत्तादिभ्ययावगम्यते, श्रूयते चैवं साङ्ख्यायन ब्राह्मणेऽपि (२०. १.)।

एतदेवान्तरिक्षं सन्ध्य मिति स्वप्नस्थान मिति च श्रुतम्— "तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इद च परलोकस्थानञ्च, सन्ध्यं तृतीयं स्वप्नस्थानम्, तस्मिन् सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदञ्च परलोकस्थानञ्च"–इति श० ब्रा० १४. ७. १. ८। एवञ्च जीवलोकादस्मात् प्रेतानां परलोकजिगमिषूणा मिहान्तरिक्षलोके किञ्चित्काल स्वप्नावस्थान सूचितम्; येषु पितृलोका आसन्न, तेषा मिह स्वप्नावस्थान न भवतीति च॥

अथास्य भूलोकस्य किल मध्यवगम्यते मन्त्रवर्णात्। तद्यथा ऋ० म ७. १०४. ११—

अभिगम्य 'चन्द्रम्' आप्नुवन्तीति तदर्थं ; अन्यथा २१० पृ० प्रदर्शितार्थवैषिकप्रश्नश्रुतिविरोधः स्यादनिवार्य एवेति । तस्मादेतस्याप्युपपद्यतेऽस्य चन्द्रलोकोर्द्धपृष्ठस्य पितृलोकस्यान्तरिक्षस्थत्वेनान्तरिक्षवाचितापीति ।

अस्ति चास्यान्तरिक्षवाचित्वेऽपरमपि प्रमाणम् । तदेतत्— "पिता दुहितुर्गर्भं माधात् (ऋ० सं० १. १६४. ३३.)"-इति मन्त्रव्याख्यानकाले यास्काचार्यं आह— "पिता दुहितुर्गर्भं दधाति, पर्जन्यः पृथिव्याः"-इति ( निरु० ४. ३ ५ )। पर्जन्यशब्दनिरुक्तिश्चैव कृता— "पर्जन्यस्तृपेराद्यन्तविपरीतस्य, तर्पयिता जन्यः, परो जेता वा, जनयिता वा, प्रार्जयिता वा रसाना मिति" -इति (१०. १. १०), इत्था इति तच्छेषः । तद्रसार्जनन्तु भवति रश्मिभिः । तथाचाम्नातं वृष्टिविज्ञानसूक्ते ऋ० सं० १. १६४. ४७-

"कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिव मुत्पतन्ति ।

त आ ववृत्रन्त्सदनादृतस्य आदिद् घृतेन पृथिवी व्युद्यते"-इति ।

"कृष्णं" ('नियानं') निरयणं, रात्रिं । आदित्यस्य 'हरयः सुपर्णाः' आदित्यरश्मयः । 'ते' यदा ('आ ववृत्रन्') अमुतोऽर्वाञ्चः पर्यावर्त्तन्ते ('सदनात्') सद्मस्थानात् ('ऋतस्य') उदकस्य 'आदित्' अनन्तर मेव 'घृतेन' उदकेन 'पृथिवी व्युद्यते' । "घृत मित्युदकनाम, जिघर्त्तेः सिञ्चतिकर्मणः"-इति (७. ७ १.) भाष्ये यास्ककृतं व्याख्यानम् । ब्राह्मणेऽप्येवं मेव । तद्यथा— "अग्निर्वा इतो वृष्टिं समीरयति धामच्छद् दिवि भूत्वा वर्षति, मरुतः सृष्टां वृष्टिं नयन्ति यदाऽसावादित्योऽग्निं रश्मिभिः पर्यावर्त्ततेऽथ वर्षति'-इति ( निरु० ७ ७. १ )। मन्त्रे 'दिवम्' द्युलोकं प्रति 'उत्पतन्ति' उड्डीना भवन्ति, तावद्दूरगमनात् पूर्वं मेव

"दक्षिणोत्तरतो ऽप्येवं पातो राहुः स्वरंहसा ।
विक्षिपत्येष विक्षेपं चन्द्रादीना मपक्रमात्"—इति ।

"पातस्थानाधिष्ठात्री देवता राहुर्जीवविशेषः"—इत्यादि यद्वाख्यात मिह रङ्गनाथेन, तत्तु नूनं वेदविदुषां हास्यकर मेव। दृश्यतेऽपि मनुष्यमुण्डसदृशैव राहुप्रतिमा निर्म्मीयते पौराणिकैराधुनिकज्योतिषिकैश्च ; इतोऽप्येतस्य मानुषनिलयत्वं सूच्यते। तदित्थं सूर्य्यस्याधस्थो बुध एव प्रथमो भूलोकः, तदधस्थः शुक्रः खलु द्वितीयो भूलोकः, तदधस्थिता इयं पृथिव्येव तृतीया भूस्वरूपा ; इमा एव तिस्रः पृथिव्य स्त्रयो भूलोकाः। त एव यूरोपीयज्यौतिषिकैरपीमे Terrestrial planets= पार्थिवग्रहा उच्यन्ते ।

एतेषां लोकानां येऽन्तरालप्रदेशास्तेषां समुदिताना मेकरूपाणा मेकं नामान्तरिक्ष मिति । तदस्यान्तरिक्षस्याप्यस्ति त्रित्वश्रवणम्, अस्ति ह्यत एव दिवस्त्रित्वश्रुतिश्च। तद्यथा श्लोकस्यैव मन्त्रे लोकत्रयाणा प्रत्येकस्य त्रित्व माम्नायते ( ऋ॰ सं॰ ४. ५३. ५. )—

"त्रिरन्तरिक्षं सविता महित्वना,
त्री रजांसि परिभूस्त्रीणि रोचना ।
तिस्रो दिवः पृथिवीस्तिस्र इन्वति,
त्रिभिर्व्रतैरभि नो रक्षति त्मना"—इति ।

तदत्र श्रुतं सर्वत्रित्वं पृथिवी त्रित्वनिबन्धन मेवेति प्रतीयते स्फुटम्। पर्य्यस्वस्य मन्त्रस्य निगदमिद एवेति ॥

यद्वत्व मपि श्रूयते पृथिव्याः । तद्यथा ऋ॰ सं॰ १०, ७, ३५—
"स्कम्भो दाधार द्यावापृथिवी उभे इमे स्कम्भो दाधारोर्वन्तरिक्षम् ।
स्कम्भो दाधार प्रदिशः षडुर्वीः
स्कम्भ इदं विश्वं भुवन माविवेश"—इति ।

"परः सो अस्तु तन्वा३तना च तिस्रः पृथिवीरधो अस्तु विश्वाः ।
प्रति शुष्यतु यशो अस्य देवा यो नो दिवा दिप्सति यश्च नक्तम्"
–इति । 'यः' 'नः' अस्मभ्यं 'दिवा' दिनं 'दिप्सति' करोति, 'यः' 'नक्तं च' दिप्सति ; 'सः' सूर्यो देवः , 'तन्वा' स्वशरीरेण, 'परः' दूरस्थः 'अस्तु' अस्ति, 'च' अपि 'तना' स्वप्रभाविस्तृत्या 'अधः' स्थिताः 'तिस्रः पृथिवीः', ता एव 'विश्वाः' सर्वा भूलोकाः, व्याप्य 'अस्तु' अस्ति । 'अस्य' देवस्य 'यशः' कीर्त्तिं 'देवाः' तद्रश्मय एव 'प्रति शुष्यतु' प्रतिपक्षं शोषयन्ति, तद्रश्मिभिरेवेदं सर्वं सम्पद्यत इति तदयमस्त एव हरतीति भावः ।

सूर्याधःस्थितास्तास्तिस्रः पृथिव्यो नूनं क्रमादधोऽधःस्थिताः शुध शुक्रादय । तथेयं पृथिव्येव राहुरुच्यते । अत एतदाम्नात शुक्र संहितायाम् ५. ४०. ८— यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः ।
अत्रयस्तमन्वविन्दन् ह्यन्ये अशक्नुवन्"–इति ।

तैत्तिरीया अपि समामनन्ति— "स्वर्भानुरासुरः सूर्यं तमसा विध्यत्"–इति ( २ १. २, ४, ) । "स्वर्भानुरिति आसुरस्य कस्य चित्रामधेयम् ( नामधेयमिदम् ) । स्वर्गलोकगता भा शुद नीति स्वर्भानुः । स च पृथिव्या रूपं धृत्वा ( पृथिवीदेशस्थान मूलजम् ) कृष्णवर्णः । पृथिव्याश्च कृष्णरूपत्वं लोके बहुलं दृश्यते ; छन्दोगाश्च "यत् कृष्णं तदन्नस्य"–इत्यन्नकारणभूतायाः पृथिव्याः कृष्णरूपत्व मामनन्ति ( ६. ४. १ ) । अतएव पृथ्व्येव स आसुरः ( असुः प्राणः ; स विद्यतेऽस्येति असुरः प्राणी , असुरस्याय मिति आसुरः, प्राण्याश्रयो भूलोकः ) स्वशरीरेण तमसा (तमोरूप च्छायया) सूर्यं माच्छाद्य जगदान्ध्य कृतवान्"–इति तत्र मादृशीयं भाष्यम् । अत एतेन गर्गमिश्राण्ण (१८० (श्लो०)—

प्राणिन: सन्तीति च गम्यते। एभ्य: षड्भ्य एव भूलोकेभ्य: ऊर्द्ध मादित्यस्तपति। एकस्यास्यैव सूर्यस्य रश्मिभि: षडेवेमे आबद्धा:, भ्रमणशीला:, प्रकाशमाना:, सृष्टिस्थितिप्रलयहेतुवायुविद्युद्वृष्ट्यादिवन्तश्चेत्यपि। चन्द्र: पृथिव्या उपग्रह इति पृथिवीग्रहणेनैव तद्ग्रहणं सिध्यति; स्वस्वोपग्रहसहितानामेव शनैश्चरादिराह्वन्तानां ग्रहाणामिह पृथिवीत्वेन परिगणन मिष्टमित्येवास्या: पृथिव्या उपग्रहस्यैतस्य चन्द्रमसो न क्वचं पृथग् ग्रहण मिति सुप्रत्येतव्य मेव।

एषां तु सर्वेषां शनिगुरुकुजसूर्यबुधशुक्रराहूणां सप्तानां स्वर्गत्वेन स्तुतिरपि श्रूयते ब्राह्मणेषु। तद्यथा— "रोहति सप्त स्वर्गाल्लोकान् य एवं वेद"-इति (ऐ० ब्रा० ५. २. ५.), "सप्त वै देवलोका:"-इति च (ऐ० ब्रा० ४. २. ३.)। सर्व मेतदेवोपपद्यते 'देवानां' रश्मिनां सर्वत्रेव विद्यमानत्वादिति।

यद्यप्येषु सप्तसु सूर्यस्त्वेक: स्थिर इति श्रुतित एव प्रतिपादितं पुरस्तात् (१०८३०), तथाप्यस्य सर्वग्रहोपग्रहसमन्वितस्य सौरजगन्मण्डलाधिपस्यापि ध्रुवाद्याकर्षणबलेन भ्रमणं सम्भाव्यते; सामवेदे "द्यौर्नौस्तस्या मस्तावादित्य ईयते'-इत्यादिश्रवणात् (धार० गा० ६. २. २१.)। मदीयत्रयीटीकायां तद्व्याख्यानञ्च द्रष्टव्यम्। वस्तुत: सौरजगन्मण्डलस्थितानां भस्मादादीनां दृष्ट्या सूर्यस्य गतिराहित्येऽपि सौरजगन्मण्डलस्य न तथात्व मिति सर्वसिद्धान्त:। अत: सर्वतोऽधिकविस्तृता भवत्यस्य कक्षा (भ्रमणमार्ग:), तत्ते न्यूना शनैश्चरस्य, ततो न्यूना जीवस्य, ततो न्यूना मङ्गलस्य, ततो न्यूना राहो: (पृथिव्या:), ततो न्यूना शुक्रस्य, बुधस्य तु ततोऽपि न्यूनेति। अत इद श्रूयते— "परो वरीयांसो वा इमे लोका अर्वाग्गरीयास:"-इति (ऐ० ब्रा० १. ४. ८.)॥

ब्रूमः— एतादृश्यश्रुतिषु श्रुतो द्युशब्दो नून मन्तरिक्षलोकस्योपल-चकः। एतावतैवान्तरिक्षस्य पर्जन्यद्देत्वग्निधूमस्यापि द्युलोकाश्रयणं नानुपपन्नम्— "घृतेन त्वावर्द्धयन्नग्न आहुत धूमस्ते केतुरभवत् दिवि श्रितः"–इति (ऋ० सं० ५. ११. ३.)। "दिवि सोमो अधिश्रितः"–इत्यत्राप्येव मेवावगन्तव्य मस्ति ( ऋ० सं० १०.८५. १.)। तत्वतस्तु "चन्द्रमा अप्स्वन्तरा सुपर्णो धावते दिवि"–इति (वा० सं० ३३. ९०.) इत्येवमादिश्रुतिभ्यः 'सुपर्णस्य' सूर्यस्य द्युस्थत्वम्, तदधः 'अप्सु' अन्तरिक्षे चन्द्रमसः स्थान मित्येव ध्रुवम्।

अथाप्यस्य चन्द्रमसोऽप्यवमस्वर्गत्व मुररीकार्यम्। अत एव "सहस्राश्वीने वा इतः स्वर्गो लोकः"–इति (२. २. ७.) ऐतरेयश्रुतं सङ्गच्छते। आश्वीनं नामेह मार्गस्य परिमाणम्; एकस्मिन्नहनि यावन्त मध्वान मतिक्रामत्यश्वः; तावानेवाध्वा आश्वीन इत्युच्यते। तथा ह्यमूत्रयदाचार्यः पाणिनिः— "अश्वस्यैकाहगमः"–इति (५. १. १८.)। यथा द्वाह्निकं सार्धद्वियोजनगमन सुकरं मनुष्याणाम्, तथैव षड्योजनगमन मश्वाना मिति लोकप्रसिद्धम्; एवञ्चेतो भूलोकात् षट्सहस्रयोजनान्तरे स्वर्गस्थितिरित्यभिप्रेत मेवास्य श्रुतिवचस इति स्फुटम्; स्वीकुर्वन्ति चाद्य-ज्यौतिषिका अप्येव मितो दूरत्वं चन्द्रमःकक्षाया इति चन्द्रमण्डल मेवात्र स्वर्गत्वेनाभिप्रेत मिति च नास्फुटम्॥

अथैवेद यत् श्रुतम्— "नव स्वर्गा लोकाः"–इति (४. ३. २.), तदेतत् शारीरनवप्राणाभिप्रायेणैव। एवं यदपि श्रुतम् "त्रय इम ऊर्ध्वा एकविंशा लोकाः, एकविंशत्यैवेमाल्लोकान् रोहति, स्वर्ग एव लोके चतुष्पञ्चिंशेन प्रतितिष्ठति"– इति ( ऐ० आ० १. १. ५.), तदेतच्च स्यात् विभिन्नाभिप्रायमूलकम्। एवमादिश्रुति-

*चन्द्रकाचा तु न सूर्यप्रक्रमणपरा, अपि खेतत्पृथिवीप्रक्रमणपरेति नात्र तस्या ग्रहण मिष्टम्। किन्तु चन्द्रपृष्ठस्य पितृलोकत्वेन स्वीकारात्, पितृणाञ्च स्वर्भोगाय तत्र गमनश्रवणाच्च तस्यापि स्वर्गत्व मन्यते ब्राह्मणकारैः। तथाहि— "तद् ये ह वै तदिष्टापूर्त्ते कृत मित्युपासते। ते चान्द्रमस मेव लोक मभि जयन्ते"–इति प्र० उ० १. ९। शतपथे ऽप्येवम् (१४. ९. १ १८.), छान्दोग्य ब्राह्मणेऽप्येव मेव (५ १०.)। वेदान्तसूत्रेष्वपीद मर्थ विचारितम् (३. १. २२—२७.)। तदीयन्यायमालाया मपीह कतिचिदधिकरणान्यारचितानि। तत्रैक मिदम् ३. १. ३—

"चन्द्र याति न वा पापी? 'ते सर्वे'–श्रुतिवाक्यतः।
पञ्चमाहुतिलाभार्थं भोगाभावेऽपि यात्यसौ॥
भोगार्थं मेव गमन माहुतिर्व्यभिचारिणी।
सर्वश्रुतिः सुकृतिनां, याम्ये पापिगति श्रुता"–इति।

अपि सुकृतिनां सूक्ष्मभोगपरिस्थितिलाभयोग्यपितृत्वाच्चन्द्रलोके विद्युदृष्टिजलाद्यौषधितन्नतागुल्मादीनां नास्त्येव प्रयोजन मिति तेषा मभाव एव। तस्मात् 'यूयम् एतत् (ऋ० सं० १.१६४.४१.)—

"भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नय'–इति।

तथाच यथास्मच्छरीरग्रहणाय चन्द्रपानीयादृत्पत्त्यर्थं तथ्या दीनां प्रयोजन मस्ति, न तथा तत्रत्यानाम्; किन्तु तत्रास्ति रश्मिरूपाणीनां प्रयोजन मिति, तेषां प्रभावो विद्यत एव। "यत्राद गोरमन्वत"–इति (१११६०—निरु०२. २. ७, ४. ४. ६) श्रुतौ तत् स्पष्टम्।

ननु तत्र 'दिवं जिन्वन्त्यग्नय'–इत्युक्तम्, न हि चन्द्रमा द्यौर्भुव्या चेति तत् कथ मिह मा नुमितिरूपपद्येत नाशोति। अत

–इति मन्त्रभागस्य व्याख्यायां यास्कः— "उत्तर.= उद्गततरो भवति, अधरः = अधो रः, अधः = न धावतीति, ऊर्द्धगति-प्रतिषिद्ध"–इति ( २. ३. १. )। तस्मात् पृथिव्याश्च ऊर्द्ध्वो भागः स्वर्ग, तद्विपरीतोऽध प्रदेशो नरक इति चाभवत् सिद्धान्तः। पृथिव्याः सर्वोर्द्ध्वप्रदेश सुमेरुः, सर्वाधःप्रदेशः कुमेरु रिति च सर्व-ज्योतिषशास्त्रप्रसिद्ध'। तत एव सुमेरो' पुण्यात्मनिलयत्वम्, तथा कुमेरोः पापात्मालयत्वं च वर्णित मनेकत्र।

उत्तरदिङ्नामबीज मपीद मेव। पृथिव्येषा सदैव सूर्याभिमुखी-त्यस्याः पुरत सूर्यः सदैव राजते, तत इवैषा दिक् पुर इत्युच्यते, प्राचीति च। सूर्याभिमुख बध्यमत्या अस्या पृथिव्याः पश्चाद्भाग एव पश्चिमा, प्रतीचीति च। अस्या. खलु यस्या दिशि शिरोव्यपदेश-भाक् सुमेरुप्रदेशो विद्यते, सा ऊर्द्ध्वतमेति उत्तरा, उदीचीति च। यस्यान्तु पादतलभूत इति पातालव्यपदेशभाक् कुमेरुप्रदेशः, सैवाधोऽधरा, अवाची, दक्षिणेति च। तत्राधोभुवनरूपे कुमेरु-प्रदेशे समुद्रोदकमाचुर्यादीश्वराधीनप्रकृतिनियमाद् बहुत्रैव वाडवा-नला' प्रज्वलन्तीति तदधान्तरा दिक् आग्नेयीत्युच्यते। त एव वाड-वाग्नयः पापिना दमनाय दहनकुण्डात्व्याख्यायन्ते; अतः स एवात्यः पापलोकः। तत्र चाग्नेः प्राधान्य मिति स एव प्रदेशो यमलोकः॥

सोऽधो लोक एव प्रथमो यमलोकः, एष पृथिवी-देवो ऽग्नि-रेवात्र यमो नाम। तदिदं श्रूयते— "अग्निर्वाव यमः, इयं यमी"–इति तै० सं० ३. ३. ८. ३; ऐ० ब्रा० ६. २. १. १०। 'इयं'-शब्देनाप पृथिवी गम्यते।

एतावेव यमीयमाववलम्ब्य यमयमीसंवादरूपं यत् सूक्त माम्नात मार्षाभ्याम्नाये ( १०. १०. ), तत्र सप्तम्येषा—

पश्चात्ता तात्पर्यादिक वेदार्थचिन्तनपरैर्विद्वद्भि सत्सविप्रवरै शाब्यादिभि स्वय मेवोहनीयम्। "बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति"–इति (७ ७ २.) नैरुक्त वा स्यात तेषा शरणम्॥

वस्तुत भूर्लोक एवैको मुख्य स्वर्गो लोक सर्व मध्यमहिता सम्मत। तस्मादाम्नात एव मन्त्र सर्ववेदेषु—

"उद्वयं तमसस्परि ज्योति पश्यन्त उत्तरम्।
देव देवत्रा सूर्य मगन्म ज्योतिरुत्तमम्"–इति ऋ० स० १.५०.१०।

"उद्वयं तमसस्परि स्व पश्यन्त उत्तरम्।
देव देवत्रा सूर्य मगन्म ज्योतिरुत्तमम्"–इति वा० स० २०.२१।

उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम्।
देव देवत्रा सूर्य मगन्म ज्योतिरुत्तमम्" इति तै० स० ४ १.७ १०।

उद्वयाम्। तमसस्परी२। ज्योति पश्यन्त उत्तरा२म्।
स्व पश्यन्तउत्तरा२म्। देवन्देवत्रा२सू२३४रीम्।
अगन्म ज्योतिरुत्तमा२म्"–इति सा० स० आरण्यसाम।

"उद्वयं तमसस्परि रोहन्तो नाक मुत्तरम्।
देव देवत्रा सूर्य मगन्म ज्योतिरुत्तमम्"–इति अथ० स० ७.५३ ७।

शाखाभेदहेतुषु योऽन्यतमो वर्णित पाठभेदो नाम, तन्निदर्शन भूतश्चेद मन्त्र चतुर्वेदीयपञ्चशाखावचन मिति वेद मन्तव्यम्।

अथैवमादिश्रुतिषु उत्तरमन्दस्य स्वर्गवाचकत्वरादिगम्दविशेष णत्वेन शुतत्वात् अस्या पृथिव्या अप्युत्तरो भाग स्वर्ग इति व्यप दिष्ट। तथ श्रूयते "उत्तरो वा अमावत्ये"–इति श० ब्रा० ८ ६.१ १४। 'असौ' स्वर्ग, 'अस्यै' अस्या पृथिव्या 'उत्तरो' ऽ' इति तदर्थ। अस्या इति षष्ठ्यर्थे चतुर्थी (पा० २.३ ६२ सू० १ वा०)। आह च "स उत्तरस्मादधर समुद्रम् (ऋ० स० १०.९८ ५)'

अथैतत्सूक्तादनन्तरं पितृसूक्त माम्नातम् , तस्यैवादिमैषा—

"उदीरता मवर उत्परास:
उन्मध्यमा: पितर: सोम्यास:।
असुं य ईयुरवृका ऋतज्ञा-
स्ते नोऽवन्तु पितरो हवेषु"–इति।

सूर्योऽपि यम उच्यते। अत एव द्युस्थानदेवतास्वपि पठितं यम इति पदम् (५. ६. १७.)। सूर्यपरो निगमश्च यमशब्दस्य प्रदर्शितोऽयं यास्केन (ऋ० सं० १०. १३५. १.)—

"यस्मिन् वृक्षे सुपलाशे देवैः सम्पिबते यमः।
अत्रा नो विश्पतिः पिता पुराण अनु वेनति"–इति।

"यच्छति यमो रश्मिभिरादित्यः"–इति च निरु० १२. ३. १०।
अत एवाथर्वसंहितायां वशादायिनां यमराज्ये यत् सर्वकामावाप्तिफल माम्नातम् , न तत् सूर्यलोकरूपप्रधानस्वर्गादृतेऽन्यतमे स्वर्गे सम्भाव्यते। यथा द्वादशे: ११, ४, ३५—

"सर्वान् कामान् यमराज्ये वशा प्रददुषे दुहे"–इति॥
अथ तदपरार्द्धे वशाप्रार्थनारोधकारिणां नरकगमनञ्चाम्नातम्—

"अथाहुर्नारकं लोकं निरुन्धानस्य याचिताम्"–इति।
यमलोकात् पापलोकेषु पतनञ्च श्रुतम् अथ० सं० १२. ५. ६४—

"यथायाद् यमसादनात् पापलोकान् परावतः"–इति।
तृतशाखीयमन्त्रश्चैकः प्रदर्शितोऽत्र यास्केन (१. ३. ६.)—

"हविर्भिरेके स्वरितः सचन्ते
सुन्वन्त एके सवनेषु सोमान्।
शचीर्मदन्त उत दक्षिणाभि-
र्नेञ्जिह्मायन्त्यो नरकं पताम"–इति।

"यमस्य मा यम्यं१ काम आगन्
त्समाने योनौ सह शेय्याय।
जायेव पत्ये तन्वं रिरिच्यां
वि चिद् वृहेव रथ्येव चक्रा"—इति।

अन्तरिक्षलोकस्तु द्वितीयो यमलोकः, अन्तरिक्षदेवो वायुरेवात्र यमो नाम। तथा ह्येष यमशब्द आम्नातो निघण्टौ मध्यस्थानदेवतासु (५. ४. १०.)। व्याख्यातश्चैतद् यमपदम् "यमो यच्छतीति सतः"—इति यास्केन (१०. २. ७.)। उदीरतामिति पितृसूक्तगतमन्त्रस्य व्याख्यानकाले व्यक्तमुक्तश्चैतत्तेन—"माध्यमिको यम इत्याहुः"—इति (११. २. ६.)। स एष यमो जनानां सङ्गमनो वायुरेव। तथाहि ऋ॰ सं॰ १०. १४. १—

"परेयिवांसं प्रवतो महीरनु
बहुभ्यः पन्थामनुपस्पशानम्।
वैवस्वतं सङ्गमनं जनानां
यमं राजानं हविषा दुवस्य"—इति।
"यो ममार प्रथमो मर्त्यानां
यः प्रेयाय प्रथमो लोकमेतम्।
वैवस्वतं सङ्गमनं जनानां
यमं राजानं हविषा सपर्यत"
—इति च अथ॰ सं॰ १८. ३. १३।

विवस्वान् सविता चादित्यः; तत्प्रसूत एव वायुर्वातीति वायोर्वैवस्वतत्वम्। तथाहैव—"सवितृप्रसूतो ह्येष एतत् पवते"—इति (१. ३. १.)। यथेहत्यानां मनुष्याणां राजा अग्निर्नाम यमः, तथैवान्तरिक्ष्याणां वायुर्नामेति, स एव यमो पितृराडित्युच्यते।

मानससरोवरप्रदेशादे , ततोऽप्युत्तरस्थोत्तरकुरुप्रदेशस्य च स्वर्ग त्वचाहु पौराणिका· ; अथ्यार्यावर्त्तपादतलरूपस्य चाग्नेय्या दिशि स्थितस्य, अत एव पातालस्य प्राग्ज्योतिषाध प्रदेशस्य नरकत्वम्, तत्प्रदेशाधिपतेर्नरकराजत्वञ्चेति । तदत्र रमणनामत एव तत्प्रदेशस्य रमणीयत्वेन स्वर्गतुल्यत्व ज्ञापितम् (महा० भी० प० १०८. ६६ ), मानससरोवरादिप्रशसाकथा त्विह पूर्व मेव वर्णिता ( ४१, ६७, ६८पृ०) , तथा "मुरश्च नरकश्चैव शास्ति यो यवनाधिप भगदत्तो नरकराट्"–इत्यादिवचनात् ( महा० स० प० १४ १५ ) प्राग्ज्योतिषप्रदेशस्य नरकत्वञ्च सुव्यक्तम् ।

अपि चार्यावर्त्ते गङ्गादिनिम्नगाप्रवाहदर्शनाञ्चावगम्यते गङ्गा प्रभवादिदेशाना मुच्चैष्ट्रम् , वङ्गप्रभृतसङ्गमादिस्थानाना मतिनीचै ष्ट्रञ्च , आयुराकृतिप्रकृतिवलव्यवहारादिदर्शनतोऽपि प्रतीयते कुरु पाञ्चालादीना देवत्व वाङ्गोत्तरवाङ्गादीना मतथात्व मिति ।

तत्वतस्तु ययास्या पृथिव्या मध्यन्तरिचद्युलोकयो· स्थितिरुप लभ्यते, यथा चास्मच्छरीरेष्वपि त्रिलोकाधिप त्रिदेवाना मग्निवाय्वा दित्याना मस्ति विद्यमानतेति त्रिलोकीत्व मयेषा वक्तु युज्यते , एव भूर्भुव स्वरिति त्रयाणा मेव लोकाना प्रीतिहेतुत्वात् त्रयाणा मेवास्ति स्वर्गत्व मपि, पर तत्राप्यधममध्यमोत्तमभेदो नून मन्तव्य , तथा च सूर्यमण्डलान्तर्गब्रह्मलोक एवोत्तम स्वर्ग । एतदप्याम्नातम्—

"अष्टचक्रा नवद्वारा देवाना पूरयोध्या ।
तस्या हिरण्यय कोश स्वर्गो ज्योतिषावृत ॥
तस्मिन् हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते ।
तस्मिन् यद् यच्च मात्मन्वत् तद् वै ब्रह्मविदो विदु "
–इति अथ० स० १०. २ ३१, ३२ ॥

'एके' ज्ञानिनः 'हविर्भिः' अग्नौ हविःप्रक्षेपादिभिर्निल-कर्मानुष्ठानमात्रैः 'इतः' अस्माल्लोकात् 'स्वः' स्वर्गं सूर्य्यलोकं (ब्रह्मलोकं) 'सचन्ते' गच्छन्ति; 'एके' यज्वानः ज्योतिष्टोमादौ 'सवनेषु' प्रातर्माध्यन्दिनतृतीयनामकेषु 'सोमान् सुन्वन्तः', 'इतः स्वः (चन्द्रलोकं) सचन्ते'—इत्येव; 'उत' अपि 'दक्षिणाभिः' दाक्षिण्यैः 'शचीः' कर्माणि 'मदन्तः' कुर्वन्तः, 'इतः' गत्वा, पुनरिम मेव 'स्वः' भूस्वर्गं 'सचन्ते' आवर्त्तन्ते। 'नेत्' नैवं चेत्, 'जिह्मायन्त्यः' जिह्मायन्तः, पापानुष्ठानं कुर्वन्तो 'नरकम् पताम' इति जानीयुरिति। तदेव मत्र चतुर्षु मन्त्रपादेषु चतुर्विधाना मस्माकं चतुर्णां गतिर्निरूपितेति सुव्यक्तम्।

"नरकं न्यरकं नीचैर्गमनम्, नास्मिन् रमणं स्थान मस्य मप्यस्तीति वा"—इति, "पापः पाता पेयानाम्, पापत्यमानो वा, अधाडेव पततीति वा पापत्यतेर्वा स्यात्"—इति च नि० १. ३. ६५. १, २.। "नाक आदित्यो भवति; नेता भासा ज्योतिषां प्रणयः ०—० क मिति सुखनाम, तत्प्रतिषिद्धम्, प्रतिषिद्धं प्रतिषिद्ध्येत। "न वा अमुं जग्मुषे किञ्च नाकम् (ता० ब्रा० १०. १. १८.) न वा अमुं गतवते ('किञ्चन अकम्') किञ्चनासुखम्; पुण्यकृतो ह्येव तत्र गच्छन्ति"—इति (२ ४. २.)। "न हि तत्र गताय कस्मैचनाकं भवति"—इति च शत० ब्रा० ८. ७, १, २४। तदेवं यथा सुकृतिना पुण्यफलपुरस्कारभोगाय भवति स्वर्गगमनम्, तथैव पापिना पापफलोपभोगाय भवत्येव नरकगमन मिति सुवचम्॥

अथ यथा सुमेरोः स्वर्गत्वं वर्णितम्, कुमेरोर्निरयत्वञ्च (२२०, २२१ पृ०), तथैवाद्यतनायावर्त्तस्यास्य पश्चिमोत्तरभूभागस्य काश्मीरादेः रमणत्वं, ततोऽप्युत्तरस्य हिमवत्पृष्ठस्य-

प्राय सार्वकालिकोऽये एव बोध्य. । अत एव "व्यत्ययो बहुलम्" –इत्यादि (३. १. ८५.) सूत्रजात विदधतापि भगवता पाणिनिना सूचितम्— "छन्दसि लङ् लुङ् लिट."–इति (३. ४. ६.) । एवञ्च "यथापूर्वं मकल्पयत् ( १० १९०. १—३. )"–इत्येवमादौ 'यथा-पूर्वम्' पूर्ववदेव 'अकल्पयत्' सदैव कल्पयतीत्यादयर्थो मन्तव्य. । एव हि यथा ह्य. सूर्य उदेत्, यथा चाद्य उदेति, तथैव श्वश्च उदेष्यतीतिवत् सदैवैकरूपया सृष्टिक्रियया भवितव्य मिति तन्मन्त्राशय । एवमेवैवमादिषु सर्वत्रैव लङ् लुङ् लिटा सार्व-कालिकोऽर्थो वेदितव्य इति ।

अथ द्वितीय ।— अध्यात्माधिदैवतार्थानां मेव वैदिकमन्त्राणां प्राधान्यम्, अधियज्ञानान्तु न तथात्वम्, यज्ञयज्ञाङ्गकर्मादिविधा-यकब्राह्मणादिवचनानां मादिवेदभाष्यत्वेन बहुपरतन्त्रत्वसिद्धान्तात् । एवञ्चासीत् कृतयुगेऽध्यात्ममन्त्रार्थप्रियता, त्रेताया तथाधिदैवतार्थ परता च, द्वापरे एवाभवन्मन्त्राणा मधियज्ञार्थप्रवणता चेति हि केषाञ्चित् वेदतत्त्वार्थचिन्तापरायणानाम् ।

अतएवोक्त मनुसंहितायाम् ( १. ८६. )—

"तप. पर कृतयुगे त्रेताया ज्ञान मुच्यते ।

द्वापरे यज्ञ मेवाहुर्दान मेक कलौ युगे"–इति ।

अस्तिमस्त्वेष ।— यावत्य सृष्टिकथा ब्राह्मणग्रन्थेष्वेव सन्तुता, सर्वा एव ता कल्पनामूलिका, किञ्चिद्विज्ञानख्यापिका, तत्तत्प्र करणगतोपदेश्यसाधिकाय, यथा पातञ्जले महाभाष्ये सन्ति बहव एव एकदेशमृतयस्तथैति । अत एवोक्त निरुक्तकारे "बहुभक्ति वादीनि हि ब्राह्मणानि भवन्ति"–इति (७. ७. २.) । तथेद मार्षाभ्याम्नाये विस्पष्ट माम्नातम् ( १. १६४. ४. )—

स एषः स्वर्गो दुरारोहः। तस्मात्तत मिहापि— "स्वर्गो वैलोको दूरोणम्"–इति ( ४. २. ६. )। यागादिसाधन मन्तरा न कोऽपि तत्र गन्तुं शक्नोतीति यत इति भावः। आम्नायते चैतत्— "स्वर्ग एव तल्लोक यजमानं गमयति"–इति ( ४. १. ४. )। एवञ्च स्वर्गि गमिषूणां घोरलोकाद्यन्यतमे स्वर्गे प्रवेशसामर्थ्योपपादन मेवाग्निष्टोमादिफलम्, तदुपदेश एवैतस्य प्रयोजनं सिद्ध मिति शम् ॥

---

अथैतदैतरेयालोचन मुपसंहरन्तोऽपि किञ्चिद्वदामः।—

ऐतरेय मालोचयितुं प्रवृत्तैरस्माभिः प्रसङ्गतोऽपरेऽपि बहवो वैदिकविषयाः समालोचिताः, किन्तु "तेन इत्तरिते तेषां प्रामाण्यं विप्रलब्धत्तः"–इति मीमांसाभाष्यवचनतो वेदार्थविद्वांसां क्लृप्तप्रमाणानां पुराणादिवचनानां मपीह बहुत्र स्वमतपोषणायायोल्लेखः कृतः, सत्यानुरोधतोऽद्यतनसमाजविरुद्धा अप्यत्र लिखिताः स्युः केचन, मानुषप्रकृतिभ्रमविजृम्भिता अवश्यम्भाविनोऽपि भावाः सम्भवाः स्युस्तत्र केचन। तदेवमादिषु किं करणीय मासीदस्माद्दृशानां मल्पमतीनां मयनल्पचिन्तालोडितशिर्षाणां मिति 'विद्वांसो वै देवाः'—'सत्यसंहिता वै देवाः'–इत्यादिश्रुत्यर्थानुगता देवा एव विचारयन्तु, यतस्त एवात्र नः शरण मिति।

अथेहालोचितेभ्योऽन्येऽपि सन्ति बहवः सत्यसिद्धान्ताः, तेष्वेते त्रयो नून मधिगन्तव्या वेदसत्यार्थजिज्ञासुभिस्तत्रैव प्रथम.—

वेदे यथा लेट्लकारस्य प्रयोगो न तु व्यत्ययविशेषः, तथैव अतीतानागतवर्त्तमानकालबोधका लङ्लुङ्लिटः प्रत्ययाः भवन्ति छान्दसाः; न च ते व्यत्ययत्वेन स्वीकार्याः। तथा च यत्र यत्र लङ्लुङ्लिटा मन्यतमस्य प्रयोगः श्रुतः, तत्र सर्वत्रैव